द्वितीय वर्षे | सौरवैशाखज्येष्ठयोः । शकाब्दाः १८५१ । | प्रथम-द्वितीय संख्ये ।

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



सम्पादकसंघः—

महामहोपाध्याय श्रीयुक्तानन्तकृष्णशास्त्री ।

श्रीहाराणचन्द्रशास्त्री ।

श्रीराजेश्वरशास्त्री द्रविडः, श्रीताराचरणभट्टाचार्यः;

श्रीश्रीजीव न्यायतीर्थः एम्. ए. ।



वाराणस्याम्—

साङ्गवेदविद्यालय यन्त्रालये मुद्रयित्वा

ब्राह्मणमहासम्मेलन कार्यालयात्

प्रकाशितम् ।



अग्रिमवार्षिक मूल्यम्

रूप्यकत्रयम् ।

एतत्संख्याया मूल्यम् ।

आणकाष्टकम् ।

## ब्राह्मणमहासम्मेलननियमाः ।

१. अस्याः पत्रिकाया अग्रिमवार्षिकमूल्यं रूप्यकत्रयम् ।

२. प्रेषणव्ययो ग्राहकैर्न देयः ।

३. प्रबन्धलेखकेषु यस्य प्रबन्धो यस्यां संख्यायां प्रकाशितो भवेत् तत्संख्याया एकं खण्डं तस्मै विना मूल्यं प्रदीयेत ।

४. प्रबन्धादिकं समालोचनार्थं पुस्तकादिकं च सम्पादकसमीपे, मूल्यं च कार्याध्यक्षस्य समीपे प्रेषणीयम् ।

५. पत्रमिदं नियमेन सौरमासस्य अन्तिमसप्ताहाभ्यन्तर एव सर्वत्र प्रेषितं भवेत्। येन खलु ग्राहकेण तत्पत्रं यथाकालं नाधिगम्येत तेन तत्परमासस्य द्वितीयसप्ताहमध्य एव स्वपोष्टआफिसस्थाने तदन्विष्य तत्फलं वयं विज्ञापनीयाः नातः परं कस्याप्यभियोगः श्रूयेत ।

६. अस्याः पत्रिकायाः विद्यार्थिनां कृते वार्षिकं मूल्यम् २) रूप्यकद्वयम् ।



ब्राह्मणमहासम्मेलन कार्याध्यक्षः ।

ब्राह्मणमहासम्मेलन कार्यालयः,

साङ्गवेदविद्यालय प्रेस, रामघाट,

वाराणसीनगरम् ।



पुमर्थाश्चत्वारः किमुत निगमा ऋक्प्रभृतयः
प्रभेदा वा मुक्तेर्विमलतरसालोक्यमुखराः ।
मुखान्याहो धातुश्चिरमिति विमृश्याथ त्रिबुधा
विदुः शिष्यान् हस्तामलकमुखराञ्छङ्करगुरोः ॥१॥

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः ।" [ महाभारतम् ]

द्वितीयवर्षे } सौर वैशाखः शकाब्दाः १८५१ । { प्रथम संख्या

कुशिक्षामोहमलिनं जगदुद्भासयच्छनैः ।
वरेण्यं सवितुस्तेजः श्रेयांसि विदधातु नः ॥



## वर्षारम्भे निवेदनम् ।

प्रकृतिदेव्या अविरतविवर्त्तनप्रभावेण सुदीर्घ एको वर्षो महामहतः कालस्य सुविशाले क्रोड़े चिराय विश्राममलभत । अतीते वर्षेऽस्मिन्नेव समये ब्राह्मणमहासम्मेलनमिदमात्मानं प्रकटीकृत्य सनातनधर्मसमाजसन्निधौ स्वोद्देश्यं न्यवेदयदतस्तद्दिनमेतस्य चिरस्मरणीयतामभजदित्यत्र नास्ति संशयलेशः । यैः खल्वस्य कार्यस्य सम्पादनभारः समग्राहि, न जानीमः कियती त्रुटिः कियान् वा कर्त्तव्यापलापस्तेषामत्र समजनीति । तदद्य नवीनवर्षारम्भे भूदेवानां ब्राह्मणानां परमश्रद्धेयानां सनातनधर्मसेवकानाञ्च पुरतः शिरोनिहितकरपुटास्ते तासां त्रुटीनां तेषाञ्च कर्त्तव्यावहेलनजनितापराधानां व्यपनोदनार्थं क्षमां करुणाञ्च प्रार्थयन्ति ।

ये खलु महापुरुषधौरेयाः सनातनधर्मं समाजञ्चाधिकृत्य चिन्तयन्ति त एवाब्रुवन् सम्प्रति वर्तमानस्य युगसंकटस्य सन्धिमुहूर्ते ब्राह्मणमहासम्मेलनसदृशस्यैकस्य सामयिकपत्रस्य प्रयोजनमस्तीति । वयमप्येतस्य तेषां वचनस्य सत्यतायाः प्रमाणं तदैवाध्यगच्छाम यदा खलु वयमपश्याम भारतवर्षस्य विभिन्नप्रदेशतो ब्राह्मणमहासम्मेलनजिघृक्षूणामसंख्येयानि प्रार्थनापत्राणि प्रतिदिनं समागच्छन्तीति ।

अभावानामभिव्यक्तिं द्वारीकृत्यैव कर्मणां विकाशो भवति । युगधर्मस्य विरुद्धाचरणं धर्मप्राणानामार्यसन्तानानां चित्तेषु कस्यचिदभावस्य प्रेरणामाविरभावयदिति वयमनया घटनापरम्परया सम्यगुपलब्धुं प्राभवाम । प्रच्छन्नरूपाः सनातनधर्मवह्निकणा यद्यपि आर्यसन्ततीनां हृदयान्यालोड़यन्ति तस्य तु सुव्यक्तं प्रमाणं वयमनेनैकेन वर्षेणैव सविशेषमन्वभवाम ।

सोऽयं सनातनो धर्मः, प्रतियुगं प्रबलया वात्यया यस्य शिरो मुहुर्मुहुः प्राकम्पत, न खलु विधर्म्मिणां करालाः, करवालाः सनातनधर्ममन्दिरं विध्वंसयितुं कतिकृत्वः कतिधा वा नाऽत्मानं प्राकाशयन्, परमेतेषां तदासुरमपि बलं पुनः पुनः प्रतिहतं सत् परावर्त्तत । न खलु शस्त्रप्रभावेण नित्यस्य वस्तुनो ध्वंसमापादयितुं कदापि कोऽपि प्राभवदिति तु बहुशः प्रमाणपदवी-मध्यारोहत् । प्रतिपन्नमितिहासस्येयमसौ सत्यवार्त्ता सौवर्णैरक्षरैश्चित्रिता सती मानवस्य जगतः सुविशाल-मेकमध्यायं ससान्त्वनं सबलं च करोति, तेनैव च बलेन बलवन्तो भारतीया अद्यापि सर्वेषां पुरतः स्व-स्वातन्त्र्यं स्वाराज्यञ्च कामयितुं न विरता भवन्ति ।

यद्यपि प्रकृतिः परिवर्त्तनस्वभावा विकारभावा-पन्ना च, तथापि तद्बहिः सत्यमविनश्वरमेकं किमपि वस्त्वप्रतिहतप्रभावेण केन्द्रशक्तिं वर्द्धयत् स्थिरं वरीवर्त्ति तस्य तु परिवर्तनं वा विकारो वा न किम-प्यस्ति । प्राचीना भारतीया अनुभूतिमहिम्ना तद-वगन्तुं प्राभवन् अतः साम्प्रतमपि भारतीयास्तदनु-ष्ठानदीक्षिताः सुबहूनि युगान्तराण्युत्तीर्य नानाविधान् विघ्नानपसार्य स्वं वैशिष्ट्यं संरक्षितुं समर्था भव-न्ति । ये तु विकाररहितस्य सत्यस्य वस्तुनोऽस्तित्वं विस्मृत्य बाह्यप्रकृतेरापातमधुरया वञ्चनाचातुर्या मुग्धाः सन्त आत्मानं विस्मृत्य अन्धा इवान्येषामनु-वर्तनं कृतवन्तस्तेषामेवाधःपतनं संजातम् ।

सुमहदिदं सौभाग्यं भारतवर्षस्य यदसौ निष्पिष्टो-ऽपि परःशतैर्विप्लवैर्न खलु स्वस्वरूपं व्यस्मरत् । यथा प्रयोजनं स्वानुष्ठेयं पन्थानं च निर्णेतुं समर्थोऽभवत् ।

इत्थं यदा यदाऽबाधा दानवोत्था भविष्यति ।
तदा तदाऽवतीर्याहं करिष्याम्यरिसंक्षयम् ॥

यस्या इयमुक्तिस्तस्या एव महाशक्तेरचिन्तनीयः प्रभावोऽत्र निदानम् ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

भगवतो वासुदेवस्यापीयमुक्तिः पूर्वोक्तामेव प्रति-श्रुतिमनुसरति ।

ये खलु साम्प्रतं धर्मस्य समाजस्य च अद्वितीय-स्तम्भरूपा ये चाप्रतिमेन त्यागेन पाण्डित्येन मनीषया श्रुतिस्मृत्युक्तसदाचारपालनेन च भारतवर्षेऽस्मिन् महोज्ज्वलविग्रहा ग्रहा इव धरणीवलयं समुद्भासयन्तो विराजन्ते, त एव विश्वविख्यातपाण्डित्यानुभावा अखिलभारतवर्षीयब्राह्मणमहासम्मेलननेतारोऽस्य प्रचा-रयज्ञस्य ऋत्विक्पदमध्यासीनाः शासनदण्डं परिचाल-यन्ति, वयन्तु तेषामेवानुशासनं प्रचारयितुं पटहवाद-कानां भूमिकास्ववतीर्णाः स्मः । पूज्यचरणानामाचा-र्याणां सनातनधर्मावलम्बिनां महात्मनां च सेवैवास्य ब्राह्मणमहासम्मेलनस्य जीवनव्रतं, तच्चेदंशतोऽपि सिद्धं स्यात्तदा वयमपि धन्यम्मन्याः कृतकृत्याश्च भवेम ।

इय मस्माकमभ्यर्थना—हे भारतीया वर्णाश्रम-धर्म्मावलम्बिनो ब्राह्मणाः,क्षत्रिया,वैश्याः,शूद्राश्च, स्त्रियो वा पुरुषा वा यूयम्–युवानो वा वृद्धा वा यूयम्–धनिनो निर्धना वा यूयम्—ये वा के वा भवत यूयम्– सर्वे संग-च्छध्वम् यदि यूयमधर्मस्य बिभीषिकया भीतभीताःस्थ, यदि यूयं धर्मस्य ग्लानिमवलोक्य व्याकुला विषण्णा-श्च स्थ, तर्हि भारतगौरवाणां धर्माचार्याणां शान्तशीत-लासु चरणच्छायासु विश्रामं लभध्वम् । शास्त्राचा-र्याणां पुरतो नतकन्धरा जिज्ञासवो भवत, सर्वे संशया युष्माकं सुदूरपराहता भविष्यन्ति । पुनरप्य-चिरात् सनातनधर्मस्य सुविमलया प्रभया समुज्ज्वलं सद् भारतखण्डमेतदखण्डमहिममण्डितं भविष्यतीति ।

---

# युवसंलापः ।

(निवः०—म० म० पं० पञ्चाननतर्करत्नभट्टाचार्यः)

[ १ ]

( ग्राम्यः पन्थाः )

प्रथमो युवा। सखे मणिदेव ! चिराद् दृष्टोऽसि, क्व तावदवस्थितेन किमाजीवेनैतावान् कालस्त्वया नीतः ?

मणिदेवः। सखे सुरदेव, दिष्ट्या वर्धसे, महानगरीमधिवसता प्रमोदाजीवेन मया क्षणवदिदं वर्षद्वयं नीतम्।

सुरदेवः। यथा ते मुखप्रसादः, यथा च ते प्रीतिबहुला वाचोयुक्तिः तथा जानामि प्रमोदाजीवता खलु ते सविशेषेति, तदेतत् स्वरूपं निरवशेषमवगन्तुमिच्छामि।

मणिदेवः। महदिदमाख्यानं रहस्यं च, तदितो नातिदूरे समुपविश्य सायाह्नसमीरणसुभगेऽस्मिन् निदाघनिपीडितबहुशरीरिशरणन्यग्रोधतरुतले सर्वमावेदयामि, पुरतो हि स्निग्धजनस्य, रहस्यमाख्यानं त्वरत इवात्मप्रकाशनाय।

सुरदेवः। एवमस्तु।

[ २ ]

( न्यग्रोधतलम् )

मणिदेवः। सुरदेव ! जानासि नूनमिदानीं तरुणचेष्टितानि !

सुरदेवः। कथं न जानामि चिरसंबद्धानि ?

मणिदेवः। अनेनोपन्यासेन संशयानोऽस्मि।

सुरदेवः। कथमिव ?

मणिदेवः। यतश्चिरसंबद्धानीत्युक्तम्, वक्तव्यं पुनरचिरसंबद्धानीति ?

सुरदेवः। अध्ययनैकाग्र्यं, परीक्षासाफल्ये सानन्दोत्साहविलसितानि, तद्वैफल्ये चावसादसङ्कोचः, अर्जितविद्यस्य भृतिप्रेप्सा, तत्साफल्ये तत्र हालिकबलीवर्दवदात्मसमर्पणम्, तद्वैफल्ये च यथाधिगतवर्त्मावलम्बनमित्यादीनि मया चिरसम्बद्धानीत्युच्यन्ते।

मणिदेवः। इमानि तु चेष्टितानि पुरातनानि, साम्प्रतिकानि त्वन्यादृशानि। यत् सत्यमविदिततत्त्वस्त्वमपि, ततः स्फुटतीव मे हृदयम्। वक्त्राच्च मे धिक्कारवादो द्रागाविर्भवति ग्राम्यजीवनाय। ननु पृच्छामि, समाचारपत्रं पठ्यते न वा ?

सुरदेवः। स्वाध्यायाध्ययनादिकर्म्मव्यग्रतया नालब्धावसरस्य मे तत्पाठो घटते।

मणिदेवः। जीर्णपुस्तकालीकभाषणहृतचेतसस्ते तावती समुच्चशिक्षा विफलैवेति मन्ये।

सुरदेवः। अस्तु नाम मे यथा तथा, उत्सुकोऽस्मि त्वदुदन्तश्रवणाय। अतीते चास्मिन् सायाह्ने आवश्यककर्म्मान्तरायान्यत्र गन्तव्यम्, तदयमञ्जलिः प्रस्तूयतां विवक्षितवचनम्।

मणिदेवः। अद्य प्रथमदर्शनवेलायां न तावदवगतं यदावयोरेवं वैसादृश्यमुपजातमिति. तथापि आशैशवं स्निग्धोऽसीति कथ्यते, शङ्क्यते पुनः अरसिकेषु रसस्य निवेदनदौर्भाग्यदुर्ललितात् आशास्यते चाधिगततत्त्वो वैचित्र्यहीनग्राम्यजीवनमपहाय प्रतिक्षणं नवतामवलम्बमानं रमणीयं नागरिकजीवनमादास्यस इति।

सुरदेवः। सखे ! भाषणपाटवं ते चिरन्तनमद्यपुनरधिकतरं प्रतिभाति, किमत्र मे प्रतिवचनम्, प्रस्तूयतां प्रकृतं, शङ्कितमाशासितं वा किञ्चिद्भविष्यत्येव।

[ २ ]

## ( कथारम्भः )

मणिदेवः । शृणु यूनां सांप्रतिकचेष्टितानि,—तत्रादौ प्रयोजनं स्वाराज्यलाभः । चेष्टितानि च तदर्थानि ।

सुरदेवः—साधु प्रयोजनं, कानि पुनश्च्चेष्टितानि तदर्थानि ?

मणिदेवः । प्रतिवर्षं भवति तावदेको यूनामधिपतिः । सर्वथा सर्वेषां यूनां तन्मतानुवर्त्तनमेकम्,—तत्कृतकर्म्मानुकरणमित्यन्यत् एवंरीत्या प्रतिवर्षं भवत्येवाधिपतिवृद्धिः, मतं तु तुल्यं सर्वेषामेवाधिपतीनाम् । तन्मताविरोधेन स्वैराचरितमपरम् इति मूलचेष्टितानि—ततश्च प्रसृतानि चेष्टितान्तराणि ।

सुरदेवः । किं तन्मतम् ?

मणिदेवः । जातिभेदपरित्यागः, स्त्रीस्वातन्त्र्यम्, सतीधर्म्मोच्छेदः, विधवानां विवाहे विनियोगः, युवतिविवाहः,वर्णाश्रमधर्म्मत्यागेन हिन्दुधर्म्मानुरागः, समयस्थानामैकमत्यं चेति साध्यम्, साधनं च ब्राह्मणद्वेषः, शास्त्रद्वेषः, देशभक्तिश्च ।

सुरदेवः । सखे ! प्रायेण सर्वमेवेदं मन्दधियो मे विषमं प्रतिभाति ।

मणिदेवः । कथमिव ?

सुरदेवः । वर्णाश्रमधर्म्मपरित्यागेन हिन्दुधर्म्मानुराग इत्येकम्, जातिभेद परित्यागिनां युवतिविवाहं समर्थयमानानां ब्राह्मणशास्त्र विद्वेषिणां देशभक्तिरित्यन्यत् सतीधर्म्मोच्छेदसहितं स्त्रीस्वातन्त्र्यमितीतरत् विधवानां व्यभिचारे विवाहरूपत्वकथनमित्यपरम्, एवं विषमाचारेण परचरणसमर्पितात्मनां स्वाधीनतालाभ इति वह्निना शैत्यसम्पादनमिव भवति ।

मणिदेवः । मामैवं, वर्णाश्रमधर्म्म इति यदुच्यते, तदाधुनिकमाचारजातं, धान्यादेस्तुषादिवदकिञ्चित्करम् । नारिकेलस्य वहिरावरणं दशतो यथा न भवति तदम्बुशस्यास्वादः, तथा वर्णाश्रमधर्म्मरतस्य न भवति सत्य हिन्दुधर्म्मलाभः, यतो हिन्दुधर्म्मो नामैकात्मदर्शनं, यत्र "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इति रीत्या समदर्शनं सम्पद्यते । न खलु वर्णाश्रमधर्म्मस्तादृशे फलाय कल्पते, प्रत्युत अयम स्पृश्यः,अस्य स्पर्शे तावदद: प्रायश्चित्तम्, ब्राह्मणोऽहं वर्णगुरुः. मदासनमध्यासीनस्य शूद्रस्यैवं दण्ड इत्याद्यालोचनेन विषमदर्शनमेव जायते । एतदाचाररता ब्राह्मणा देशकल्याणपरम्पराविघ्नभूता विद्वेष्या एव, एतदुपदेशकशास्त्र द्वेषश्च युज्यत एव वस्तुतस्तत्र शास्त्रत्वोक्तिर्हि ब्राह्मणवचनानुवादरूपा, न तु वास्तवी, नहि शास्त्रं विषममनुशास्ति । तस्मात् शास्त्रं शास्त्रमिति यद् ब्राह्मणम्मन्यैरुच्यते तत्रैव द्वेषः, ब्राह्मणम्मन्याश्चेदानीं ब्राह्मणा इत्युच्यन्ते तेषु च द्वेषः सारभूतहिन्दुधर्म्मानुरागं साधयितुमलं भवति, अन्यथा तदादरेणासारवहिराचारानुरागमात्रमिति किं विषमम । विधवाविवाहस्य युवतिविवाहस्य च शास्त्रसिद्धत्वं सर्वथैव प्रथते । स्त्रीणामवरोधः, सतीधर्म्मवादश्च तासां निपीडनसाधनमात्रम् । धर्म्मश्च तदुच्छेदः । तथा च तादृग्धर्म्माचरणवन्तो न परचरणसमर्पितात्मानः, प्रत्युत स्वीयचिरन्तनाचारमेव ब्राह्मणकौशलजालपिहितप्रवृत्तिकं पुनराददानः सर्वथैव स्वाधीनतामधिगन्तुमीहन्ते, किमत्र वैषम्य मस्ति ?

सुरदेवः । सखे ! त्वदीयवचनमाकर्ण्य विस्मितो विषण्णश्चाहं ब्रवीमि, प्रासादविपरीतमार्गेण संचरमाणः प्रथमभूमिकामप्रविश्यैव निःश्रेणिकामतुल्लङ्घ्यैव प्रासादस्य तृतीयभूमिकामारुरुक्षसीति । यत् त्वया सत्यधर्म्मत्वेनोक्तमेकात्मदर्शनं नाम, तत् किं द्वेषाहङ्कारकामादिमलीमसैरासादयितुं शक्यते ? यदिचैकात्मदर्शनेऽनुरागः, कथं नाम पराधीनताजिहासा

भवति, नह्येकात्मतायां स्वपरभेदो युज्यते। अथ धर्म्म इति यदि वाङ्मात्रं तत् परित्यज्यतां तदालोचनम्। अथोच्यते तस्य धर्म्मत्वेऽपि स्वाधीनतालाभमन्तरेण नतत्सिद्धिर्भवति यावच्च न तत्सिद्धिस्तावत् स्वपरभेदो वर्त्ततएव, इति चेदायातं मार्गेण। तथाहि यद्येवं किमपराद्धं वर्णाश्रमधर्म्मेण, यावत् स्वपरभेदधीर्नापैति तावदनुष्ठेयो वर्णधर्म्मश्चाश्रमधर्म्मश्च। किमर्थ मिति चेदेकात्म बोधार्थमेव। नहि तद्बोधः सत्त्वशुद्धिमन्तरेण भवति, नच सत्वशुद्धिः स्वैराचारेण, किं तर्हि वर्णाश्रम धर्मानुष्ठानेनैव सम्पद्यते। यच्च जातिमात्राभिमानेन परावधीरणं तस्य धर्म्मरूपत्वं न शास्त्रसिद्धम्। वर्णभेदेन कर्त्तव्य भेदस्तु परस्परोपकारफलः, तदनुष्ठानेनाविशुद्धं रजस्तमश्च शाम्यतः। अविशुद्धे रजसि परिक्षीणे सत्वाभिमुखरजसा वैधकर्म्मप्रवृत्तौ तद्बलेन समुत्पन्ने तत्त्वप्रकाशे परमधर्म्मे मन्थनेनेवारण्ये हुतवहेमन्थन परिहारवत् कर्म्मनिवृत्तिः स्वयमेव भवति, अयमेव रजःपरित्यागः सत्वशुद्धिरित्युच्यते ततश्च तत्त्वप्रकाशनैरन्तर्य्येण तत्रैव परिनिष्ठा चिदेकरसाद्वयात्म सद्भाव इति मोक्ष इति चाभिधीयते। इति हि भूमिकारोहणक्रमः, त्वं तु सर्वसंयमपरिपन्थिनं स्वैराचारकान्तारमनुसरन् नगराभ्यन्तरस्थप्रासादायमानधर्म्मस्य तृतीयभूमिकासदृशं परमधर्म्ममेकात्मतत्त्वबोध सुलभं मन्यसे, अहो मोहः!

मणिदेवः। भो दार्शनिकमतल्लिके, जानास्येव मां तर्कविमुखम्, न खलु नीरसे वाक्प्रपञ्चे घटते मे प्रसक्तिः, कर्म्मैव मया सम्पाद्यते तत्र न ते बुभुत्सा तद् विरमत्वयं प्रबन्धः।

सुरदेवः। सखे, भवत्वेवं, किन्तु ते प्रमोदाजीवतावृत्तान्तमाकर्णयितुमिच्छामि।

मणिदेवः। सखे, भूतार्थमावेदयामि, विदितमस्त्येव श्रीमतो यद् गौडवङ्ग जनपदयोरधमशूद्राणामपि भूयसां विधवासंग्रहो नास्ति, वेणुजीविप्रभृतिषु द्वित्रेष्वत्यन्ताधमशूद्रेषु विधवासंग्रहोऽस्ति। तत्रापि संगृहीता विधवा तेषां माङ्गलिके कर्मणि नोपयुज्यते, संग्रहोऽपि न विवाहरूपः, ये तावद् विधवासंग्रहविमुखाः शूद्रास्तेषु व्यभिचारः साम्प्रतं नवीनालोकप्रकाशनिरस्तकुसंस्कारतमसां पुंसां लौल्येन नवोत्थापित हिन्दुविद्वेषप्रसूतहठकार परायणानां यवनानामाक्रमणेन च वर्द्धते। तमुपजीव्य, विद्यासागरमतमिति कृत्वा क्वचित् सम्पादितं ब्राह्मणादीनां विधवायाः संग्रहणं विवाहरूपतया समुदाहृत्य धनक्रीतानां केषांचिद् ब्राह्मणानां भाषणादिना समावर्जितचेतःसु तेषु शूद्रेष्वपरेषु च विधवासंग्रहण प्रवृत्तिप्रतिपादनाय वयं सन्नद्धाः तदुत्साहनाय प्रवृत्तेषु संवादपत्रेषु साफल्य वार्त्ता मृषापि सत्यतया जोघुष्यते। विधवासंग्रहाय दूत्यश्च भृतिभुजः संस्थापिताः। पणबाहुल्यादिना अतीतकन्यकासमयाः पादुकोपनेत्रालङ्कृता म्लेच्छविद्यामधीयानाः कुमार्य्यश्चात्र कृत्ये साहायकाय कृत्यान्तरव्यपदेशेन वा संगच्छन्ते। एतादृशसुखसम्मेलनमूलं प्रचारकार्य्यं ममाजीवः।

सुरदेवः सखेदं निःश्वस्याब्रवीत्, सखे,—एतेनेङ्गितेन तव चारित्रभ्रंशमाशंक्य नितरां दूनोऽस्मि स्पष्टमभिधाय मे शङ्कादूनता मपनय।

मणिदेवः। सखे श्रूयतां, चारित्रमिति जरतामीर्ष्यावादः, त्वमपि तदुपाहितभ्रमपाशनियन्त्रितो यौवनफलाद् वञ्चितोऽसि। सखे, स्फुरदोष्ठतामवलोक्य ते जानामि विवक्षुरसीति तथापि त्वामत्र विनिवार्य नागरवृत्तमकपटं वर्णयामि यदाकर्ण्य भ्रमान्धकारस्ते दूरं गमिष्यति। श्रूयतां यो विधवाविवाहो युवतिविवाहश्चोक्तः, तत्राकृतदाराणां तरुणानां महान् लाभः। 'फ्रेञ्चकाप' 'वेच्लरकप' इत्याद्याख्यानां गर्भरोधक यन्त्र विशेषाणां व्यवहारोऽपि तेषु वरीवृध्यते। सञ्जातानां कुमारीणां विधवानां वा गर्भक्रीडा यैर्हि निराक्रियते। दूत्याहृताहि विधवाः प्रथममेवं भोगाय युज्यन्ते,

पश्चाबाल्यनारीकेषु प्रदेशेषु विवाहव्यपदेशेन कैश्चिन्नेतृभिर्विक्रीयन्ते ।

केचिच्च दयाव्यसनिनः स्वकीयप्रभूतार्थव्ययेन विधवा साधव्य-साधनपुण्यपणनाशया तादृशनेतृणामर्थकामावेव सम्पादयन्ति । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ इतिन्यायेन मादृशा युवानस्तेषां नेतृणां सहायभूताः संगृह्णन्ति विधवा योषितः, ते च सहायभूता मादृशामन्तरायं निरस्यन्ति । जातिभेद व्यामोहपरिहाराच्च सर्वत्रैव सुलभं पानभोजनम् । एवं वृत्ता वयं प्रमोदेन वर्त्तयामः ।

[ ४ ]

( चिन्ता )

सुरदेवः समाकर्ण्य दोदूयमानहृदयश्चिन्तामापेदे, सोऽयं मे सखा आशैशवं शुद्धचारित्रो वर्षद्वयमसत्सङ्गेनैवं किल्विषी जातः, यथास्यालापोऽपि पापाय भवति । न केवलमयमेकः, प्रतिदिनं वर्द्धत एवासद्गोष्ठीति स्पष्टमवगम्यते । दुर्जयो हि रिपुषड्वर्गः । तत्रापि यदि मुख्यानामंशतो ऽपिसाहायकं लभ्यते, समाजस्थितिभङ्ग एव करणीयपक्षे वर्त्तते, प्रतारकाश्च समाद्रियन्ते संवादपत्रादिमुखेन च नितरां प्रशंस्यन्ते, कुतस्तावदाशा यूनां चारित्ररक्षणस्य ।

यद्धि प्रतीच्यसमाजदोषजातं तदनन्तरायमादीयते, यच्च प्राच्यसमाजगुणजातं तदिच्छयैव परिहीयते ततस्ततो रूपलेशानाहृत्य तिलोत्तमेव ततस्ततो दोषप्रकर्षानाहृत्य निर्म्मीयते तावदेषा समाजमूर्तिर्या तिलाधमेति व्यपदेशलाभाय कल्पते ।

हा छात्रजीवनसारसर्व्वस्व ब्रह्मचर्य्य ! हा नारीहृदयसाररत्न सतीधर्म्म ! चिरमर्चितचरणयोर्भवतोरीदृशमवहेलनं तरुणकर्तृकमन्त्रैव पुण्यभुवि भारते वर्षे समेधमानमुपश्यतो द्विधेव मे भवति वक्षस्थली विषयजसुखमात्रलोलुपाः श्वेतचर्म्माणो नरवीराः सर्वानेव :विद्याबुद्धिप्रयत्नान् ऐहिकेषु प्रेयःसु नियुञ्जानास्तथा विजयन्ते यथा महर्षिवंश्या अपि पूर्वेषां मौर्ख्यमवगच्छन्ति, छद्मपिहितान्तरपशुवृत्तयो ऽर्थकामावेव परमपुरुषार्थौ मन्यन्ते, दूरापेतधर्म्माणो समुद्धरणव्याजेन नारीरधः पातयन्ति, हा धिक् ! भगवन्नखिललोकगुरो ! भारतं वर्षं प्रियक्षेत्रं देवस्य, यत् श्रुतं नेतृषु केषांचिद् विधवाविक्रयवाणिज्यं 'फ्रैञ्चकाप्' 'वाचिलार कापादिव्यवहरणं तरुणेषु, तेन प्रकम्पितहृदयोऽहमर्थये, परित्रायतां परित्रायतां भारतवर्षंश्वेतचर्म्मोहितदुर्वृत्तिविलसितेभ्यः, संह्रियतां वा कल्पान्तलीलाविजृम्भितेनेति ।

---

## भारतस्योन्नत्युपायः ।

[ नि०–म० म० पं० श्रीलक्ष्मणशास्त्री द्राविड़ः ]

इदानीं प्रायो भारते वर्षे सर्वत्रैव भारतवर्षस्याभ्युन्नतिं पराधीनतानिवृत्तिपूर्वकं स्वातन्त्र्यं च सम्पादयितुं बहव एव पाश्चात्यशिक्षाशिक्षिताः प्रायश्चत्वारिंशद्वत्सरेभ्य आरम्य कांग्रेससभा हिन्दू सभा प्रभृतिनानाविधं सम्मेलनं कारयन्तो वृत्तपत्रादिद्वारा व्याख्यानादिना सर्वत्र स्वमतं प्रचारयन्तः परं प्रयत्नमातन्वन्तो दृश्यन्ते, एवमेतावत्प्रयतमानानामपि तेषां न मनोरथावाप्तिः प्रत्यक्षीक्रियते प्रत्युत प्रतिदिनं यावद्यावत्प्रयत्यते स्वातन्त्र्यसम्पादनाय, तावत्तावदधिकतयैवावनतिरेव दरीदृश्यते । किमत्र कारणमिति चिन्तायां केचनेत्थमाचक्षते यदस्माकं भारते वर्षे जातिभेदस्तत्प्रयुक्तवर्णाश्रमधर्मविभेदस्तत्प्रयुक्तोच्चनीचत्वादिकमाचारशुद्धिरित्यादयो दोषा अभ्युन्नतेः सर्वात्मना प्रतिबन्धका इति त एवादौ निरसनीयाः यावदेषां निरसनं न भवेन्न कथमप्युन्नतेः

सम्भावनापीति तेषां निरसनार्थं तत्प्रतिबन्धकानां ब्राह्मणपण्डितानां सामुद्रेऽम्भसि कण्ठे दृढां शिलां बद्ध्वा प्रक्षेप एव समुचितः प्रथम उपायः येन पुनरप्येषां निर्गमो न भवेत्तथोपायो विधेय इति च ब्रुवते ।

अत्र वयं ब्रूमः—यदेतैः पाश्चात्यशिक्षाशिक्षितैरुद्घुष्यते तत्सर्वथा विपरीतम् । इतः पूर्वं भारतवर्षीयाणां भारते वर्षे निरङ्कुशं प्रभुत्वं कदापि नासीत् इति न केनापि वर्णयितुं प्रदर्शयितुं वा शक्यम् । एतत्साधकानां प्रमाणानां बहुषु ग्रन्थेषु उपलभ्यमानत्वात् तदानीं च जातिभेदो वर्णाश्रमधर्मः उच्चनीचत्वादिकमिदानीमिव सम्पूर्णरूपमेवाऽऽसीत् किं बहुना समधिक मेवेतोऽप्यासीत् इत्यत्र न कस्यापि विप्रतिपत्यवसरः । सत्यप्येवं धर्मादिबन्धननिमित्तकवैषम्ये भारतीयैः स्वीया समुन्नतिः परदेशीयैः सर्वथा मनसापि संभावयितुमशक्या सम्पादितेति सर्वविदितम् ।

यवनानां साम्राज्योच्छेदसाधनाय सर्वदा यतमानानां मेवाडाधिपतीनां श्रीशिवाजीप्रभृतीनां च तदनन्तरम् .ादुर्भवतां पेशवाप्रभृतीनामपि समुन्नतिः सर्वैरैतिहासिकैः पाश्चात्यशिक्षासमुज्ज्वलमतिभिरिदानीन्तनैर्न ज्ञायते इति न । एते समुल्लिखिताः सर्वे वर्णाश्रमधर्माभिमानिनस्तद्रक्षणार्थमेव स्वात्मापि समरानले होतुं न तैः कदाचिदपि पृष्ठत कृतः, तेषां समये जातिभेदो वर्णाश्रमधर्मश्च यथावदनुवर्तमानः परिपाल्यमानश्च समुन्नतेः प्रतिबन्धको [illegible]दिदानीन्तु भवतीत्यत्र किं कारणमिति न [illegible], एतेषां सेनायां हि [illegible]णाः, क्षत्रिया, वैश्या [illegible]शूद्राः, सङ्करा, अनुलोमाः, [illegible]तिलोमाः, सर्वविधा अपि मनुष्या नासन्निति न । [illegible]त्येवमुच्चनीचभावव्याप्तत्वे मिलित्वा सर्वेपि [illegible]र्यमकुर्वन् यवनसाम्राज्यं विध्वंसयामासुः पुनरपि [illegible]न्दुसाम्राज्यं प्रतिष्ठापयामासुरिति किं न विदितं [illegible]ारकाणाम् । समुन्नति साधनार्थं न जात्या[illegible]भेदः प्रतिबन्धकः केवलं धर्मश्रद्धाराहित्यमेव प्रतिबन्धकम् । किं बहुनाऽधुनापि दीयतां दृष्टिर्हूणसाम्राज्यप्रतिष्ठापकानां पाश्चात्यानां कार्यकलापेषु, किं तैः स्वकीयसेनायां समवेतानां सर्वेषां मानवानां परस्परं वैलक्षण्यं जातिवर्णाश्रमधर्मप्रयुक्तं वर्तमानं विनाशितम् । किमिदानीं न दृश्यन्ते तत्र सम्मिलिताः ब्राह्मणक्षत्रियादयः सर्वेपि वर्णा यथासम्भवमापद्यपि स्व स्वधर्मं समनुतिष्ठन्तः । किं तदीयेषु सर्वेषु कार्येषु सेनापतिरमात्यो नरपतिर्वा कदाचिदपि प्रतिबन्धं समाचरति । किं तेषां तेषां विभिन्न मतानुवर्तिनां देशभेदनिबन्धनविभिन्नाचाराणां तत्तत्कालिकमुत्सवादिकं न प्रचलति, सर्वथा विभिन्नाचारानेवंविधान् सर्वानत्रत्यानेव प्रातिस्विककार्येषु परस्परं विवदमानानपि सामूहिककार्येष्वैकमत्येन वर्तमानान् सङ्गृह्य प्रतिवेलमाधिक्येनानधिकृतदेशाक्रमणं परेषां विनाशनं दुर्दान्तानामत्रत्यानामेव दमनमित्यादीनि दुष्कराणि कार्याणि न क्रियन्ते । अयं पूर्वोक्तो जात्यादिभेदनिबन्धनः परस्परमनुवर्तमानो विषमभावः कथं तेषां समुन्नतौ प्रतिबन्धको न भवत्यस्माकमेव भवतीत्यत्रावश्यमेव किञ्चित्कारणं स्यात्तच्चावश्यमन्वेषणीयम् ।

इदानीमेवाचिरवृत्ताफगानिस्थानवृत्तान्ताधिगमेन तु विपरीतमेवावलोक्यते यत्परम्परा समायाताचाराद्युल्लङ्घनेनैवं तद्विनाशसाधनाय चेष्टाकरणेनैव अमानुल्लानरपति र्भ्रष्टराज्य इदानीं यत्र तत्र साधारणजनवत् परिभ्रमति न कोपि तं पूर्ववन्मानयति. अयं विपरिणामः सर्वात्मनाऽनभिप्रेत इदानीमनेन पूर्वं नरपतिनापि सता यो भुज्यते स परम्परासमायाताचारोल्लङ्घनस्यैवेति वक्तव्यमेवं सत्येतदेव सिद्ध्यति यत्समुन्नतेः प्रतिबन्धको धर्मश्रद्धाया अभाव एव । अतएव कामन्दकाचार्यः प्राहस्म धार्मिकं पालनपरं सम्यक्पुरञ्जयम् । राजानमभिमन्यन्ते विपरीतं त्यजन्ति हि । रक्षणं रिपुजयश्च धर्मायत्त एव । न ह्यधार्मिकः कदापि प्रजा रक्षितुं रिपूंश्च प्रशमयितुं समर्थो भवति । न हि रक्षणं रिपुजयो वाऽन्यनि

रपेक्षेणैकाकिना केनाप्यनीश्वरेण कर्तुं शक्यते, ईश्वरोऽपि सन् भगवान् रामचन्द्रो धर्मबलेन सर्वांस्तिर्यग्जातीयानपि स्ववशे कृत्वा शत्रुं दुर्दान्तं न्यवधीदिति प्रसिद्धम् ।

अतः सर्वान् स्वायत्तान् प्रेमभाजः कृत्वैव तेषां साहाय्ये नैतत्पूर्वोक्तं कर्तुं शक्यम् न च निरपेक्षाणां सर्वेषामैकमत्य मेकस्मिन् कार्ये प्रवर्तनं विश्वाससम्पादनं विना सम्भवति न च स विश्वासोऽधार्मिके कस्यापि भवितुमर्हति। अतोहेतोः प्राथमिकमिदंकार्यं यद्धर्मरक्षणं नाम । धर्मस्यैतादृशः प्रभावोस्ति यत्तेन सर्वेपि बलवन्तःशत्रवोऽपि तद्भक्ता भवन्ति। अत्रच श्रुतिः-धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति । बृहदारण्यकेऽपि ब्राह्मणादींस्तन्नियन्तारं क्षत्रियमपि सृष्ट्वो ग्रत्वात्क्षत्रियजातिः कदाचिदतिक्रामेद् ब्राह्मणादीन् इत्याशङ्क्य प्रजापतिः धर्मं ससर्ज स च धर्मः क्षत्रस्य क्षत्रमुग्रादप्युग्रमित्यादिना सर्वस्यापि नियन्तेत्याद्युक्त्वा बलवानप्यतिक्रूरोपि क्षुद्रादपि कौटुम्बिकाद्धर्मपरायणाद्बिभेतीत्यभिधाय धर्मस्य सर्वनियामकत्व मुक्तम् । तस्माद्धर्मात्परं किमपि नास्ति । सच धर्मो ब्राह्मणानामेव मुख्यतया धनमितीतरेभ्यो वर्णेभ्य स्तैरेव महता क्लेशेनापि परिपालनीयएव अतएवाह भगवान्मनुः धर्मकोशस्य गुप्तयइति । तदेव ब्राह्मणानां कर्तव्यं धर्मरक्षणं नाम तच्चेत्पूर्ववत् इदानीन्तनैरपि ब्राह्मणैः कर्तुमारभ्येत चेद्भारतवर्षस्यातिशैघ्र्येण समुन्नतिर्भविष्यति। सम्प्रतिहि अनेकधाऽनेकेषां प्रयतमानानामपि न फलं किमपि सिध्यति तस्य कारणमिदमेव धार्मिकः पुरुषो यादृग्गुणो नेताऽपेक्ष्यते तादृशो न लभ्यते । यस्मिन्दिने नेतृत्वोपयुक्तगुणगणमण्डितः पुरुष आविर्भवेत्तस्मिन्नेवदिने भारतवर्षे स्वाराज्यसिद्धिः स्यात्तदर्थं ब्राह्मणैरिदानीमेवारभ्य वेदशास्त्राध्ययनार्थं बद्धपरिकरैर्भवितव्यमिति निवेदयामः ।

---



## श्रीधर्मव्यवस्थावज्रदर्पणः ।

( निब०-पं०-श्री उमामहेश्वरशास्त्री )

नत्वा गुरुपदाम्भोजं स्मृत्वा च हृदि भारतीम् ।
बध्नाति सन्मुदे धर्मव्यवस्थावज्रदर्पणम् ॥१॥
दुर्ग्रहारक्षोदुर्वाददुष्टचिद् दृष्टिभागिनाम् ।
मनीषिणां प्रत्नधर्मव्यवस्थाविवदर्शकम् ॥२॥
चतुर्दिक्पीठसम्बद्धमार्यव्याहृतिवर्गतः ।
शिष्टानुष्ठानफलकस्थापितार्षोक्तिहारकैः ॥ ३ ॥
निर्मितं परदुर्भेद्यमुल्लीढैर्बुद्धिटङ्कतः ।
मनीषिहृदयाम्भोजमहाभूषणभाविनम् ॥ ४ ॥
आर्यकन्योद्वाहकालव्यवस्थादिमविग्रकः ।
जातिव्यवस्थादिबहुव्यवस्थाबिम्बदर्शकम् ॥ ५ ॥
कल्योऽत्रिकुल्यः पुल्योपनामा गुरुकृपाकरः ।
लक्ष्मीनृसिंहसूरीन्द्रसूनुस्सद्विनयी सदा ॥ ६ ॥
मंगिपुड्यन्वय ब्धीन्दु वेङ्कटेशाप्तसत्फलः ।
तातान्वयद्विजाधीशलक्ष्मीवाणीधरेशतः ॥ ७ ॥
कामेशशर्मणा विद्वत्पोषकेण सुपोषितः ।
उमामहेश्वरसुधीर्भारतीकरुणानिधिः ॥ ८ ॥
आन्तं निबन्धदर्पणमालोक्येमं परिश्रमं मम भोः ।
सफलीकुरुतेत्यार्यान्पण्डितशौण्डानिहार्थयेपुरतः॥९॥

इह तावदहीनमहीमण्डलमण्डनायमाने भाषारमातपोभिरन्वर्थनामधेये सकल वैदिकसत्कर्मफलभूमौ सकल कामितकामधेनौ चतुर्वर्गचिन्तामणौ श्रीमति भारते वर्षे कालप्रवाहायातप्रभुत्वकाले कराले निवृत्तशैशवदशे कलिसार्वभौमे स्वसेनानी समाक्रान्तधर्मप्रभुशासनसभे सर्वधर्मनिर्मूलननिदान वैदिककन्योद्वाहधर्मोन्मूलकदुश्शासनशासनपरे हन्त हन्त सनातनधर्मदेवतानुयानपरा इव पुरा लक्ष्यमाणास्तद्वंचितास्तदीयसमरसचिवपदवी मुपा

रूढा बहवो महामहोपाध्यायादिविरुदाङ्किताश्च पण्डित-शौण्डा दुराशादिवशंकृता देशकालपरिस्थितिव्याजेन सनातनधर्मविपरिवर्तनावश्यकतां वदन्तस्स्वदुर्वासनमूलकदुर्वादैर्लोकमाकुलीकुर्वन्तीति । तदापन्नामेतां दुरापदमुन्मूलयितुमयमारम्भ इति तत्कथा प्रस्तूयते । आबालमास्त्रैणमापण्डितमासर्वलौकिकमेवं हि शब्दायते लोकस्सर्वत्र साम्प्रतं वर्तमानपरिस्थित्यनुसारेण शाश्वतधर्मविपरिवर्तनमावश्यकमिति ।

कोऽयं वर्तमानपरिस्थित्यनुसारो नाम । कोवा सम्प्राप्तो महान्विप्लवः, येन शाश्वतधर्मविवर्तनावश्यकता, का वा परिस्थितयस्तादृश्यो वर्तमानाः ननु लोकविपरिणाम इति प्रतिब्रूपे। को वा लोकविपरिणामः ? न तावद्भवता प्रतिवक्तव्यं भूतलपरिणाम इति यथेश्वरानुशासनं यथापूर्वमधुनापि तानि वर्तन्ते न वा देशविप्लव इति, देशान्तरापेक्षया देशाधिक्यादर्शनेऽपि पूर्वापेक्षया धनवान्फलवांश्च प्रत्युत देशः । न चैति वाधा, नवाक्षामडामरादिबाधा, नापि राजविप्लवः, नाद्यावधि परसैन्यैराक्रान्तो देशो बाध्यते, न वा वेनेनेव स्वदेशविभुना बाध्यते, न ह्यद्यतना राजानः प्राच्यकर्कशतुरुष्का इव वर्णाश्रमधर्मनिर्मूलनाय निर्बन्धेन बाधन्ते भारतीयान् बद्धदीक्षा अनारतम् । परन्तु मतान्तरस्था अपि भारतीयेष्वेव स्वस्ववर्णाश्रमधर्मानुष्ठानानुष्ठानभारं विन्यस्तवन्तः। सएवेति चेदोमिति ब्रूमः। अथापि व्यावहारिकधर्माणां तत्तन्मतस्थानां तत्तन्मतधर्मशास्त्रानुसारेणैव पालनमद्यावधि निर्वर्त्यते हूणसार्वभौमैः । भारतीयादिमतधर्माणां विभिन्नविभिन्नदेशजातिकुलाद्यधिकरणकविभिन्नविभिन्नानुष्ठानगोचरत्वेन विभिन्नविभिन्नमतग्रन्थमूलकत्वेन चात्मनां च मतान्तरस्थत्वेन तत्तद्बोधस्य दुश्शकत्वात्तदनुष्ठापनादिस्वातन्त्र्यं तत्तन्मतस्थानामेवायत्तीकृतं तैरिति वस्तुस्थितिः । यद्यपि तत्तन्मतस्थधर्मशास्त्रनिष्णाता-न्नियम्य तत्रापि तैश्शक्यते पालयितुम्। तथापि लौकिकलाभमात्रानुसन्धानतत्परा न साम्परायिकफलेषु धर्मेषु पालयितुं प्रयतन्त इति विषीदाम एव। इममेवावकाशमवलम्ब्य स्वच्छन्दचरिष्णवः केचिदार्यजातिमात्रोपजीविनस्स्वच्छन्दसमाजानार्यदिव्यब्रह्मादिपदमात्रघटिताननार्यान्संस्थाप्य तद्वारा कलिचोदितस्वच्छन्दमतिबोधकाः क्रमशः क्रमशस्सामादिभिस्त्रिभिस्स्वबोधनवैयर्थ्यमनुसन्दधाना दैववशेनायत्तीकृतशासनसभादण्डेन स्वमतविरोधिवर्णाश्रमधर्मनिर्मूलनाय यतमाना दुश्शासनद्वारा निर्बन्धेन धर्मनिग्रहायैव प्रवृत्ता अधुनेतीयमेकैव वर्तमाना परिस्थितिर्भारतीयवैदिकसमाजस्य धूमकेतुरिव विप्लवसूचिका काचिदुत्थितेति प्रतिवक्तव्यम्। अपि च कालवशेन दुराशापाशवशीकृतानामात्मविहितकिञ्चिन्मात्रकर्मानुष्ठानकातरात्यन्तालसमतीनां स्वच्छन्दाचारप्रवृत्तिपरेति च, चेत्तर्हि तदनुसारेण शाश्वतधर्मविपरिवर्तनं न कर्तव्यमिति निरणैषीद्भवान्, नैषा सरणिस्ते मनीषितां व्यञ्जयति प्रत्युत मान्द्यम्। येषां धर्माधर्मौ वैपरीत्येन परिणतौ, स्वच्छन्दचरिष्णूनां तेषां तोषाय न शाश्वतधर्मपरिवर्तनावश्यकता, नहि किञ्चिद्धर्माणामप्यनुतिष्ठासा दृश्यते तेषाम्। येषामीषदपि तदनुतिष्ठासा तेषामेषा शङ्का लगति, धर्मविपरिवर्तनं नाम! यतोहि स्वच्छन्दिनस्ततो न साधु तन्मतानुयानम्। दुश्शकं च तत्ते अद्य विवाहकालपरिवर्तनं,विधवाविवाहविधानं, चण्डालास्पृश्यतानिवारणं, श्वश्वण्डालादिभिर्यौनस्सम्बन्धः, परश्वो विवाहनिरासादिश्चेत्यनवस्थाप्रसक्तेः। युक्तयश्च यथामति यथाकालं यथारोचनं स्फुरन्त्येव तदातदा तत्तदनुकूलाः। यथा—यदि विवाह एव न स्याल्लोके तर्हि विधवाः कुतआयान्ति, निर्बन्धरजस्वलाविवाहेन बालवैधव्यनिर्मूलनेपि युवतिवैधव्यं कुतोऽपयाति, तदर्थं विधवाविवाहनिर्बन्धशासनमिति चेदनेकशासनापेक्षया लघ्वेकमेव शासनं विवाहनिर्मूलनं

नाम, इति चेत्कश्चन मेधावी ब्रूयात्तं प्रति किं ब्रूषे त्वं तन्मतानुरोधी, ओमित्येव स्यात्तत्प्रतिवक्तव्यं भवता, शास्त्रानुरोधेन न कुर्म इति चेद्ब्रूषे पुरस्तादेव तर्हि सुखी भूयाः नाद्य श्वः परश्वोवा स्वच्छन्दिन इव विभिन्नं विभिन्नं ब्रूते शास्त्रम् । वेदानुरुद्धत्वेन त्रैकाल्यसमत्वात् नित्यसिद्धो ह्यनादिनिधनो भगवान्वेदः। अतो यदि तद्-नुसरणमेवाभिमतं भवतः तर्हि त्यज शास्त्रानुसरणम् । उभयानुसरणन्तु विप्रतिपन्नम् । वेदशास्त्रविरुद्धस्वच्छन्दमतगाढतिमिरानुसरणम्, वैदिकशास्त्रतरणितेजोनुसरणं च कथं नाम घटते । सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः । तर्हि किं कर्तव्यमिति पृच्छसि यत्कर्तव्यं तदेव । किं तत् । यदीदानीमपि प्रत्नवैदिकधर्मरक्षणबद्धदीक्षास्तदनुष्ठानबद्धादराश्च स्युर्भारतीया भारते वर्षे कतिपयेऽपि तर्हि निखिलैरपि तैस्स्वच्छन्दचारिसङ्घात्पृथग्भूय वहिष्कृत्य च तान् यावद्भारतास्तिकसङ्घसंज्ञा निर्माय कंचन सङ्घं प्रसुसकाशे तदीयनीतिमार्गानुसारेणैव यथा न तन्निर्वन्धः स्यात्स्वधर्मेषु तथा प्रयतितव्यम् । नतु तन्मतानुयानेन प्रत्नधर्मसङ्कोचने तद्भ्रंशने वा प्रयतनं ज्याय इति वदामः । ईदृशवर्तमानपरिस्थित्यनुसारेण नियन्तुं तु न वयं प्रभवामः । शास्त्रोल्लङ्घनावश्यककालो नायं विप्लवहैतुकः तथापि शास्त्रं नियुङ्क्ते कर्तव्यं तादात्विकतया, न शाश्वतिकतया । यदि क्रूरतमा राजान एव तथा निर्बध्नीयुर्यदिवाऽन्ये विप्लवाः समुपस्थिताः स्युः । यर्हि स्वच्छन्दमतस्थदिव्यचरितनिबन्धनिर्माणाय तदनुयायिपण्डितप्रकाण्डदारिद्र्यविच्छेदनाय च वहवो व्यासकर्णादयो भारतनव्यभाग्योदयाय च जनयितव्या नव्या स्तर्ह्येव ऋतुमतीविवाहादिर्व्यवस्थाप्यो भवति नान्यदेत्येव वदामः । अथ यदुच्यते धर्मज्ञम्मन्यैरधुनातनै र्मेधाविभिः पण्डितमण्डनैः पतितयतिभिश्च, धर्मज्ञसमयः प्रमाणमित्यादिना धर्मज्ञानां देशकालादिभेदेन धर्मविपरिवर्तनेप्यधिकारस्य बोधितत्वेनास्माकमपि धर्मज्ञत्वात्प्रकृतदेशकालानुरोधेन संकोचनप्रवर्तनादिरूपे धर्मविपरिवर्तनेऽस्त्येवाधिकार इति । तत्र ब्रूमः—क्वाचित्काभ्यनुज्ञानस्य प्रायश्चित्तविधानमात्रविषयकत्वेनास्माकं धर्मज्ञत्वाभावेन च तत्रापि शास्त्रानुरोधस्य विहितत्वेन च तद्भिन्नशाश्वतधर्मविपरिवर्तनेऽनधिकार इत्येव । तथाहि—अत्र धर्मज्ञत्वं पुरस्तान्निरूपणीयम् । तत्र च धर्मज्ञत्वस्य धर्मपदार्थसाकांक्षत्वेन धर्मपदार्थो निरूपणीयः । तत्त्वं च—श्रुतिविशिष्टत्वे सति दृष्टादृष्टफलसाधनत्वे सत्यर्थत्वम् । वैशिष्ट्यं च साक्षात्परम्परया स्वचोदितत्वसम्बन्धेन । अर्थत्वं च बलवदनिष्टाननुबन्धित्वम् । घटं कुर्वित्यादिलौकिकविधौ मोक्षे श्येनयागादौ चातिव्याप्तिपरिहाराय क्रमेण दलत्रयम् । विध्यर्थवादमन्त्रात्मकयावद्वेदचोदितग्रहणाय सम्बन्धे साक्षादित्यादि । अत्र च चोदनालक्षणोऽर्थो धर्म इत्यादीनि प्रमाणानि नोदाहृतानि ग्रन्थविस्तरभिया, तथाचैतल्लक्षणलक्षितधर्मविषयकज्ञानसमवायित्वं धर्मज्ञत्वमिति वक्तव्यमेवं चेदस्मदादीनामपि धर्मज्ञत्वापत्तिः । इष्टापत्तौ तु शास्त्रव्याकोपः अतो यावत्त्वं धर्मे निवेशनीयम् । इदमेवाह हरदत्तः धर्मज्ञसमयः प्रमाणमितिसूत्रव्याख्यानावसरे । न ब्रूमः—समयमात्रं प्रमाणमिति, किं तर्हि ! धर्मज्ञा ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः इत्यादिना मन्वादीनां स्मृतिकर्तृणामेव धर्मज्ञत्वं तदतिरिक्तानामर्वाचीनानान्तु तत्समयज्ञत्वमात्रमेव, न धर्मज्ञत्वमिति ।

सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा ।

तावुभौ यदि धर्मज्ञौ मतभेदः कथं तयोरित्यादिना मन्वादीनामेवातीन्द्रियधर्मज्ञत्वं कथमित्याशङ्क्य विशेषबोधकं वेदाश्चेति सूत्रमित्याद्युक्त्वा तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणम् धर्मज्ञानान्तु वेदाः प्रमाणमिति निरचैषीत् । एतेन धर्मज्ञसमय इति सूत्रेण स्मृतिप्रामाण्यमेव निरूपितमिति सिद्धम् । एतदुपोद्बलकत्वेन—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेवच ॥

इति मनुवचनमुदाहृतवान्। इत्थञ्च किमायातम् यदायातव्यं तदेव। किं तत्! अयं धर्मोऽयमधर्म इत्यङ्गुलीकृत्य निर्देशे स्वतः प्रमाणभूता वेदाएव शक्नुवन्ति, तद्बोधितधर्मज्ञत्वन्तु तद्वेदज्ञत्वेन मन्वादीनाम्। अस्मदादीनान्तु तत्सिद्धान्तास्तदाचाराश्च, तज्ज्ञानं च तत्प्रतिपादकतद्ग्रन्थेभ्य एवेति, इदमेवाह मनुः वेदोऽखिलेत्यादिना। नन्वेवं—

धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः।
देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च॥
जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने।
शरीरकालधर्माश्च आपद्धर्मास्तथैव च॥
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः।

इत्यादिना श्रुतिभेदप्रयुक्तधर्मभेदप्रतीत्या तत्प्रतिपादकस्मृतिभ्योऽपि नाविचिकित्सं तदर्वाचीनानामनुष्ठेयधर्मप्रतीतिस्तदभावे च तदनुष्ठानाप्रसक्तिरित्याह—आचारश्चैव साधूनामिति। साधूनां शिष्टानामाचारः प्रवृत्तिरनुष्ठानम्। न च पारम्पर्यागतस्तात्कालिकोऽपि गृह्यत इति न विशयावकाशो धर्मानुष्ठाने। आत्मतुष्टिस्तु विधिद्वैविध्यप्रयोज्यानुष्ठानद्वैविध्य एव प्रमाणमितिभावः। तथाच शिष्टानां मन्वादिसमयः प्रमाणम्। मन्वादीनान्तु वेदाः प्रमाणं लौकिकानान्तु शिष्टाचारः प्रमाणमिति सिद्धम्।

धर्मज्ञत्वन्तु मन्वादीनामेवेति च। अतएव आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनमित्यादिनाऽस्मदादीनां धर्मनिर्णये क्रमो व्यवस्थापितः तथा च श्रुतिस्मृतिसदाचारा धर्मनिर्णये प्रमाणमिति व्यवस्था समायाता, प्राधान्येनास्मदादीनां शिष्टाचारश्चेति शिष्टत्वन्तु धर्मविशिष्टप्रवृत्तिविशिष्टत्वम्। प्रवृत्तौ धर्मवैशिष्ट्यं च स्वमात्रविषयकत्वम्। स्वविघटककामादि यावदसंस्पृष्टत्वम्। स्वजन्यफलसाधनताविषयकभ्रान्त्यसमानाधिकरणत्वम्। स्वबोधकवेदवेत्तृतासामानाधिकरण्यं चेति सम्बन्धचतुष्टयेन। शिष्टेषु प्रवृत्तिवैशिष्ट्यं च स्वाश्रयत्वसम्बन्धेन। अत्रत्यविशेषणदलसार्थक्यतत्प्रमाणवचनादिकमेतदीयशिष्टाचारव्यवस्थाविम्वादवसेयम्। तथाच तत्तावच्छिन्नकर्तृकाचारः प्रमाणत्वेन परिगृहीतश्शास्त्रकृद्भिस्सदाचारसाध्वाचारशिष्टाचारशब्दैरिति सिद्ध्यति। ईदृशशिष्टत्वस्यैवाद्यतनेषु दौर्लभ्ये दिव्यज्ञानेन यावद्वेदद्रष्टृत्वमूलकतद्बोधितयावद्धर्मपरिज्ञानित्वरूपं धर्मज्ञत्वन्तु दूरादेव पलायितमिति दुरभिनिवेशपिशाचावेशदूषितचित्तमन्तरा न को विजानीते। एवं च तादृशधर्मज्ञत्वावच्छिन्नमनुपराशरपाराशर्यबोधायनादयो महर्षयएव तत्तद्युगीयपुरुषकर्तव्याकर्तव्यनिखिल धर्मानपि निजस्मृतिषु पुराणादिषु च व्यवातिष्ठिपन्निति नाद्यतनानां तत्रावकाशलाभः। त्वदुक्तरीत्या यदीदानीन्तनानामप्यधिकाराभ्यनुज्ञा तदीया स्यात्तर्हि एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः। निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः इत्यादिना कल्यननुष्ठेयधर्मव्यवस्थापनं वृथैव स्यादित्यास्तां धर्मविपरिवर्तनाधिकारप्रत्याशा दुराशस्य दुरभिनिवेशस्य भवतो धर्मज्ञम्मन्यस्य। अधुना प्रायश्चित्तविधानादौ च त्रैविद्यवृद्धाः शुचयः चत्वारो वेदधर्मज्ञा इत्यादि तदुक्तलक्षणलक्षितानां तदुक्तदिशा शिष्टानामेवाधिकारो नान्येषाम्। यदि ते लभेरन् धर्मविपरिवर्तनादौतु तदुक्तार्थव्यवस्थानमात्रमन्दमतयो यत्किञ्चिद्धर्मेष्वपि यथावदनुष्ठानालसा रागद्वेषादिशत्रुजिता आस्तिकाभासा दुराशादिदासा ऐहिकसुखलाभमात्रपरायणा दाम्भिका धर्मज्ञवेषभाषणधनार्जनादिकामुका जातिमतविभ्रष्टस्वच्छन्दिसेवालालसा वराकाः प्राक्तनशिष्टापेक्षयापीति शपथेन नाधिकारिण इति ब्रूमः। यदि शारीरककोशे कस्मिंश्चिदपि पापभीतिस्तर्हि प्रत्नशिष्टाचारा-

नुसरणमेव यावद्धर्मज्ञत्वमस्माकमित्यलं जातिमतधर्म विपरिवर्तनप्रयतनेन साम्परायिकघोरदुःखजनकेनेति दिक् ।

इतिश्रीधर्मव्यवस्थावज्रदर्पणस्योपोद्घातोनाम चतुरस्रपीठबन्धः ।

( शिष्टमग्रे । )

---

## अभ्यर्थना ।

[ निबं०—श्रीसतीन्द्रचन्द्र ठाकुरः ]

[ १ ]

उत्तिष्ठ, जागृहि, धरासुर ! धेहि शक्ती,
रुन्मीलयाक्षियुगलं, स्व-दशां च पश्य ।
त्वं कीदृशः शुचिपरः परधीः पुरासी
स्त्वातुलं वत ! रसातल मेव यासि !!

[ २ ]

यत्तद् गृहेषु समुपैषि निमन्त्रितो वा
ह्युच्छिष्टमभ्यवहृतेः परमत्सि तेषाम् ।
भाग्यं हि तत् क्वच तव प्रथमेऽशनञ्चेद्
भालेऽन्यदप्यसुकृतं किमितोऽवशिष्टम् ?

[ ३ ]

तद्गेहतश्चलसि चेदपराधरुष्टो—
"रेरे क्व यासि ? पुनरेहि" शृणोष्यपीत्थम् ।
दण्डाद् भियैषि पुरतः पुनरप्यगत्या
प्रायो भवन्तमिति ते समयन्ति जन्तुम् ॥

[ ४ ]

तुच्छत्वमित्थमसहं त्वयि भूरि जातं
प्रायोऽखिलस्य नियतं प्रति धर्म्म कर्म्म ।
वर्णे क्रियाविनिमयेन सुखं पुराऽऽसीद्
भ्रान्ता मिथोऽद्य सकला विवदन्त एव ॥

[ ५ ]

यत्पादपद्मनखकोणकणां निधाय
धन्या नरासुरसुराः शिरसि प्रयासैः ।
नीचोऽपि तामिह जनः सुलभां प्रमत्या
ऽकिञ्चित्करीं नच पुनः स्पृशति भ्रमाच्च ॥

[ ६ ]

अस्मादधःपतनमस्ति किमत्र ते वा—
तेषाञ्च,—हन्त ! किमपीह न कोऽपि वेत्ति ।
धर्म्मो गतोऽथ ववृधे च जगत्यधर्म्मो
नानारुजा व्यथयतीव ततो जनांश्च ॥

[ ७ ]

हेशास्त्र-रक्षणपटो ! क्वनु याति शास्त्रं—
कं वा,—निराश्रयमहो ! भुवि किं म्रियेत ?
विद्वद्गुवाधपकथाद्यपमानवारौ
र्निर्विण्णता मुपगतं व्रजतीव भूमेः !! ॥

[ ८ ]

तद्रक्ष शास्त्रमिह धर्म्मनिदानमेत
द्ब्रह्मन् ! तदैव सकलं सफलं तव स्यात् ।
आर्षं सदोपदिश वालमपास्य मोहं
म्लेच्छीयशिक्षणमनिष्टकरं जहीहि ॥

[ ९ ]

नास्तित्वमस्तमगमन्न तपो गतं ते,
प्राणास्तु सन्ति, धमनावपि रक्तमस्ति ।
चित्तं स्थिरी कुरु कुरुष्व मतिञ्च धर्म्मे
"पक्वन्तु नार्द्रक महो ! कटुतां जहाति" ॥

[ १० ]

'योनि स्तपः श्रुति' रिति प्रथितं हि विप्रे
जानासि हेतुमथ तत्र तथापि हेला ?
अस्त्यस्ति ते हितविधौ समयोऽधुनापि
तद्धर्म्ममाचर जनानपि चेतयेत्थम् ॥

[ ११ ]

वाल्मीकि च्यवनात्रि कश्यप भृगु व्यासोर्व्व कुत्साङ्गिरः-

च्छाण्डिल्यासितयस्कदेवलभरद्वाजर्षिकात्यायनाः ।
गर्गागस्त्यपुलस्त्यवात्स्यपुलहक्रत्वङ्गिरःशौनक—
कृष्णात्रेयमरीचिपाणिनिमतङ्गोतङ्कवात्स्यायनाः ॥

[ १२ ]

वाशिष्ठशात्ररपतञ्जलिगौतमाश्च
सावर्णकण्वरुचयः कपिलर्ष्यशृङ्गौ ।
हारीतनैध्रुवकणादरथीतराद्या
येषां हि पूर्वपुरुषा मुनयः प्रसिद्धाः ॥

[ १३ ]

तेषां हन्त नितान्त मन्द विधिशो हा हा ! विपाकोह्ययं
धिग धिग् वञ्चक एव पञ्चवदनैः स्तम्बेरमैरश्वकः ।
हा ! चामीकरहीरकाकरवरैः काचः किलोत्पाद्यते
कालेऽसम्भव एव सम्भवति किं वैचित्र्यमस्मात्परम् ॥

[ १४ ]

ब्राह्मण्यं जगतो निराश्रयमिव प्रैति क्व हन्त क्रमात्,
किं सत् कर्म्म भवाच्चलिष्यति भिया धर्म्मार्थशर्म्मप्रदम् ?
शश्वद्वादविषादनादविकला नीलाननाश्चापला
धर्म्मभ्रष्ट—विनष्टतुष्टिनिकराः स्वेष्टे वयं वञ्चिताः ॥

[ १५ ]

औदास्यादवसीदतो द्विजमणेर्भ्रंशाच्च धर्म्माद् भृशं
दुश्चिन्ताभरचेतसः सुमनसोऽप्यत्युत्कटं दर्शनम् ।
किं कार्य्यं ? कथ मुद्धृतिः ? कथ मितोऽधोऽधोगतिःसम्प्रति
कःशास्ता ? किमुवर्त्म ?दैन्यवचनं हाहेति चास्येऽनिशम् ॥

[ १६ ]

तेजः पुरेव न धरासु धरासुराणां
निर्वीर्य्यं वाहु रवनीष्ववनीधवानाम् ।
विट् छूद्रयोरपि कृतिर्विकृतिं प्रपन्ना
तस्माद्विना प्रभुवनं भुवनं विपन्नम् ॥

[ १७ ]

भ्रातर्मङ्गल मेव वाञ्छसि यदि भ्रान्तिं निचिक्षिप्ससि
स्वैरं भावमवाप्तुमिच्छसि मुहुर्जात्युन्नतिं काङ्क्षसि ।
औदास्यं त्यज, शीघ्रमाचल, महत् कार्य्यं पुनः साधय
क्ष्मादेवो भव देवपूर्वक इतः पृथ्वीं समुद्धारय ॥

[ १८ ]

वैक्लव्यं जहि मूल्यहीनजननं साफल्यमाप्राप्य
श्रौषी र्मा किल लौकिकं कलकलं निन्दा प्रशंसात्मकम् ।
वाह्यं दृश्यमतीवमेचकममुं काचं प्रपश्यन् मुदा
मुग्धः काञ्चन मद्य मा त्यज वृथा चापल्यमाशु त्यज ॥

[ १९ ]

नीचानां पदलेहलाञ्छितमुखो म्लेच्छादिसञ्ज्ञां वहन्
हित्वाखण्डलवाञ्छितां चिरधृतां सञ्ज्ञां नवा लज्जसे ?
हा गव्यं मधु पायसान्नममृतं सन्त्यज्य मोहान्मुहु—
र्यत्तत् पक्वमभक्ष्यमत्सि लशुनं डिम्बादिपादायुधम् ॥

[ २० ]

भो ! ब्रह्मण्यमपात्यमेव सकलै स्त्वद्धर्म्म कल्पद्रुम
स्तात् सत्कर्म्म जलैः सदा समुचितैः संवर्द्धय तां यत्नतः ।
तै र्ब्रह्मण्यतरोः सुखादिसुफलैरात्मा मही तृप्यतां
राज्यप्राज्यसुखप्रसाधनमितो भूयात् किलाद्यावधि ॥

[ २१ ]

माया मत्ता ! मृषा माना ! मोमुह्यमानमानसाः !
यतन्तां वो यथा न स्याद् हितोऽहितोऽहितोहितः ॥

---

## गीर्वाणभाषोन्नतिः ।

[ निब०—पं० प्यारेलालशास्त्री । ]

( संस्कृता ध्यापकः मेरठ कालिज )

आसीत्कश्चिदेतादृशोऽतिनिर्वचनीयसमयो यदा सकलभूमण्डलमण्डनीभूतविविधदेशेष्वय-मेव शिरोमणिरगण्यत किल भारतो वर्षः । देशान्तरस्था अपि विचक्षणा इहत्येभ्यो विद्यावयो-जातिगुणवृद्धेभ्यो मनोज्ञेभ्योऽधिगन्तुं शास्त्रतत्व मा-

गच्छन्ति स्म । करालकलिकालचक्रभ्रमिभ्रान्तैः कृतवसतिरस्माभिरयमेव देशो निकृष्ट इत्यवमन्यतेऽन्यै र्विविधकलाप्राप्तप्रावीण्यैर्जगतीतलमुकुटायमानैर्देशैः । यद्यप्येतदसंशयं यद्राज्ञः प्रजायाश्च धर्मविलोप एवाधोगतिं व्रजति देश आक्रान्तोन्नतिशिखरोऽपि । परमयं धर्मविलोपः पतितपावने पवित्रे भारतवर्षसदृशे धार्म्मिके देशे कथं सञ्जातः कुतः प्रभृतिचेति न निश्चेतुं शक्यते कैश्चिदपि विचारचतुरैः । इदन्त्ववश्यं विज्ञायते यतः प्रभृति यवनाक्रमणानां प्रक्रमा जातास्तत एवालोकिततत्सभ्यतैर्लोकैस्तेषामेवाचारविचारभाषावेषादिकानि गृहीतानि कृतं चानुकरणन्तेषामाहारविहारवासप्रभृतीनां सर्वेषामेव तत एव गता चाधोगतिं सर्वलोकजननीभूता सर्वथा समर्च्या गीर्वाणवाणी यस्यां भूयतेऽस्माकं धर्मशास्त्रनीतिशास्त्रादिभिरन्यैश्च कलाकौशलैः । संस्कृतानभिज्ञतया चादर्शभूतोऽपि देशो दास्यास्पदतामापत्सर्वासामेव जातीनाम् । येषु च देशेषु त्रिदशसरस्वत्याः प्रसरः प्रसृतः त एव विगाहितवन्तश्चरमां कोटिम्पदार्थविज्ञानादिषु । आर्थिकदशापि तेषामनिर्वचनीयामुन्नतिमाप । एतस्योदाहरणत्वेन भव्यैर्जर्मनीप्रान्त एव लक्ष्यीकरणीयः । अद्यत्वे च स वाराणसीत्वमभिप्राप्तोऽस्ति । अन्यत्रत्यै र्विचक्षणैस्तत्राध्येतुमध्यागम्यते प्रदीयन्ते चास्माभिरपि स्वशिशवस्तत्रैवाधिगन्तुं शास्त्रसारम् । सत्येवं प्रवृत्यतेऽनया विचारणया कथं स्यात्संस्कृतप्रचारः कथश्चानेन देशशिरोमणिना स्वस्थानमधिरुह्येत इदन्तु न सन्देहास्पदतामुपयाति यद्या हि राजभाषा भवति तयैवोन्नतया भाव्यम् परं यत्रास्माकं प्राचीनैर्गौरवास्पदैर्नीतिजातैरन्यैश्च प्रत्यक्षलाभैर्योगविद्यादिभिः पदार्थजातैः स्थीयते तथाप्यस्माकं हृदि देशे चोन्नततरमेव स्थानमध्यासितव्यं सम्भाव्यते । अतो धर्मोऽस्ति प्रजायाः सा राजानं प्रार्थयेत् तद्[illegible]भदायकेषु कार्येषु साहाय्यं दातुमेतदर्थं च प्रजयैका महती सार्वदेशिकी समितिः संस्थाप्या साच समये समये प्राचीनभाषाया गुणान्बोधयेद्राजानं तस्यां चोत्तमोत्तमा विविधविद्यालंकृता विपश्चितः सन्धाय विदध्युर्विविधविधान् विचारान् । उद्घुञ्जीरंश्च तत्र तत्र पाठशाला विद्यालयमहाविद्यालयांश्च संस्कृतभाषायाः स्थापयितुं तस्याश्च शाखासभाभिर्विभिन्नप्रान्तोद्भवाभिर्भाव्यं याभिश्च प्रहिता मुख्या मुख्याः सभासदः एकस्मिन् कस्मिंश्चित्स्थाने सम्मिल्य स्वीयान् हृदयसारान् विचारान् प्रकटयितुमलं स्युः महत्या च सभया वैतनिका अवैतनिकाश्चोपदेष्टार उदारा व्याख्यानदातारो नियोक्तव्या ये प्रतिसमयं गत्वा जनानां हृत्सरोरुहेषु स्वोपदेशामृतप्रवाहेण संस्कृतविद्याया मातृभूतायाः प्रेमप्रसरमाविष्कुर्युः प्रत्येकस्मिन् ग्रामे एकस्या अपि पाठशालायाः कृते प्रयतेरंश्च ।

भाषाया उन्नतिस्समाचारपत्रैरपि भवितुं शक्यते तानि चाद्यत्वे द्वित्राण्येव वर्षाकालखद्योतवट्टिमटिमायन्ते बुद्बुदवच्च प्रलीयन्ते कदाऽपि कदाऽपि । तत्र च हेतु रस्माकं प्रेमशैथिल्यमेव बहुभिर्विद्वद्भिर्महतोत्साहेन परिश्रमेण च निष्कासितानां यदा न भवत्यल्पग्राहकतया तेषां व्ययपूर्तिस्तदानवसर एव मृतिमाप्नुवन्ति तद् दृष्ट्वा चान्ये विद्वांसः शिथिलारम्भाः शिथिलप्रयत्नाश्च भवन्ति। पञ्चविंशतिकोटिसंख्याके पुत्रग्रामे विद्यमानेऽप्यस्माकं संस्कृतजननी भोजनं न लभते किमेताद्दग्जीवनमस्माकं लज्जाकरं न, येषां जननी ग्रासमात्रस्यापि कृतेऽवसीदति ।

अद्यत्वे हि संस्कृतोन्नतौ बाधकद्वयमन्यद्बलवत्तरं दरीदृश्यते । ये किल केवलसंस्कृताधीतिनो भवन्ति छात्रास्ते विंशवर्षाणि यावदतिकठिनेन प्रयत्नेन परिश्रम्यापि वृत्तिप्राप्तिदशायामतीव दुःखप्रदां दशामनुभवन्ति । बहवस्तु इतस्ततो भ्रान्त्वा भ्रमि प्राप्येव स्वगृह एव मौनमवलम्ब्य विश्रमितुं रतिं दधति । गृहादपि गृह्यैर्निस्सारिता यदा न लभन्ते

वृत्तिं तदैव मनसि संकल्प्यते तैर्यद्भविष्यति भविष्यति पुत्रः पौत्रो वाऽस्माकं कश्चित्संस्कृताऽधिजिगीषुः तर्हि वयं महता प्रयत्नेन वारयेम किन्तु राजकीयभाषा मेव पाठयिष्यामः। तेषामेव मनसि यावज्जीवं संस्कृत पुस्तकानि पठितुं घृणा संपद्यते यद्येवं कृतश्रमा अपि संस्कृतविद्यासुपुत्रा अपि सपत्रकृतमृगवद्भ्रष्टोद्योगा निपतन्ति तर्हि केऽन्ये तासाहाय्याय प्रयतेरन् तेषां च भ्रष्टोद्योगत्वे वयमेव हेतवः।

अन्येच ये इङ्गलिशभाषया सह संस्कृतमधीयते तैश्च भाषायाः काठिन्येन संस्कृतपरीक्षकाणां काठिन्येन च वृत्तिष्वप्यभावाद्वैचित्र्यस्य त्यज्यत इयम्। ये किल अन्येषु विषयेषु एम्० ए० परीक्षां ददते ते किल शतादारभ्य सार्द्धशतद्वयपर्य्यन्तमतोप्यधिकं मासिकं लब्धुं शक्नुवन्ति ये किल संस्कृते एम्० ए० परीक्षामुत्तरन्ति तेत्वधिकादधिकं सार्द्धशतमेव महता प्रयत्नेनाप्नुवन्ति अतस्संस्कृतोन्निनीषुभिर्भावुकै राज्ञः सेवायां प्रार्थना विधेया यत्तेभ्योऽपि वृत्तिदाने तादृगेव वैचित्र्यमाधेयम्।

ये हि किल संस्कृतस्य परीक्षका निरीक्षका वा सन्ति विदधति ते काठिन्यं परीक्षणेषु निरीक्षणेषु ग्रन्थनियोजनेषु चातः काठिन्यं दृष्ट्वाऽपि बहवश्छात्रा स्त्यजन्ति संस्कृतम् अतस्सार्वदेशिकया सभया तेऽपि समये समये बोधनीयाः।

सर्वासामेव भाषाणां साहित्य एवोन्नते र्निर्भरः। यस्याः किल गिरः साहित्यं सर्वाङ्गसम्पूर्णं सामयिकविविधविषयोपेतं च स्यात्सैवोन्नतिं भजेतेत्यत्र न कापि विचिकित्सा। इयं किल गीर्वाणगीर्यद्यप्यासीत्पूर्वात्पूर्वतरे काले सर्वाङ्गसुन्दरी तथापि नाद्यत्वे सामयिकत्व मवलम्बतेऽत एतज्ज्ञैरियं यथा सामयिकविषयविशिष्टा स्यात्तथा यतनीयम् एतान्यन्यान्यपि बहूनि निदानानि सन्ति संस्कृतभाषोन्नतेः तानि यदि साधितानि स्युर्विविधविद्याविशारदैः शारदारविन्दवद्विकसित शारदैः संस्कृतसाहित्यसरस्सरसरसिरुहामोदप्रमोद निर्भरमानसैस्तत्रभवद्भिर्भावुकैर्भव्यैरितिशम्।

---



## समालोचनम्।

[ निबं०—म. म. श्रीमदनन्तकृष्णशास्त्री। ]

म० म० द्राविड़ पं० लक्ष्मणशास्त्रिभिरस्मत्सविधे निर्णयसागरमुद्रालयमुद्रितं पण्डितप्रवरपणशीकरोपाह्व वासुदेवशास्त्रिभिः समालोचनार्थं समर्पितं दत्तकविवादनिर्णयोद्ध्वंसनामकं पुस्तकं प्रतिवादिभयङ्कर श्रीमदनन्ताचार्यस्वामिकृतमुपलभ्य वयमत्यन्तमेव सन्तुष्टाः। प्रतिवादिभयङ्कर श्रीमदनन्ताचार्याणां लेखनशैली वैयक्तिकदूषणभूषणादिलेशरहिता विषयोपस्थापनप्रणाली च सर्वाङ्गसुन्दरेति नेयमतिशयोक्तिः।

पुस्तकमिदं देशविशेषे दौहित्रभागिनेययोर्दत्तकत्व शास्त्रीयत्व व्यवस्थापनपरं गोवाप्रान्तनिवासि धूपकर श्रीमदनन्तशास्त्रिप्रकाशित दत्तकविवादनिर्णयनिरासपरं दत्तकविवादनिर्णयोद्ध्वंस इति अविद्योन्मूलनमिति च नाम्ना प्रकाश्यमानं नाम्ना कंचनाग्रहविशेषं कुत्रापि सम्प्रदाये सूचयतीवेति नाममात्रदर्शनेन सत्यमिदं प्रतिभाति।

स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगार्हत्वात्तु नात्र वयं विशेषतः कटाक्षणं योग्यमवगच्छामः।

विषयोह्यत्र प्रतिपाद्यो दौहित्रभागिनेयदत्तकत्वमिति सर्व एवैतदर्शनेन ज्ञास्यन्ति। अनेन विज्ञायते— केचन ब्राह्मणादिषु दौहित्रभागिनेयदत्तकत्वं न साम्प्रतमिति केचन तु साम्प्रतमिति मन्यन्ते। तत्र च मतद्वयावलम्बिनामपि केचन केचन निबन्धा अनुकूलाः प्रतिकूलाश्च वर्तन्त इति।

अत्र प्रतिवादिभयङ्कराचार्या निबन्धानामनुकूलानां

प्रतिकूलानां वा बहुत्वाल्पत्वविचारो निरर्थकएव, न्यायानुगृहीत एकोपि निबन्धः प्रमाणम् । अन्ये च सहस्रमप्यप्रमाणमिति सुष्ठु स्वीये ग्रन्थे प्रकाशयन्ति विश्वसिमो वहुतरनिवन्धविरुद्धत्वादप्रमाणं भागिनेयदत्तकत्वव्यवस्थेति वदन्तः दत्तकविवादनिर्णयकारा अपि न्यायानुसारि वहुतरनिबन्धग्रन्थविरोधमेवात्राभिप्रयन्ति स्म न वहुत्वमात्रेण प्राबल्यमिति न वयमत्र विप्रतिपत्तेरवसरं पश्यामः ।

यत्तु पुनः प्रतिवादिभयंकराचार्याः नाम्नोल्लिखिता अपीमे ग्रन्था अदृष्ट श्रुतपूर्वा इति वदन्ति, तत्र वयमिदमेव पश्यामः नैष स्थाणोरपराधो यदेनमन्धो न पश्यति । एतावत्त्वत्र न निह्नवमर्हति प्रतिवादिभयंकराचार्यसदृशाः श्रीमदनन्ताधूपकरशास्त्रिसदृशा वा वहव एवात्र पूर्वं विचारका आसन्, तत्र च वहुभिरेव च दौहित्रभागिनेयदत्तकत्वायोग्यत्वं ब्राह्मणादिषु व्यवस्थापितमिति, सुधीरमिदमत्र वक्तुमीश्महे दत्तकविवादनिर्णयसमुद्धृता दत्तकदीधित्यादयो न केवलं नाम्ना न वाऽमुद्रितरूपेण । किंतु मार्कि पञ्चाशत्संवत्सरतः पूर्वमेव मुद्रापिता अपि वर्तन्त इति विशिष्य दत्तकनिर्णयार्थं प्रवृत्तेषु सर्वेषु निवन्धेषु यदि भागिनेयादिदत्तकत्वनिषेधः सन्यायविचारं मयूखसिद्धान्तनिरासपूर्वकं वीरमित्रोदये तन्निरासश्चोपलभ्यते तर्हि कथं वा धर्माचार्यैः तत्तत्सम्प्रदायप्रवर्तकैः साहसमप्रमाणीकर्तुं स शक्यत इति । सर्वथा तु भागिनेयदत्तकत्वनिषेधोऽपि बहुषु निवन्धेषु वर्तत इति नात्र कस्यापि विप्रतिपत्तिः ।

इदमेवात्रालोचनीयम्—यद् भागिनेयादिदत्तकत्वनिषेध व्यवस्था न्यायानुसारिणी, किंवा तद्योग्यत्वव्यवस्थेति । इदमत्र प्रतिवादिभयंकराचार्या मन्यन्ते—यदैतरेयब्राह्मण तद्भाष्यादितो विश्वामित्रेण स्वभागिनेयः शुनःशेपो दत्तकत्वेन गृहीत इत्यवगमाद् भागिनेयादिदत्तकत्वयोग्यत्वं श्रौतमिति तदनुसारिणी द्वितीया व्यवस्थेति, ततश्चेदमप्यर्थसिद्धं—यत्प्रथमव्यवस्थैव श्रुतिविरुद्धत्वादप्रमाणमिति । अत्र मातापित्राद्यदानेऽपि स्वयं दत्तस्य देवदत्तस्यापि वा दत्तकत्वमिति सत्यमियं रमणीयेव प्रतिभाति कल्पना श्रीमदाचार्याणाम् । परन्तु नायं शास्त्रार्थः कति वा दत्तकविधयो नात्रानुल्लंघिता भवन्तीति सर्व एव नाम समालोचयन्तु । इदन्तु नात्रानवसरं सूचनम्—यदेतदाचार्यसमुद्धृतान्यैतरेयभाष्यवाक्यानि तन्मूलमपि स्पष्टं भागिनेयदत्तकत्वं निषेधन्तीति ।

इमान्यत्र तद्गतान्यैतरेयवाक्य तद्भाष्याणि "यथैवाङ्गिरसस्सन्नुपेयां तव पुत्रताम्" अत्र भाष्यम् अहमिदानी मङ्गिरो गोत्रस्संस्तत्परित्यागेन तव पुत्रत्वं येन प्रकारेणोपेयाम् तथैवानुगृहाणेतिशेषः—" अनेन हि स्पष्टमिदं ज्ञायते यच्छुनःशेपस्य स्वगोत्रनिवृत्त्युपायः केवलं विश्वामित्र तपः शक्त्यधीनो न शास्त्रचोदितः कोपि विधिस्तत्रवर्तत इति । स्वीकुर्वन्ति चायमेवात्र वाक्यार्थ इति—'एतद्वाक्यार्थश्च भाष्य एव स्पष्टीकृतः—"एतद्वाक्यार्थश्च पूर्वैःसङ्क्षिप्य दर्शितः ।

पुरास्मानं नृपं विप्रं तपसा कृतवानसि ।

एवमङ्गिरसं मां त्वं वैश्वामित्रमृषे कुरु इति ॥"

संगृह्णन्तः श्रीमदनन्ताचार्यस्वामिनोपि । अनेन हि संग्रहवाक्येन विश्वामित्रतपःशक्तिमात्रसाध्यं शुनःशेप वैश्वामित्रत्वं न दत्तकविधानादिसाध्यं तदिति स्पष्टमवगम्यते इति कथमैतरेयवाक्यतद्भाष्यसन्दर्भो भागिनेयदत्तकत्वपक्षानुकूल इति सर्व एव विभावयन्तु तदिदमनेन सिद्धम्—यद् भागिनेयदत्तकत्वनिषेध एव श्रुतिमूलो न तन्निषेध इति न्यायानुसारिणो निवन्धा भागिनेयदत्तकत्वनिषेधपरा एव न तद्योग्यत्वपरा इति श्रीमदनन्ताचार्यसमादृत न्यायतएवेदमवगम्यते ।

सति चैवं—

ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ।

समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।

दौहित्रं भागिनेयं च मातृष्वसृसुतं विना।

इत्यादीनां दौहित्रादिदत्तकत्वनिषेधकत्वेनाभिमतानां विरोधाधिकरणन्यायेनाप्रामाण्यमित्युल्लेखोपि श्रीमदनन्ताचार्यस्वामिनां कथमुपपद्यत इति त एव नाम विवेचयन्तु। इदमेवात्रैतत्समालोचनेन सूचयामः यद्-दत्तकविवादनिर्णयकारा बहुतरनिबन्धविरोधमापादयन्तः दौहित्रादिदत्तकत्वसाधक निबन्धसत्त्वमभिप्रयन्तोऽपि तत्प्रामाण्यं 'नोरीकुर्वन्ती'ति स्पष्टं तत्पुस्तकेनैवावगम्यत इति श्रीमदनन्ताचार्या अनुक्तमेवोपालभन्ते—भागिनेयदत्तकत्वयोग्यत्वमपि निबन्धानुसारेण दत्तकविवादनिर्णयकाराः स्वीकुर्वत इति। यत्त्वत्र 'समानगोत्रजाभावे पालयेदन्यगोत्रजम्। दौहित्रं भागिनेयं वा मातृष्वसृसुतं विनेति वचनस्याप्यप्रामाण्यकोटौ विरोधाधिकरणन्यायेन समुल्लेखः स मन्यामहे परपक्षमवलम्ब्यैव न स्वमतमित्युत्तरत्र तस्यान्यथायोजनं न पूर्वापरविरुद्धमिति। इदमेवात्रैषामभिमतमिति पश्यामः यत्—समानगोत्रजाभाव इत्यस्य दौहित्रादिदत्तकत्वयोग्यत्व एव प्रामाण्यसिद्धिरन्यथा तु न तत्प्रामाण्यमपीति तत्प्रामाण्यसिद्ध्यर्थमपि अर्थान्तरपरतयैव व्याख्यानं युक्तमिति। वयन्तु जानीमः उक्तेनैव हेतुना श्रुतिविरुद्ध भागिनेयादि दत्तकत्वव्यवस्थापनपरमेव व्याख्यानमेतद्वचनाप्रामाण्यनिदानं भवतीति।

वस्तुतस्तु—ऐतरेयब्राह्मणमिदं न शुनःशेपदत्तकत्वव्यवस्थापनपरम्। किन्तु तदाभिमानिकपुत्रत्वव्यवस्थापनपरमेव। अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदेति अपुत्रविषय एव दत्तकविधानं नतु सपुत्रविषय इति नात्र बालिशा अपि न विज्ञाः। विश्वामित्रस्य तु शुनःशेपागमनकाले बहव एव पुत्रा आसन् इति "सहोवाच विश्वामित्रो ज्येष्ठो मे त्वं पुत्राणां स्याः" इत्यैतरेयवाक्यमेव स्पष्टं बोधयतीति कथं वा प्रतिवादिभयङ्कराः स्वयं धर्माचार्यत्वमुद्घोषयन्तोऽपि शास्त्रमन्यथा कुर्वन्तीति न जानीम इति नात्र दत्तकत्वश्रौतत्वशङ्काया अवसरलेशोऽपि।

अस्तुवा श्रुतिविरोधाविरोधचिन्ता इदमेवात्र वयं समालोचयामः यत् 'समानगोत्रजाभावे पालयेदन्यगोत्रजम्। दौहित्रं भागिनेयं च मातृष्वसृसुतं विना इति वचनं किं स्वरसतो भागिनेयादिदत्तकत्वं निषेधति उत तद्व्यवस्थापयतीति। श्रीमदनन्ताचार्यकल्पिते समानगोत्रजाभावे मातृष्वसृसुतं विना, तत्रापि दौहित्रं भागिनेयं च मुख्यतया पालयेदित्येको वाक्यार्थः समानगोत्रजाभावे अन्यगोत्रजमपि दौहित्रं भागिनेयं च पालयेत् तयोश्चाभावे मातृष्वसृसुतं विना अन्यगोत्रजं यं कमपि पालयेदित्यपरो वाक्यार्थ इति व्याख्याद्वये द्वितीयं व्याख्यानं न साम्प्रतं पश्यामः, यतः खलु अन्यगोत्रजमपीत्यपिशब्देनान्यगोत्रजत्वं दत्तकत्व विरोधीति मन्यन्ते। नहि तन्मते यत्र तयोरभावे मातृष्वसृसुतं विना यं कमपिअन्यगोत्रजमपि पालयेदिति सिद्धान्तः, तत्रान्यगोत्रजत्वं दत्तकत्वविरोधि, मातृष्वसृसुतत्वमेकमेव खलु तत्र विरोधि यत्त्वत्र मुख्यत्वामुख्यत्वकल्पना, तयोरभाव इत्यादियोजनं च, तदिदं न्यायविरुद्धत्वात् स्वकपोलकल्पितं न तु मौलिकम्। स्पष्टमिदं सर्व एव विजानन्ति यत्—सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यत इति। द्वितीयव्याख्याने तु स्पष्टं मुख्यतया दौहित्रभागिनेयदत्तकत्वविधानमिति वाक्यभेदमेते समाश्रयन्ति एतेन—प्रथमव्याख्यानमपि—परास्तम् तदत्र वयं मन्यामहे दौहित्रभागिनेयमातृष्वसृसुतव्यतिरिक्तमन्यगोत्रजं गृह्णीयादित्येक एव वाक्यार्थोऽत्र समुचित इति दौहित्रभागिनेयातिरिक्तासगोत्रदत्तकत्वस्य बहुप्रमाणसिद्धस्य व्याघातो दत्तकविवादनिर्णयकारापादितो दुरुद्धर एव भागिनेयदत्तकत्वे। एतदेवाभिप्रेत्य दत्तकमीमांसायां पुत्रच्छायावहं सुतमिति व्याख्यानावसरे भ्रातृपितृव्यमातुल दौहित्रभागिनेयादीनां प्रतिग्रहानर्हत्वमुक्तम्।

यत्तु श्रीमदनन्ताचार्या मातुलस्य पुत्रत्वप्रतिग्रहानर्हत्वोक्तिर्माधवाचार्यकालीनशिष्टाचारविरुद्धत्वादप्रमाणमिति व्यवस्थापयितुं दत्ताप्रदानिकप्रकरणगतम् अदूरबान्धवमिति वसिष्ठवचन विवरणरूपं सन्निकृष्टमातुलादिबान्धवमिति वाक्यं समगृह्णन् तदिदमपि सन्निकृष्टमातुलादिबान्धवमित्यस्य बहुव्रीहिसमासेन विदिताभिजनमित्येवंपरत्वमेवेत्यपरार्कसिद्धान्तपर्यालोचनेन मातुलादिदत्तकत्वव्यवस्थापनपरत्वाभावान्न प्रकृतोपयोगीति दत्तकविवादनिर्णयोक्तिपर्यालोचनेन वयं न साम्प्रतं पश्यामः। सन्निकृष्टमातुलादिबान्धवमिति तु न कर्मधारयसमासः यतो नासन्निकृष्टमित्यनेन सामानाधिकरण्यसम्भवः। बहुव्रीहिपक्षे विदिताभिजनमसन्निकृष्टमपि गृह्णीयादिति, स्पष्टमेवाविरोध इत्यादि सत्यवसरेऽवसरान्तरे विवेचयिष्यामः। नहि सन्निकृष्टमातुलादिबान्धवमिति बहुव्रीहिसमासघटितवाक्यप्रयोक्तारो माधवाचार्या मातुलादिग्राह्यत्वमभिप्रयन्ति। अत्र सन्निकृष्टमातुलादिबान्धवपदस्य विदितमातुलादिरित्येवार्थो मन्यामहे दत्तकविवादनिर्णयकाराभिमतः न सन्निहितमातुलादिरिति व्यर्थमत्र श्रीमदनन्ताचार्या अर्थान्तरकल्पनया पुत्रं प्रतिग्रहीष्यन्नित्यादिपूर्वतनवाक्येनैव सिद्ध्यैतद्वैयर्थ्यमित्यादिनाऽनुक्तमुपालभन्ते।

अत्र हि प्रथमं सामान्यतः विदिताभिजनं गृह्णीयादिति विधिः। असन्निकृष्टमिति तु सन्निकर्षनियमवारणार्थमिति विदिताभिजनत्वेन सर्वग्राह्यताप्रतिपादनपरमिदमिति विशेषवाक्यपर्यालोचनां विना नानुष्ठापकं भवतीति बोधनमेव अदूरबान्धवमित्यस्य सामान्यवचनत्वात् विशेषवचनप्राप्तभागिनेयाद्यदत्तकत्वनिषेधतात्पर्यायोगाच्च चिन्त्योपपत्तिकमिति वदन्तो मन्महे दत्तकविवादनिर्णयकाराः प्रतियन्तीति नात्र लेशतोपि विरोधं पश्यामः। अत्र सामान्यवचनं न कस्यापि विधाने समर्थमित्यादि न तेषामभिमतम्। किन्तु भागिनेयादिविशेषविषयत्वेन समर्थमित्येवेति "सामान्यवचनत्वं कस्याप्यर्थस्य विधाने न विरोधीति" व्यर्थमिदमनुक्तोपालम्भनम्। स्पष्टमिदं वयं जानीमः यद् विशेषवचन प्राप्तभागिनेयाद्यदत्तकत्व निषेधतात्पर्यायोगादिति वदन्तो दत्तकविवादनिर्णयकाराः पर्युदासन्यायेनात्रैकवाक्यतामेवाभिप्रयन्ति न तु सामान्यविशेषन्यायेन यतो दशमाध्यायेऽष्टमे पादे पूर्वमीमांसायां स्पष्टं विधिनिषेधयोः सामान्यविशेषन्यायाप्रवृत्तिं पर्युदासाधिकरणे पश्यामः। अत्र विशेषवचनादिपदेन विशेषविषयकपर्युदासमेव निर्णयकारा मन्यन्ते, सति चैवमुक्तवाक्यार्थानुवादव्याजेन—'सामान्यरूपत्वे विशेषनिषेधसत्त्वे निषिद्धार्थव्यतिरिक्तार्थविधायकं सामान्यवचनमित्येव मीमांसकसिद्धान्त' इति विधिनिषेधयोरपि सामान्यविशेषन्यायप्रवृत्त्युपपादनं श्रीमदनन्ताचार्याणां मीमांसकसिद्धान्तविरुद्धमेव। विधिद्वय एव सामान्यविशेषन्यायो न विधिनिषेधयोरिति हि शास्त्रार्थः।

यत्तु पुनर्दत्तकत्वनिषेधवाक्यानां प्रामाण्ये संशयप्रदर्शनमेतेषां तदिदं दत्तकत्वविधिवाक्यानामेव विषये तदीयेनैव न्यायेन भवतीति पूर्वमेवोपवर्णितम्। तदत्र वयमन्ते 'ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्' इत्यस्य देशविशेषे भागिनेयादिसुताभावबोधन एव तात्पर्यमिति श्रीमदनन्ताचार्याणां विवरणं किञ्चिदिव समालोचयामः अत्र श्रीमदनन्ताचार्याणां दत्तकविवादनिर्णयकाराणां च नञ् घटितक्वचिदादिपदघटकचित्पदस्याप्यर्थकत्वे सति बाधे तदभावे, वक्तृतात्पर्यानुसारेण व्यवस्थायां च न विवाद इति जानीमः। इदमेवात्र विप्रतिपन्नं यद् 'ब्राह्मणादित्रये नास्ति' इति श्लोके किमप्यर्थकत्वमेवोतनेति, वयन्तु पश्यामः—देशविशेषे भागिनेयादिदत्तकाभाव एव वक्तुस्तात्पर्यमित्यत्र प्रमाणाभावान्नात्र क्वचिद्देश इति विवरणं युक्तमिति। नहीदं वचनसिद्धं न्यायसिद्धं वा यद्देशविशेषे ब्राह्मणादौ भागिनेयादिदत्तकत्वमस्तीति। प्रकृत प्रसङ्गदृष्ट्या तु सुधीरमिदं वक्तुमर्हामो यद् गोवा

प्रान्ते भागिनेयदत्तकत्वप्रथैव नास्तीति दत्तकविवादनिर्णये केनचन प्रभुणा प्रथमं भागिनेयो दत्तकत्वेन गृहीतः पश्चाच्च तद्दत्तकत्व व्यवस्थानुसारेण स्वकन्यापि तस्मै दत्तेति गोवाप्रान्तीयानामन्येषां च वाक्यत एव स्पष्टीकृतमिति श्रीमदनन्ताचार्यसिद्धान्तदृष्ट्यापि न प्रकृतभागिनेयदत्तकत्वं सिद्ध्यतीति। दत्तकविवादनिर्णये न सामान्यतो भागिनेयदत्तकत्वमात्रं निरस्तम् किन्तु विना होमादिकमङ्कारोपणादिमात्रेण लौकिकव्यवहारमात्रेण वा न दत्तकत्वमपीति श्रीमदनन्ताचार्यपादा अन्ये वा मन्यामहे नापादचूडं तं स्म समालोचयन्ति। विश्वस्तसूत्रतो वयमिदं स्पष्टं जानीमः—यत् गोवाप्रान्तीयप्रकृतदत्तकविचारे बहूनां पत्रप्रतिपत्रादीनां दर्शनेन होमादिकं शास्त्रीयविधानं न प्रकृतदत्तकविषयं संवृत्तमित्यादिकं विचारप्रणाल्या निश्चित्यैव निबन्धविशेषप्रामाण्योरीकरणेऽपि प्रकृतदत्तकसिद्धिर्न भवतीति दत्तकविवादनिर्णये श्रीसंकेश्वरमठाध्यक्षाः पण्डितानामनुमत्या व्यवस्थापयन्तिस्मेति व्यर्थमत्र सम्प्रदायविशेषे हस्तक्षेपणमन्येषामिति प्रतिभाति। सारस्वत संप्रदायपक्षपातिनां केषांचन गोवाप्रान्त एव ब्राह्मणभागिनेयदत्तकत्वमयोग्यमिति गोकर्णतः तत्सम्प्रदायाचार्याणामाज्ञापत्रमपि दत्तकविवादनिर्णयकाराः विचार्यैव तत्रास्य व्यवहारस्य प्रवर्तनमयोग्यं मन्यन्ते स्म। वंगदेशे सत्यं भागिनेयदत्तकप्रथा प्रचलति, परन्तु न ब्राह्मणादिषु किन्तु शूद्रेष्वेव। इदमेवान्ते सप्रश्रयं विज्ञाप्यते यत् विना दत्तकहोमादिकं प्रकृतदत्तकविषये दत्तकत्वव्यवस्थानां ब्राह्मणेषु कथं व्यवस्थापनमर्हतीति श्रीमदनन्ताचार्या एव विवेचयन्त्विति।

अनेन साकं ग्रन्थेन दत्तकविवादनिर्णयविमर्श इति ग्रन्थान्तरमपि मुम्बई नगर वास्तव्य बाबु महादेवशास्त्रिवरप्रकाशितमवश्यमस्मदीयं विशिष्टं समालोचनमर्हति, परन्तु स्थानाभावात्संख्यान्तरेषु स्पष्टं तत्समालोचयिष्यामः।



## प्रश्नोत्तरम्।

[ निब०—पं० बच्चुरामशास्त्री, काशी। ]

अथ खल्वखिलभारतीयब्राह्मणमहासम्मेलने प्रस्तुतसप्तदशप्रश्ना यथाशास्त्रमुत्तरयितव्या इति विदुषामभ्यर्थना। तत्र तावत् स्त्रीपुंसयोर्विवाहसमयः शास्त्रानुसारात्कियदवस्थातः कियद्वयःपर्यन्तं भवितुमर्हतीति प्रथमप्रश्नस्योत्तरम्। तथाहि च्यवनः—

षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः।
सोमो भुङ्क्तेऽथ गन्धर्वस्ततः पश्चाद्धुताशनः॥

इत्येतेन षड्वर्षादूर्ध्वं मनुष्याधिकार इति सूचितवान्। तदनन्तरञ्च द्वादशवर्षावधि समवर्षेषु कन्याया विवाहार्हता भवति। तदुक्तं नारदेन—

युग्मेऽब्दे जन्मतः स्त्रीणां शुभदं पाणिपीडनम्॥इति॥

विवाहो जन्मतः स्त्रीणां युग्मेऽब्दे पुत्रपौत्रदः इति कश्यपोक्तिरप्यत्रानुकूला। अत एव व्यासोऽपि—

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी।
दशवर्षा भवेत्कन्या तत ऊर्ध्वं रजस्वलेति॥

अष्टवर्षानन्तरं यावद्दशवर्षं तस्य प्राशस्त्यमाह। एतदेवानूदितं मात्स्ये—

गौरीं ददद्ब्रह्मलोकं सावित्रं रोहिणीं ददत्।
कन्यां ददत्स्वर्गलोकमतः परमसद्गतिम्॥

प्राप्नोतीति शेषः।

गौरी विवाहिता सौख्यसम्पन्ना स्यात्पतिव्रता।
रोहिणी धनधान्यादिपुत्राढ्या सुभगा भवेत्॥
कन्या विवाहिता सम्पत्समृद्धा स्वामिपूजितेति च।

तथा च तत्तन्निबन्धेषूद्धृताभिराभिस्स्मृतिभिस्तत्र तत्र कृताभिर्व्यवस्थाभिश्चाष्टवर्षमारभ्य यावत्किञ्चि-

दूनद्वादशवर्षे कन्योद्वाहसमयोऽवसीयतेऽतः परं प्रायो रजःसम्भवात् । अत एव—

कन्या द्वादशवर्षाणि याऽप्रदत्ता वसेद्गृहे ।
ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥

इति द्वादशवर्षात्किञ्चिदूनमेव स्वीकृतवान् यमः । अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत् इत्यपि समञ्जसम् । यत्तु भारते—

त्रिंशद्वर्षः षोडशाब्दां कन्यां विन्देत नग्निकाम् ।
द्व्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः इति ॥

यच्च—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यान्द्वादशवार्षिकीम् ।
षड्वर्षामष्टवर्षां वा धर्मे सीदतिसत्वर ॥ इति ॥

तदेतद्द्वयमपि आपद्विषयम् । एतदेवाभिप्रेत्य राजमार्त्तण्डो—

राजग्रस्ते तथायुद्धेपितॄणाम्प्राणसंशये ।
अतिप्रौढ़ापि दातव्या चन्द्रलग्नवलेन तु ॥

इति स्पष्टमुक्तवान् चकारादतिवालापि प्राणसंशय इत्युक्तेः । अत्रैव भारतवाक्यस्थनग्निकाशब्दस्योपयोगः । किञ्च पूर्वस्मृतित्रयेऽपि धर्मे सीदति सत्वर इति वाक्यं साक्षादापद्विषयतां स्फोरयति इत्यलम् । अथच त्रिंशद्वर्षो वहेत्कन्यां हृद्यान्द्वादशवार्षिकीम् । त्रिंशवर्षः षोडशाद्वामित्यादिस्मृतिभिः कन्यायाः द्विगुणो वर इत्यभियुक्तोक्तेश्च कन्यापेक्षया वरस्य द्विगुणवयस्कता प्रतिपादितेति निर्विवादम् । परन्तूपनयनोत्तरं वेदाध्ययनार्थं यदा ब्रह्मचर्यव्रतपरिपालनन्तदर्थमेव त्रिंशदव्दाद्यभिधानम् । सम्प्रति तु ब्रह्मचर्याश्रमस्य वानप्रस्थाश्रमवल्लुप्तप्रायत्वाद्दुराचारप्रवृत्तिभीतेश्च द्विगुणशब्दस्याधिक्योपलक्षणतया व्याख्यातव्यत्वेन सप्तदशाव्दादिको वरविवाहसमयोऽवसेयः । यत्तु सुश्रुतः—

ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।
धत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्वलेन्द्रियः ।
तस्मादत्यन्त बालायां गर्भाधानं न कारयेत् ।इति॥

स त्वतिवालाविषयकगर्भाधाननिषेधपरः अतिवालात्वं तु दशवर्षाद्यावद्वादशाब्दमेव वालेति गण्यते नारी यावद्वर्षाणि षोडशेत्युक्तेः । पूर्वसार्धपद्यस्य तु षोडशवर्षादिकमारभ्य वध्वां पञ्चविंशतिवर्षादिकं यावत्त्रिंशद्वर्षवयस्क पुरुषेणाहितगर्भाद्भाग्यवलायुर्विशिष्टपुत्रोत्पत्तिप्राशस्त्य वोधनपरतेति वोध्यम् । अत एव वधूप्रवेशादिकं विवाहात्तृतीये पञ्चमे च कुर्वन्ति शिष्टा इति निवाहोत्तरञ्च कौतुकागारे सहस्थितयोरपि तयोर्ब्रह्मचर्य्यप्रतिपालनविधिश्च संगच्छते इत्यलम् ।

२–३–द्वितीयतृतीयप्रश्नयोर्निर्धारणं तु प्रथमप्रश्नोत्तरनिर्द्धारित विषयान्नातिक्रामति यतो दशवर्षावध्येव कन्योद्वाहस्योत्तमतां फलातिशयतां प्रतिपादयता व्यासपराशरादीनतिक्रम्य लोकपरिस्थितिमवलम्ब्य वर्षद्वयमधिकन्निकृष्टकञ्चन्निर्द्धारितम् । रजःप्रवृत्त्यनन्तरञ्चापद्धर्मता तस्योद्घाटितेति नात्र वहुविचारस्यावकाशः इति ।

यत्तु पराशरः कलियुगीयधर्मव्यवस्थापने विशेषतोऽभिमतः—

'माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
यस्तामुद्वाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्योह्यपाङ्क्तेयः स भवेद्वृषलीपतिः ॥
यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
सभैक्ष्यभुग्जपन्नित्यन्त्रिभिर्वर्षैर्विशुध्यति ॥

इति व्यवस्थापयामास तस्य तु निजगृहस्थितानुद्वाहितदुमतीदर्शनकर्तृ मात्रादिनरकगतिवोधनपूर्वकमदमोहितब्राह्मणकर्तृकतदुद्वहनजन्याऽसंभाष्यताऽपाङ्क्तेयताविधानोत्तरवृषलीपतित्वं विधाय केवलैकरात्रसेवन प्रायश्चित्तं भैक्ष्यभोजनपूर्व

गायत्र्यादिमन्त्रजपप्रधानं त्रैवार्षिकमनुमतम्। एतस्य च स्मृतित्रयस्य नरकाङ्क्षीरुभिर्मात्रादिभि र्द्वादशवर्षाभ्यन्तरमेव कन्योद्वाह्या, विवक्षुणा च ब्राह्मणेनाऽसंभाष्योऽपाङ्क्तेयो वृषलीपतिश्च माभूवं त्रैवार्षिकं प्रायश्चित्तमपि नाचारिषमिति न ग्राह्या सेति तात्पर्यम्। एतदपि पर्वोक्तोद्वाहसमयदार्ढ्ये एव समुपयोगीति किमधिकञ्चतुर्थप्रश्नोत्तरे इति शम्।

५—यद्यपि ब्राह्मणत्वजातिरेकैव तथापि गोत्रकुलतत्तद्देशावस्थित्यादिभेदमादाय विभिन्नापरजातिविशिष्टावान्तरश्रेण्याचारादेर्विभिन्नतया निषेधशास्त्राभावेऽपि

'यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः।
वेदशास्त्रविरुद्धोऽपि स आचारो विधीयते।'

इति स्मरणात् देशभेदाद्देशाचारतो वा व्यवस्थेतितत्तन्निबन्धेषूक्तत्वाच्च न परस्परं विवाहादीति मन्तव्यम्। अत एव मातुलकन्यादेर्विवाहो दाक्षिणात्यानामित्यादि सङ्गच्छते इति शम्।

६—धर्मस्यातिसूक्ष्मतयाऽतीन्द्रियत्वेनास्मदादिबुध्यगोचरत्वेन श्रुतिस्मृतिचोदितेऽपि तस्मिन्भ्रमप्रमादादिदोषदूषितमतिमदाधुनिकविद्वद्धौरेयैरपि निर्णेतुमशक्यत्वेन च लौकिकस्मृत्यर्थेऽपि विप्रतिपद्यमाना विमतयो विरुद्धार्थप्रतिपादनेनानर्थमर्थं मन्यमाना धर्मं विप्लावयन्तो यदि दृश्यन्ते तर्हि वेदार्थयाथार्थ्यविज्ञानिनः साम्प्रतिका इत्यत्र सन्देह एव। यत्र पारदर्शिनामपि व्यामोह इति धर्मज्ञा मन्वादय एव त्रिकालज्ञा नान्ये धर्मज्ञतां प्राप्तुमर्हन्तीति श्रुतिमूलकस्य धर्मस्य सृष्ट्यादौ परमात्मनोऽवगतवेदार्थानां तेषामेव लोकबुभुत्सया स्मृतीनाङ्कर्तृत्वेन स्वतो वेदप्रामाण्यवत्परतोऽपि प्रामाण्यं स्मृतीनामिति निर्विवादम्। सम्प्रति तु व्यवहारनिर्वाहाय साङ्गवेदाध्येतॄणामनेकेषां परिषदपि धर्मनिर्णये समर्थेति यथाकथंचिद्धर्मज्ञत्वं परिषदोऽपि तत्तद्वचनावलम्बनपुरस्सरं धर्मविकाशे वा न तु स्वस्वरचितस्मृतिद्वारा संकोचविकाशयोः स्वातन्त्र्येण धर्मज्ञम्मन्यमानानामाधुनिकानामित्यलम्।

७—अथ केचिद्देशकालपरिस्थितिमवेक्ष्य विधवायाः पुनर्विवाहं वरमन्वाचक्षाणाः कलौ पराशरस्मृतेर्बलवत्त्वमुत्प्रेक्ष्य 'नष्टे मृते प्रव्रजित' इत्यादिस्मृतीरन्यार्थिका अपि स्वार्थसाधकत्वेनोदाहृत्य शास्त्रसिद्धः पुनर्विवाह इति यत्र तत्र प्रचारयन्ति। अत्र च विद्वांसोऽपि मोहमापन्ना आर्यगृह्यतां पुरस्कृत्य केचिदिमं पक्षमादत्तवन्तस्तथाभूता एवेति तान् प्रति व्यवस्थापयितुमुत्सहामहे—तथाहि नष्टे मृते प्रव्रजिते, इत्यादिपराशरस्मृतौ पत्यावित्यनुक्त्वा पतित्ववति पतिशब्दस्य पतावित्युक्तेः पूर्णाङ्गसम्पादकसप्तपदीतः प्राग्वाग्दानोत्तरं ज्ञातनष्टादिकारोपितपतित्व विषयतयान्यार्थताया बहुशः स्पष्टतया सर्वसाधारण्येन ज्ञेयत्वात्तद्विषये बहुलेखनं निरर्थकमित्यत्रोदास्महे। उदाहरिष्यमाणाभिरन्याभिः स्मृतिभिर्विरोधस्य दुष्परिहरत्वाच्च तदन्यार्थता स्पष्टैव यथादिपुराणे—

ऊढायाः पुनरुद्वाहं भ्रातृजायां कमण्डलुम्।
कलौ पञ्च न कुर्वीत ज्येष्ठांशं गोवधं तथा॥

मनुश्च—

यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितुः।
तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत्॥

संस्थितमित्यस्य मृतमित्यर्थः न लंघयेदित्यस्य मरणोत्तरमपि तदनुस्मरणतद्विषयकतीर्थोपवासादिना शरीरशोषणङ्कुर्यादिति निष्कृष्टोऽर्थः न तु पत्यन्तरङ्कुर्यादिति। किञ्च मृतलंघनाभावप्रयोजकं मृतस्यापि पत्युरेव तस्यां स्वत्वम्बोधितम्। अत एव मनुना प्रदानं स्वाम्यकरणमित्युक्तम्। एवं न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्यत्विति पतिमरणोत्तरं परनामग्रहणनिषेधोऽपि पराशरोक्त उपपद्यते किम्पुनर्विवाहः। अपि च 'देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मन इति तथा सकृत्कन्या प्रदीयत इति। अतो प्रवृत्ते रजसि

कन्यान्दद्यात्पिता सकृत् । इत्येवंजातीयानि मुनिवचनानि संगच्छन्ते । अत एवाज्ञानादपि विधवामुद्वहतस्तत्परित्यागोत्तरं प्रायश्चित्तं स्मरतिस्माश्वलायनः ।

अज्ञात्वा तु द्विजो यस्तु विधवामुद्वहेद्यदि ।
परित्यज्य च तां सद्यः प्रायश्चित्तं समाचरेत् ॥

अपि च—

न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ।

इति सङ्गतम् । किञ्च एकस्य वह्व्यो जाया भवन्ति नैकस्यै वह्वः सहपतय इति श्रुतिरपि पत्यन्तराकरणं साक्षाद्ब्रूते । यत्तु सहपतय इत्यस्यैककालावच्छेदेन वह्वः पतयो न भवन्तु नाम क्रमिकाणां वहूनां सत्वे तु नेदं प्रमाणम् इति तन्न स्मृतीनां वेदार्थानुवादकत्वात्पूर्वोक्ताखिलस्मृतिविरोधात् । नैका द्वौ पती विन्दतीति श्रुतिवैषम्याच्च । किञ्च—

मृते भर्तरि या नारी ब्रह्मचर्य्यव्रते स्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥

इति पराशरेण विधवाया यावज्जीवं ब्रह्मचर्यविधानं फलश्रुतिप्रतिपादनद्वारा पुनर्विवाहो नरकादिप्रापक इति सूचितम् । यत्तु—

या पत्या च परित्यक्ता विधवा स्वेच्छयापि वा ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥
सा चेदक्षतयोनिस्स्याद्गतप्रत्यागतापि वा ।
पौनर्भवेण भर्त्रा सा पुनस्संस्कारमर्हति ॥

इति पुनस्संस्कारविधानमाहुस्तत्तुच्छं तस्याः पुनर्भूत्वस्य तदुत्पन्नपौनर्भवपुत्रस्य बहुशो गर्ह्यतया प्रतिपादनात् । विस्तरभयाच्च गर्ह्यत्वोपपादनाद्विरम्यते । नियोगविधिस्त्वन्यो युगान्तरविषयश्चेति न तस्यैतद्विषये प्रसङ्गः तथा च विधवोद्वाहे न कोऽपि विधिर्न वा परिसंख्या नापि नियम इति सर्वमनवद्यम् ।

८—यस्त्वस्पृश्यानां चाण्डालादीनां विलोमसंकराणां जात्याऽस्पृश्यत्वङ्कर्मणावेत्यष्टमः प्रश्नस्तत्र जात्यैवाऽस्पृश्यत्वं धर्मशास्त्रकृतामभिमतम् । जातिव्यक्त्योः सम्बन्धस्यायुतसिद्धत्वात् । अत एव तत्तज्जातीयबालवृद्धयोः स्वस्वजातीयकर्माकरणेऽपि अस्पृश्यताव्यवहारोऽत्र दृश्यते । कर्मापि बीभत्साद्युत्पादनद्वारा सहकारितया निमित्तकारणमस्तु परन्तु न तत्सामान्यकारणम् । अन्यथा गर्हिताचारिषु जात्यन्तरेष्वप्यस्पृश्यता प्रसज्येत । पातित्यहेतुककर्माचारिषु द्विजेष्वप्यस्पृश्यत्वं सूचितमेव यतः पतितसंसर्गिणां यदि पातित्यहेतुकास्पृश्यता तर्हि पतितानां का कथा । विलोमसङ्कराणामन्त्यजचाण्डालादीनां तु पातित्यं जन्मनैव सिद्धम् । अत एवैषां कर्मविधायकं शास्त्रं सङ्गच्छते यथा चाण्डालविशेषस्य मृतकर्पटाद्याहरणं ग्रामाद्दक्षिणस्यां दूरे निवासादीति विदुषान्न तिरोहितम् ।

९—एवं म्लेच्छान्त्यजादीनामस्पृश्यानां स्पर्शे सतां सदसि प्रवेशे देवालयप्रवेशपूर्वकदेवानां दर्शनादौ कूपादितो जलाहरणादौ च यत्र तत्र या प्रथा प्रचलिता तद्रक्षणं कार्यन्नवेति यदि कार्यं तर्हि क उपाय इति नवमः प्रश्नः । तत्र यदि पराशरादिभिश्चाण्डालादीनां दर्शने सम्भाषणे सहैकपथगमने च प्रायश्चित्तं विहितं तर्हि का कथा स्पर्शनसहासनादौ प्रायश्चित्ताधिक्ये किन्तु यथासम्भवपृथगासनादिना यथासाक्षात्स्पर्शो न भवेत्तथा यत्नः कर्त्तव्यः यदि च यत्ने कृतेऽपि सिद्धिर्न सम्भाविता तर्हि पश्चान्मार्जनगायत्रीजपादिना शुद्धिर्विधेया समूहे स्पर्शदोषस्याल्पत्वात् तथाहि—

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टन्न विद्यते ॥

इत्यत्रिस्मरणात् देवयात्राविवाहेष्विति गणकार्योपलक्षकम् । न विद्यत इत्यत्र नञर्थोऽल्पताऽनुदरा कन्येतिवत् । देवदर्शनादिकन्तु न निषिद्धं किन्तु स्पर्श एव निषिद्धोऽतो दूराद्दर्शनमुचितम् । पूजार्हस्थानगमने तु मार्जनलेपनादिकं विधेयम् । बलात्स्पर्शादौ तु पुनस्संस्कार एव देवस्येत्यलम् ।

---



# प्रश्नोत्तरम् ।

[ नि०-म० म० श्रीहाथीभाई शास्त्री । ]

[ १ ]

स्त्रीणां विवाहकालोऽष्टमवर्षादारभ्य द्वादशवर्षान्तः, पुंसां यद्यपि मनुना त्रिंशद्वर्षात्मकश्चतुर्विंशतिवर्षात्मको वोपदिष्टस्तथाप्यष्टादशावरो वरोऽवरः सम्मन्यते ।

[ २ ]

अत्र च वर्त्तमानपरिस्थित्यनुगुणं शास्त्राप्रतिषिद्धं स्त्रीणां द्वादशान्यूनवयस्कानां पुरुषाणां चाष्टादशान्यूनवयसां विवाहयोग्यवयोनियमनमुचितं प्रतिभाति ।

[ ३ ]

रजःप्रवृत्त्यनन्तरं विवाहस्य न मुख्यत्वाभावमात्रमपि तु सदोषत्वमपि; आपत्कल्पत्वकल्पनेऽपि प्रायश्चित्तीयत्वानपायः । रजःप्रवृत्त्यनन्तरं कन्याविवाहस्य प्रायश्चित्तीयत्वे स्मृतीनामविसंवादाद् गुणवद्वरालाभादिप्रयुक्तमापत्कल्पत्वम् ।

[ ४ ]

ऋतुदर्शने वृषलीत्वबोधकानां वचनानां "न हि निन्देति" न्यायेन ऋतोः प्रागेव कन्याप्रदाने स्पष्टतात्पर्यमवगम्यते ।

[ ५ ]

यद्यपि द्राविडकन्यापरिणये 'गौडस्य गौडकन्यापरिणये वा द्राविडस्य न क्वापि धर्मशास्त्रेषु प्रायश्चित्तविधानमुपलभ्यते:तथापि अवान्तरश्रेणीनां मर्यादाभङ्गे महानतिप्रसङ्ग आपद्येतातो वरमवान्तरश्रेणिषु स्वत्वेन पारम्परीतः स्वीकृतेष्वेव समुदायेषु कन्यापरिणयः । हविःकन्याव्यवहारयोर्मिथो व्याप्यव्यापकभावस्य विनिगमनाभावात्तद्वाक्यमत्र विषये न निर्णायकतामर्हति ।

[ ६ ]

धर्मज्ञसमयस्य धर्मस्वरूपनिर्णायकत्वे निमित्तत्वं न पुनर्धर्मपरिवर्त्तनक्षमत्वम्; धर्मसङ्कोचनं तु रोगाद्यापद्विषयं न तु वर्त्तमानकालीयजनानां धर्माचरणपरित्यागोपोद्बलकम् ।

[ ७ ]

विधवाविवाहो वृत्तसप्तपदीक्रियाणां विवाहमोक्षश्च सर्वथा शास्त्रविरुद्धो निन्द्यश्च ।

[ ८ ]

आशौचवतामृतुमतीनाञ्च नैमित्तिकमस्पृश्यत्वं तन्निमित्तापाये निवर्तते, येषां पुनश्चाण्डालादीनां जातिप्रयुक्तमस्पृश्यत्वं तज्जातिपरिवृत्तावेव निवर्त्तते विशेषस्तु मत्कृताद् 'अस्पृश्यस्पर्शविमर्शाद्' अवगन्तव्यः ।

[ ९ ]

यद्यपि म्लेच्छयवनाद्योऽस्पृश्या एव तथापि तेषां स्पर्शे सभाप्रवेशे कूपोदकग्रहणादौ च व्यवहारप्राचुर्याद् घृणातुदयमात्रं न तु स्पर्शदोषाभावः । देवालयादौ तेषामयोग्यः प्रवेशः ।

[ १० ]

भागवतदीक्षया भवतु भक्त्यधिकारित्वं न जात्युत्कर्षः स तु जन्मान्तरे स्वापेक्षयोत्कृष्टवर्णे जन्मनैव सम्पादनार्हो नान्यथा ।

[ ११ ]

यवनादिजातिस्तु जन्मसिद्धा न प्रायश्चित्तापनोद्या । जघन्यकर्मापादितं तु पातित्यादि यथायथं प्रायश्चित्तापनोद्यम् ।

[ १२ ]

श्रीमहाभारते शान्तिपर्वान्तर्गतनारायणीये तु भागवतदीक्षा देवाद्युत्तमानामुपवर्णिता, न हीनवर्णानां तत्र प्रसङ्गख्यानम् ।

[ १३ ]

देवलस्मृतिप्रामाण्यं विशेषविचारार्हं विदुषां चर्चामर्हति ।

[ १४ ]

म्लेच्छसंसर्गदोषस्य प्रायश्चित्तापनेयत्वं तु कौमुद्यादौ सुनिरूपितं परन्तु म्लेच्छसिद्धान्नभक्षणाभ्यासेन तत्साम्यमुपेतानामव्यवहार्यत्वं प्रायश्चित्तेन्दुशेखरादौ घण्टाघोषाधितं सर्वत्र ।

[ १५ ]

सिद्धान्नभक्षणयौनसम्बन्धातिरिक्तसंसर्गस्य प्रायश्चित्तेन व्यवहार्यता शास्त्रानुशिष्टा ।

[ १६ ]

पारस्करस्य त्रिपुरुषपर्यन्तमेव पतितसावित्रीका व्रात्यास्तेषामेव व्रात्यस्तोमेनोपनयनार्हतेति मतम् । आश्वलायनवाक्यं यद्यपि त्रिपुरुषाधिकानामप्यनुपनीतानां व्रात्यत्वबोधकमाभासते तथापि परःसहस्रपुरुषपारम्परीपरिभ्रष्टसंस्काराणां प्रायश्चित्तकल्पनं परावरविदां योगिनामपि बुद्धेरविषय इति पारस्करमतमुचितं भाति ।

[ १७ ]

जातिसामान्यं जन्मकृतं व्यवस्थितम्, न तत्रैहिककर्मणां प्रयोजकत्वम् ।



## विप्रपादाब्जवन्दनम् ।

[ नि०—पं० श्रीनित्यगोपाल विद्याविनोदः । ]

( १ )

जनमङ्गलकारणमृद्धवलं
जगदार्त्तिविदारणवज्रवरम् ।
रजसाप्लुतपावितदिग्वलयं
प्रणमामि चिरं द्विजपादयुगम् ॥

( २ )

अणिमादिकसिद्धिसमृद्धगृहं
परिमार्जितबुद्धिसुधीसुभगम् ।
जगतीतलमङ्गलदिव्यघटं
प्रणमामि चिरं द्विजपादयुगम् ॥

( ३ )

कलिकिङ्करमानवपापहरं
भवसागरतारणनौसदृशम् ।
जनिमृत्युनिवारणमुख्यवलं
प्रणमामि चिरं द्विजपादयुगम् ॥

( ४ )

धनधान्यसुतान्वयवृद्धिकरं
भवदावसमुत्थिततापहरम् ।
चिरशान्तिनिकेतनमीशसखं
प्रणमामि चिरं द्विजपादयुगम् ॥

( ५ )

बुधवृन्दशिरोधृतरेणुकणं
करुणाश्रितदुर्लभमुक्तिफलम् ।
रससारविनिन्दितदिव्यसुधं
प्रणमामि चिरं द्विजपादयुगम् ॥

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः ।" [ महाभारतम् ]

द्वितीयवर्षे } सौर ज्यैष्ठः शकाब्दाः १८५१ । { द्वितीय संख्या

## भारतगीतिका ।

[ पूर्वतोऽनुवृत्ता ]

( १ )

ऋषि दधीचि नृप शिवि रघु
हरिश्चन्द्र कर्णान् ।
दानोज्ज्वल दनल दग्ध
मलसुवर्ण वर्णान् ॥
स्वास्थिमांस धनधरणी
पुत्रपलल दातॄन् ।
तांस्तान् किमु न स्मरसि हि
निखिल धर्म धातॄन् ॥

( २ )

कुम्भयोनि रम्भोनिधि
मम्बुकणव दापिबत् ।
नहुषं विष धरवपुषं
तन्वंस्तमपातयत् ॥
गर्वान्ध म वन्ध्यविन्ध्य
मूर्द्ध्वंद्रुत वर्द्धितम् ।
कुण्ठितवल लुण्ठित तनु
मकरोदपि पातितम् ॥

( ३ )

उदजनि भुवि शौद्धोदनि
रिह सुरकुल वन्दितः ।
विस्मरसि नु तमपि जननि
यस्त्रिभुवन पूजितः ॥
त्यक्तदार पुत्र राज्य
धनजितान्तररातिः ।
यस्य सुमत मर्द्धं धरणि
रद्यापि च दधाति ॥

( ४ )

कुपित कुटिल बुद्धिकुशल
कौटिल्य सहायकः ।
मगधराज चन्द्रगुप्त
इभ सहस्र नायकः ॥

विश्वंविजयि यवनराज
सेकेन्द्र मपाकरोत् ।
दिशि दिशि स च शुभ्रकीर्त्ति
पटलध्वजमातनोत् ॥

(५)

समुच्छिद्य नन्दान् नव
न जग्राह राज्यम् ।
शुनो लोल रसन लीढ़
मिव न चाज्य माज्यम् ॥
तत्र मौर्यं चन्द्रगुप्त
मभिषिच्य तमवामः ।
सचिवपदे राक्षसमपि
स हि गहनं जगाम ॥

(६)

कुरुक्षेत्र समरे शर
मदधान्न च मुरारिः ।
न धारयन् कमपि शरं
स तु बभूव जितारिः ॥
काम शास्त्र मर्थशास्त्र
मपि चकार सूक्ष्मधीः ।
न्यायभाष्य मकरोदपि
शौर्य वीर्य वारिधिः ॥

(७)

हरि रभव न्मुरनरपति
पञ्चजन निहन्ता ।
तदपरमुर निकरोऽभूत्
सिन्धुपार गन्ता ॥
काले किल तेषामिह
हिमभूधर शिरसि ।
केऽपि वसति मवनीश्वरि
चक्रुः सति रहसि ॥

(८)

तद्दुहितर मपजहार
नन्दो नरदेवः ।
तदुदरभव मिममवेहि
चन्द्रगुप्त मेव ॥
यूरोप नि- वासिनोऽपि
शुभ्रकीर्त्ति भाजनम् ।
प्रशंसन्ति नित्यं किल
यस्य राज्य पालनम् ॥

(९)

तस्य चन्द्र गुप्तस्य च
नन्दनस्य नन्दनः ।
यशसा किल चन्दन तरु
रखिल भुवन नन्दनः ॥
योऽन्धीकृत मिवनयनं
लिखित लिपिभि रञ्जनै—
रुदमीलय दिव नयनं
नणां जनरञ्जनैः ॥

(१०)

व्यलसदन— लसः स सूनु
रयमशोक भूपः ।
दिशि दिशि किल यस्योज्ज्वल
कीर्त्ति पटल धूपः ॥
पथि पथि खलु पथिकानां
प्रीणनाय काननम् ।
यस्यासीत् फलबहुलं
शीतल जल भाजनम् ॥

(११)

विविध विपुल बहुलपथिभि
रसृजदिव स पीनाः ।
सर्ववपुषि वसुधे तव
नाडीनु नवीनाः ॥

सर्वत्र च ययुरथ रथ
निवहाः खलु नियतम्।
सरिति सरिति तरयोऽपि च
जलधिष्वपि सततम्॥

(१२)

स्तूप कूप वहुविहार
गठन मठ घटाभिः।
स्तम्भैः करि कुम्भपतित
हरिभि रपि जटाभिः॥
भूषितैश्च पालि लिपिभि
रपिच कृतसमाजः।
तव वपुरिद मावृणोन् स
सकल नृपति राजः॥

(१३)

गिरिषु गिरिषु गिरिदरीषु
सकरुणलिपि धाराः।
स निचखान कनक रचित
निष्कैश्च विहाराः॥
पूरितास्तु तेन तेन
योऽभवदथ निःस्वः।
प्रियदर्शी देवानां
प्रिय इह नृपतिः सः॥

(१४)

निजपरभुव मविचार्य च
भेषजभिषगर्पणै।
रकरो क्लिल नरपशून् स
नीरुजः समर्पणैः॥
नन्दनमपि दुहितरमपि
भिक्षुसदसि योऽददात्।
प्रैषयत् स तौ पुनश्च
सिंहलेषु भारतात्॥

(१५)

सौगतमत मवलम्ब्य स
वैदिक मत वादम्।
नाच्छिनत्स वाधते स्म
यज्ञ पशु निषादम्॥
ब्राह्मणेषु भक्ति रभव
दमला न च लूना।
न श्रमणा तेषु तस्य
सापि किञ्चिदूना॥

(१६)

विस्मरसि नु राज राज
राजेश्वर मशोकम्।
यश्चकार पृथिवीमपि
देवि देवलोकम्॥
विस्मरसि नु पुष्पमित्र
मजयद् यो मिलिन्दम्।
अश्वमेध याजिनमपि
वशीभूत पुलिन्दम्॥

---




[ नि०—पं० श्रीउमामहेश्वरशास्त्री। ]

( पूर्वतोऽनुवृत्तः )

अथ कतिपयवर्षेभ्यो लौकिकस्वच्छन्दिदासैः पण्डिताभासैः कलुषीकृतो दुस्तर्कमषीपङ्कलेपदूषितः पुष्पवतीविवाहशास्त्रीयत्वसमर्थकवादाभासदुर्वासःपरिच्छिन्न आर्यकन्योद्वाहकालव्यवस्थाविम्ब आर्षोक्तिवितति कृपाणधारया तद्दुर्वासोव्रजं विदीर्य सुतर्कजलेन प्रक्षाल्य मन्मनीषा-

कुञ्चिकया संशोध्य च मनीषिहृदयंगमतयात्र प्रदर्शयिष्यत इति शास्त्रचक्षुष्मन्तो वीक्षन्तां तमिति तत्कथा प्रस्तूयते। तथाहि आर्यकन्यापदेन नात्रार्यदेशवासिन्यो म्लेच्छादिविविधजातीया ग्राह्याः। येषामार्यपदेन धर्मशास्त्रे संकेतः कृतश्शङ्खलिखितादिभिश्चातुर्वर्ण्येन व्यवस्थितानां तेषां तत्सङ्कीर्णानामनुलोमजादीनां च वैदिकधर्मानुष्ठानाधिकारिणां कन्या एव ग्राह्याः। न वैदिकधर्मवाह्यकन्याः काश्चिदपीति। तदुद्वाहकालव्यवस्थायाञ्च न साक्षादुपलभ्यन्ते कुत्रापि निवन्धे समुदाहृता वा श्रुतयः। यद्यपि वीरमित्रोदयादिषु क्वचित्—

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः॥

इति वचनमेकं श्रुतित्वेनोदाहृतं याज्ञिकैश्च सस्वरमिदं पठ्यते श्रुतित्वेनैव तथापि नैनद्विशेषव्यवस्थापनाय सहकारीति स्मृतय एव शरणीक्रियन्तेऽस्माभिरत्र निवन्धे। स्मृतयश्चात्र सर्वा अपि समुपलब्धा गर्भाष्टमादिदशमाब्दान्तं कालं मुख्यत्वेन विदधते सार्ववर्णिकीनां कन्यानाम्। परन्तु काश्चन जन्मप्रभृत्या-सप्तमाब्दमेकादशवर्षप्रभृत्यारजोदर्शनं च तत्कालं विदधते काश्चन रजोदर्शनानन्तरमपि यावद्वर्षचतुष्टयं तत्कालं विदधते, काश्चन रजोदर्शनानन्तरं प्रायश्चित्तं विधाय तत्पूर्वकं विवाहं विदधते। काश्चन रजोदर्शनानन्तरं कन्यानां परित्यागमेव प्रायश्चित्तं विधाय विवाहाभावमेव विदधते। इत्थं पञ्चधा विप्रतिपत्तेर्व्यवस्थापेक्षाऽत्र ततस्तामनुक्रमिष्यामः तत्रैषा व्यवस्था लगति सार्ववर्णिकीनामपि कन्यानां गर्भाष्टमादिदशम वर्षान्तो मुख्यो विवाहकालः जन्मप्रभृति सप्तमाब्दान्त एकादशवर्षप्रभृति रजोदर्शनपूर्वभावी च कालो गौणस्सार्ववर्णिकीनाम्। रजोदर्शनोत्तरवर्षत्रयावधिकः प्रायश्चित्तपूर्वकपित्रादिदातृकर्तृकविवाहकालश्चतुर्थवार्षिक स्वयंवरकालश्च क्षत्रियादीनामापत्कल्पः न तु ब्राह्मणीनाम्, दृष्टरजस्कानां ब्राह्मणीनान्तु परित्यागो विवाहाभावश्च न तु कस्यां दिशा प्रायश्चित्तादिपूर्वको विवाहः यावद्वात्रभावप्र... स्वयंवरोऽपि राजानुमतिपूर्वको रजोदर्शनपूर्वभा... ब्राह्मणीनामापत्कल्पः प्रायश्चित्तपूर्वकः। अदृष्टर... स्कानां क्षत्रियादीनां तु प्रायश्चित्तरहित स्स इति ... लाघवायोक्तव्यवस्थाक्रमानुरोधेन न निरूपयि... तथाहि हेमाद्रौ प्रायश्चित्तकाण्डे असंस्कृतकन्यारजो... र्शनप्रायश्चित्तमिति प्रतीकमुपादायोक्तम्। देवलः-

पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया तद्भर्ता वृषलीपतिः॥

वृषलः शूद्रः। मार्कण्डेयः—

या कन्या पितृवेश्मस्था यदि पुष्पवती भवेत्।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन॥
विवाहे च न योग्या स्याल्लोकद्वयविगर्हिता।
एतां परिणयन्विप्रो न योग्यो हव्यकव्ययोः॥
न तस्यां जनयेत्पुत्रं कानीन इति कथ्यते।
माता पिता च पुत्रश्च त्रयस्ते वृषलास्स्मृताः॥
यदा पुष्पवती कन्या तदैव त्यक्तुमर्हति।
न तत्र दोपस्तस्यास्तु गेहस्था चेत्स दोपभाक्॥

इतिवचनैर्विवाहसंस्काररहितायाः पितृगृहस्था... कन्याया रजोदर्शने मार्कण्डेयेन परित्याग एव वि... यते। विवाहाभावश्चेति स्पष्टमिदं चक्षुष्मतां बुद्धि... च। अत्र विप्रपदोपादानाद् ब्राह्मणीविषयकत्वं तयोः स्पष्टमुपलभ्यते। न चासवर्णाविषयकत्वमेव ... अत एव विवोढृविप्र एव गृहीत इति वाच्यम्। सं... मानाभावादसवर्णाविवाहस्य निषिद्धत्वाच्च। ... प्रथमवाक्यचतुष्टयमेव दृष्टरजस्कायाः परित्यागं वि... ह्यायोग्यताञ्च विधाय मोहवशात्परिणेतुर्हव्यकव्यार्ह... निषिध्य तावताऽपि पश्चात्तप्तस्तां परित्यज्जेन्न पुत्रमुत्पादयेदिति निषेधति न तस्यामिति वाक्येन तद... मप्यपश्चात्तप्तोऽपरित्यजन्यदिपुत्रमुत्पादयेत्सजातः ... पि दुष्ट इत्याह कानीन इति कथ्यत इति। तस्य ...

नत्वोक्त्या तस्यां कन्यात्वानिवृत्तिस्तद्विवाहस्याविधिना कृतमकृतमितिन्यायेनाक्रमत्वं च तस्य ज्ञातिदायाभावश्च निरूपितप्राया एव। कानीनश्च सहोढश्चेत्यादिना कानीनत्वेन, अक्रमोढासुतश्चैवेत्यादिना अक्रमोढासुतत्वेन—

उभौ चानर्हतां भागं जारजातककामजौ।

इत्यनेन जारजत्वकामजत्वाभ्यां च दायाभावो व्यवहारकाण्डे स्पष्टः। तत्परिणेतृविप्रस्यैव न हव्यकव्यानर्हता किन्तु त्रयाणामपीति स्पष्टयति माता पिता चेत्यादिना। वृषलाः शूद्राः। पुष्पवत्या ब्राह्मणकन्यायाः परित्याग एव प्रायश्चित्तं न तु प्रायश्चित्तान्तरपूर्वको विवाह इति ध्वनयन्परित्यागकालं निर्दिशति वाक्यशेषेण यदा पुष्पवतीत्यादिना। मोहवशादपरित्यज्य तां यो विवाहयति पित्रादिरथवा स्वगृहे संस्थाप्य तां पुष्णाति तस्यापि दोषभाक्त्वं तत्परित्यागे दोषाभावं चाह न तत्र दोष इत्यादिना। तथा च पुष्पवतीनां प्राग्विवाहात्परित्याग एवेति सिद्धम्। किञ्चाविज्ञातरजोदर्शनायाः प्रमादेन तत्परिणये पश्चात्परिज्ञाते तद्वृत्ते तस्याः परित्यागमेव विधत्ते गौतमः।

यदा रहःपुष्पवती द्विजस्तामुद्वहेद्यदि।
कालान्तरे यदा ज्ञाता तदा तां संपरित्यजेत्॥
यदीच्छेदात्मनः शुद्धिं तदा चान्द्रायणं चरेत्।
कामातुरस्तदावर्तेत्स चण्डाल समो भवेत्।
पुत्रोत्पत्तिर्यदि भवेत्तदा पतित एव सः॥इति॥

अत्र प्रथमवचने यदातदाशब्दाभ्यां ज्ञानसमनन्तरकालिकत्वमेव परित्यागस्य बोध्यते, प्रमादाचरितपुष्पवत्युद्वाहजन्यप्रत्यवायपरिहाराय स्वकर्माधिकाराय च प्रायश्चित्तं विधत्ते यदीच्छेदितिवाक्येन, अत्र प्रथमवचनघटकद्विजपदं ब्राह्मणपरमेव न क्षत्रवैश्यपरमपि तुल्यन्यायात्। यदि तज्ज्ञानोत्तरमपि तद्गतमोहातिशयेन तामपरित्यजंस्तया सह वर्तेत तस्य चण्डालसाम्यं पुत्रजनने तु तस्य द्विजकर्महानरूपं पतितत्त्वं च विदधाति कामातुरइत्यादिवाक्यद्वयेन। अत एव कर्काचार्येणापि विवाहमध्यदृष्टरजस्कायास्तत्पत्युश्च प्रायश्चित्तं हविष्मतीरिमा अद्भिरित्यादिना विधायाऽन्ते—

कृत्वा तौ पापशुद्धौ स्तामन्यथा दोषसम्भवौ।
तदानीं न परित्याज्या पूर्वं पुष्पवती न चेत॥
न योग्या हव्यकव्येषु सा नारी वृषली भवेत्।
प्रायश्चितं तदा कृत्वा कर्म कुर्वन्न दोषभाक्॥

इति वचनैर्विवाहात्पूर्वं पुष्पवत्याः परित्याग एवेति बोधितम्। एभिश्च वचनैरुक्तरीत्या विवाहमध्ये वध्वा रजोदर्शने, तौ वधूवरौ, कृत्वा चान्द्रायणं कृत्वा, पापशुद्धौ स्तामन्यथा प्रायश्चित्ताननुष्ठाने, दोषसम्भवौ दोषप्राप्तिमन्तौ दोषभाजावित्यर्थः भवेताम् इयं च शुद्धिर्न विवाहात्प्राक्पुष्पवतीविषयेत्याह तदानीमित्यादिना तदानीं विवाहमध्ये पुष्पवतीत्यपकर्षः न परित्याज्या परित्यागं नार्हति। कीदृशी चेत् तच्छब्दो यच्छब्दमपेक्षते यत्तदोर्नित्यसम्बन्धात् चेच्छब्दश्च यद्यर्थकः तथा च पूर्वं विवाहात्पूर्वं पुष्पवती रजस्वला न चेत् न यदीत्यर्थः। विवाहमध्यदृष्टप्रथमार्त्तवैव चेन्न परित्याज्या पूर्वं पुष्पवती चेत्परित्याज्यैवेत्यर्थः। एतत्प्रायश्चित्ताननुष्ठानप्राप्यं दोषं विविनक्ति, न योग्येतिवाक्येन। अन्यथा दोषसम्भवादिति सामान्येन दोषप्राप्तिरुक्ता स च दोषः किंरूप इत्याशङ्का परिहृतानेन दोषविशेषनिरूपणेनेति ध्येयम्। एवं च न साधारणो दोषः किन्तु हव्यकव्यानर्हत्वप्रयोजको वृषलीत्वरूपो दोषस्तस्या इति। अनेन तत्पतेर्वृषलीपतित्त्वमुक्तप्रायमेवेति न द्विवचनानुपपत्तिः पूर्वोक्तप्रायश्चित्तानुष्ठानेन न नरकनिवृत्तिमात्रमेव, किन्तु कर्मार्हतापीत्याह प्रायश्चित्तं तदेतिवाक्येन तदा निरुक्तरीत्या रजोदर्शने प्रायश्चित्तं कृत्वा कर्मशिष्टं विवाहकर्मतया सहकर्तव्यमन्यदपि कर्म कुर्वन्न दोषभाक् वृषलीपतित्वरूपदोषभाजनं भवतीत्यर्थः। न चात्रतदानीमित्यादिवाक्यस्याप्रसक्तिश्शङ्क्या पतत्प्रायश्चित्तस्योद्वाह-

पूर्वकालदृष्टरजस्कायामपि प्रापकत्वभ्रान्तिनिरासार्थत्वात् । अत्र विमर्शकृदुक्तस्वारसिकार्थसाधकसमन्वयसरणिर्या तदानीं प्रायश्चित्तानन्तरं पूर्वं पुष्पवती दृष्टप्रथमार्त्तवा न परित्याज्या परित्यागं नार्हति न चेत् प्रायश्चित्तं न कृतं चेत् सा नारीत्यादिः सा सर्वापि स्वारसिकार्थसाक्षिकैवेति दर्शितानेन दिक्। छब्दस्य प्रागित्यर्थकस्य पूर्वशब्दस्य विनागमकं प्राथम्यार्थकत्वकल्पनस्य पूर्वानुपात्तप्राकरणिकप्रायश्चित्तानन्तरकालबोधकत्वेन तत्कालमात्रवाची तदानींशब्दघटकतच्छब्दस्य व्याख्यानस्य च वाक्यशेषश्रूयमाणप्रायश्चित्तमित्यादिनिराकाङ्क्षवाक्यपौनरुक्त्यदोषस्वीकारस्य च वधूवरोद्देश्यकप्रायश्चित्ताकरणजन्यदोषमात्रप्रापकपूर्ववाक्यवैयर्थ्यस्य च स्वारसिकार्थप्राप्यत्वेन मदुक्तार्थे तदभावेन च कुत्र सामञ्जस्यमिति विभावयन्तु सुधियः । किञ्च विवाहमध्यप्रथमपुष्पवत्याः परित्यागाभावसाधनेन प्राप्ततत्पूर्वपुष्पवतीपरित्यागं परिशेषेण कथमसौ वारयति कथं वा मार्कण्डेयविहितं परित्यागं तासां समाहितवानिति स एव प्रष्टव्यः कुक्कुटाण्डकेशाकर्षणन्यायावलम्बि स्वारसिकार्थं सम्पादनद्वारा रजस्वलोद्वाहसाधनदुरभिनिवेशपिशाचावेशजविकारवो धक इत्यलं दुर्विमर्शपरामर्शेन । यत्तु कश्चित्काव्यतीर्थो जल्पति कलिसैनिकः वृषलीत्वपरित्यागादिविधायकवचनघटकमसंस्कृतापदं सर्वत्र दानसंस्काररहित स्त्रीबोधकमेव । न तु विवाहसंस्काररहितस्त्रीपरमिति तदायुष्मतो दुराशादुर्वासनामूलकं काव्यकत्वविलसितमेव । अनुद्वाहिता या कन्यार्त्तवेन युज्यते सा वृषली ।

रजस्वला च या कन्या यदि स्यादविवाहिता ।
वृषली त्वार्षलेयस्याज्जातस्तस्यां स चैवहि ॥

इत्यापस्तम्बाश्वलायनवचनेषु सजातीयेषु विवाहस्यैव पर्युदस्तत्वेन स्त्रीणां च विवाहसंस्कारस्यैकस्यैव—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकस्स्मृतः

इत्यादिवचनैर्विहितत्वेन विवाहसंस्कारस्यैव संस्कारेषु परिगणनात्कन्यादानमात्रस्य तत्रापरिगणनाच्च विनिगमनाविरहेणामन्त्रकाणामपि जातकर्मादिसंस्काराणामपि पर्युदासप्राप्त्या च वीरमित्रोदयादिषु सर्वेष्वपि निबन्धेषु विवाहपदार्थनिरूपणे स्वत्वोत्पादकदानाद्यपेक्षया संस्कारस्य पार्थक्येन निरूपणादुद्वहेत द्विजो भार्यामित्यादिना स्वस्वत्वोत्पत्तिसमनन्तरकालिकहोमादिसप्तमपदनयनान्तवरकर्तृकसंस्कारस्यैव विवाहपदार्थत्वव्यवस्थापनेन च ।

वाग्दानं च प्रदानं च वरणं पाणिपीडनम् ।
सप्तपदीति पञ्चाङ्गो मुनिभिः परिकीर्तितः ॥

इत्यादिवचनैर्दानादीनामङ्गत्वमात्रसिद्ध्या विशिष्टस्यैव विवाहपदार्थत्वाङ्गीकारेपि प्रत्येकसंस्कारत्वासिद्ध्याऽङ्गसंस्कारमात्रपर्युदासे मानाभावेन च विनिगमनाविरहेण पाणिग्रहणाद्यन्याङ्गपर्युदासास्वीकारे मानाभावेन च विशिष्टाङ्गिसंस्कारस्यैव ग्रहणेन च तथार्थवर्णनस्याशास्त्रीयत्वात् एतेनोद्वाहविवाहपदयोरेव दानार्थकत्वं दानं भिन्नं प्रदानं भिन्नमित्यादिदुष्टप्रलपनमप्यस्य काव्यकस्य प्रत्युक्तमित्यलं चटके वज्रायुधप्रयोगेण । पित्रादीनुद्दिश्य तावत्कन्यां विवाहयेदित्यादिणिजन्तप्रयोगा वरमुद्दिश्य विवहेदुद्वहेदित्यादिणिच्रहितप्रयोगाश्चालं सति धात्वर्थपरिज्ञाने दानातिरिक्तो विवाहपदार्थ इति बोधने । अन्यथा तदुक्तदिशा कन्यां दापयेद्भार्यां दद्यादित्यर्थापत्तिरनर्थदा स्फुटैव एतेन तदर्थपोषणादिकं कस्यचन बालशिरोमणेरप्युत्पन्नता नवन्धनं बालचापलमेवेति च व्यक्तीकृतमिति दिक् । न च—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ।

इत्यादिमन्वादिवचनानुरोधेन—

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुद्धिं च कारयित्वा तामुद्वहेदनृशंसधीः ॥
पिता ऋतून् स्वपुत्र्यान्तु गणयेदादितस्सुधीः ।

इत्यादि—

तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः ।

इत्यन्तनिर्णयसिन्धुधृताश्वलायनवचनानुरोधेन च-

कन्यामृतुमतीं शुद्धिं कृत्वा निष्कृतिमात्मनः ।

इत्यादि—

तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः ।

इत्यन्तसंस्काररत्नमालाधृतशौनकवचनानुरोधेन च-

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।

इत्यादिमन्वादिवचनानुरोधेन च ऋतुदर्शनोत्तरकालिकऋतुत्रयवर्षत्रयान्यतराभ्यन्तरकालिकप्रायश्चित्तपूर्वकपित्रादिदातृकर्तृकविवाहविधेः ऋतुत्रयवर्षत्रयान्यतरानन्तरकालिक कन्याकर्तृकस्वयंवरणपूर्वक प्रायश्चित्तसहचरितविवाहविधेश्च ब्राह्मणीनामपि गान्धर्वविधानेन ब्राह्मणीनामपि प्राप्त्या त्वदुक्तव्यवस्था न सङ्गतेति वाच्यम् । ऋतुदर्शनोत्तरकालिकविवाहप्रापकवचनानां सर्वेषामपि ब्राह्मणातिरिक्तक्षत्रियादिविषयकत्वेन षडानुपूर्व्येत्यादि ब्राह्मगान्धर्वप्रापकाणामपि ऋतुप्राक्कालिकयावद्दातृभावप्रयुक्तस्वयंवरविषयकत्वेन च मदुक्तव्यवस्थाया निर्बाधनात् । तथाहि त्रीणि वर्षाणि ऋतुत्रयमुपास्येत्यादिमनुविष्णवादिवचनानां प्रायश्चित्तपूर्वकविवाहबोधकशौनकवचनानां चोद्देश्यतावच्छेदकावच्छिन्नवर्णविशेषबोधकपदाघटितत्त्वेन वर्णपदाध्याहारात्सर्ववर्णसाधारण्येन प्रापकत्वाद्वर्णपदबोध्य वर्णत्वस्य प्रायश्चित्तविधायकाश्वलायनवचनघटकद्विजपदबोध्यद्विजत्वस्यापि निरुक्तपरित्यागप्रायश्चित्तविधायकमार्कण्डेयवचनघटकविप्रपदबोध्यविप्रत्वधर्मापेक्षया व्यापकत्वाद्विप्रत्वस्य च तदपेक्षया व्याप्यत्वाच्च निरवकाशत्वरूपबाधबीजाक्रान्तव्याप्यधर्म्युद्देश्यकपरित्यागविधिना-व्यापकधर्म्युद्देश्यकक्षत्रियादिसावकाशप्रायश्चित्तपूर्वकदातृकर्तृककन्याकर्मकदानपूर्वकविवाहविधेश्च सामान्यविशेषन्यायेन बाधकल्पनस्य नाप्राप्तत्वेन व्यापकप्रायश्चित्तपूर्वकदातृकर्तृकविवाहस्वयंवरविवाहविधिशास्त्रीयव्यापकोद्देश्यतावच्छेदक विप्रत्वावच्छिन्नातिरिक्तत्वेन संकोचस्य कर्तव्यतया ब्राह्मणीनां दृष्टरजस्कानां परित्यागविवाहाभावयोरेव सिद्धत्वेन निरुक्तव्यवस्थानिर्बाधत्वं स्पष्टमेव । अन्यथा वैयर्थ्यविकल्पविषयव्यवस्थानापत्तिरूपं दोषत्रयं केन वार्येत । यदि रजोदर्शनानन्तरं ब्राह्मणीनामपि त्रीणि वर्षाणी त्याद्युक्तदिशा विवाहप्राप्तिस्तर्हि परित्यागविधेः का गतिः कुत्रावकाश इतिविभावनीयं विद्वद्भिः । अत्र सर्वत्र विवाहे दातरि कर्तृत्वं प्रयोजकत्वरूपं बोध्यम् वरस्यैव साक्षात्कर्तृत्वात् । न च रहोदृष्टरजस्काविषयक परित्यागविधायकगौतमवचने द्विजपदसद्भावेन परित्यागविधेरपि विप्रादित्रैवर्णिकविषयकत्वप्राप्त्या तद्बलेन रजस्वलाविवाहविधायकवचनानां परित्यागविधायकेन तुल्यबलत्वाद्विकल्पः कल्पनीय इति वाच्यम् । एकांशविधायकभिन्नवाक्यघटकयोरेवार्थशक्तयोःपदयोरन्यतरस्यार्थान्तरशक्तत्वेऽपि तदैकरूप्याय तुल्यशक्यार्थकत्वकल्पनस्यैव तुल्य न्यायलभ्यतया तुल्यन्यायेन गौतमवचनघटकद्विजपदं विप्रार्थकमेवेति प्रागेव दत्तोत्तरत्वात् । दन्तविप्राण्डजा द्विजा इति कोशेन द्विजपदस्य विप्रेशक्तत्वनिरूपणादर्थान्तरकल्पनस्यान्याय्यत्वात् अत एव महाभारते द्रौपदी स्वयंवरपर्वणि—

न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥

इति द्रुपदं प्रति राज्ञां वचनं श्रुत्यनुवादकं ब्राह्मणस्वयंवराधिकारनिरासकं क्षत्रियमात्रविषयकत्वप्रापकं स्वयंवरस्य संगच्छते अत्र प्रथमवाक्यं षडानुपूर्व्येत्यादिप्राप्तगान्धर्वस्य दात्रनुमतिदात्रपेक्षाद्वयप्रयुक्तस्य निषेधकं श्रुत्यनुवादकं द्वितीयं तु क्षत्रियाणामेवेत्यर्थबोधकं सत् क्षत्रियातिरिक्तब्रह्मवैश्यादिनिषेधद्वारा क्षत्रियमात्रप्रा-

पूर्वकालदृष्टरजस्कायामपि प्रापकत्वभ्रान्तिनिरासार्थत्वात् । अत्र विमर्शकृदुक्तस्वारसिकार्थसाधकसमन्वयसरणिर्या तदानीं प्रायश्चित्तानन्तरं पूर्वं पुष्पवती दृष्टप्रथमार्त्तवा न परित्याज्या परित्यागं नार्हति न चेत् प्रायश्चित्तं न कृतं चेत् सा नारीत्यादिः सा सर्वापि स्वारसिकार्थसाधिकैवेति दर्शितानेन दिक्। छब्दस्य प्रागित्यर्थकस्य पूर्वशब्दस्य विनागमकं प्राथम्यार्थकत्वकल्पनस्य पूर्वानुपात्ताप्राकरणिकप्रायश्चित्तानन्तरकालबोधकत्वेन तत्कालमात्रवाची तदानींशब्दघटकतच्छब्दस्य व्याख्यानस्य च वाक्यशेषश्रूयमाणप्रायश्चित्तमित्यादिनिराकाङ्क्षवाक्यपौनरुक्त्यदोषस्वीकारस्य च वधूवरोद्देश्यकप्रायश्चित्ताकरणजन्यदोषमात्रप्रापकपूर्व - वाक्यवैयर्थ्यस्य च स्वारसिकार्थप्राप्यत्वेन मदुक्तार्थे तदभावेन च कुत्र सामञ्जस्यमिति विभावयन्तु सुधियः। किञ्च विवाहमध्यप्रथमपुष्पवत्याः परित्यागाभावसाधनेन प्राप्ततत्पूर्वपुष्पवतीपरित्यागं परिशेषेण कथमसौ वारयति कथं वा मार्कण्डेयविहितं परित्यागं तासां समाहितवानिति स एव प्रष्टव्यः कुक्कुटाण्डकेशाकर्षणन्यायावलम्बि स्वारसिकार्थे सम्पादनद्वारा रजस्वलोद्वाहसाधनदुरभिनिवेशपिशाचावेशजविकारवो धक इत्यलं दुर्विमर्शपरामर्शेन । यत्तु कश्चित्काव्यतीर्थो जल्पति कलिसैनिकः वृषलीत्वपरित्यागादिविधायकवचनघटकमसंस्कृतापदं सर्वत्र दानसंस्काररहित स्त्रीबोधकमेव । न तु विवाहसंस्काररहितस्त्रीपरमिति तदायुष्मतो दुराशादुर्वासनामूलकं काव्यकत्वविलसितमेव । अनुद्वाहिता या कन्यार्त्तवेन युज्यते सा वृषली।

रजस्वला च या कन्या यदि स्यादविवाहिता ।
वृषली वार्षलेयस्त्याज्ज्ञातस्तस्यां स चैवहि ॥

इत्यापस्तम्बाश्वलायनवचनेषु सजातीयेषु विवाहस्यैव पर्युदस्तत्वेन स्त्रीणां च विवाहसंस्कारस्यैकस्यैव—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकस्स्मृतः

इत्यादिवचनैर्विहितत्वेन विवाहसंस्कारस्यैव संस्कारेषु परिगणनात्कन्यादानमात्रस्य तत्रापरिगणनाच्च विनिगमनाविरहेणामन्त्रकाणामपि जातकर्मादिसंस्काराणामपि पर्युदासप्राप्त्या च वीरमित्रोदयादिषु सर्वेष्वपि निबन्धेषु विवाहपदार्थनिरूपणे स्वत्वोत्पादकदानाद्यपेक्षया संस्कारस्य पार्थक्येन निरूपणादुद्वहेत द्विजो भार्यामित्यादिना स्वस्वत्वोत्पत्तिसमनन्तरकालिकहोमादिसप्तमपदनयनान्तवरकर्तृकसंस्कारस्यैव विवाहपदार्थत्वव्यवस्थापनेन च ।

वाग्दानं च प्रदानं च वरणं पाणिपीडनम् ।
सप्तपदीति पञ्चाङ्गो मुनिभिः परिकीर्तितः ॥

इत्यादिवचनैर्दानादीनामङ्गत्वमात्रसिद्ध्या विशिष्टस्यैव विवाहपदार्थत्वाङ्गीकारेपि प्रत्येकसंस्कारत्वासिद्ध्याऽङ्गसंस्कारमात्रपर्युदासे मानाभावेन च विनिगमनाविरहेण पाणिग्रहणाद्यन्याङ्गपर्युदासास्वीकारे मानाभावेन च विशिष्टाङ्गिसंस्कारस्यैव ग्रहणेन च तथार्थवर्णनस्याशास्त्रीयत्वात् एतेनोद्वाहविवाहपदयोरेव दानार्थकत्वं दानं भिन्नं प्रदानं भिन्नमित्यादिदुष्टप्रलपनमप्यस्य काव्यकस्य प्रत्युक्तमित्यलं चटके वज्रायुधप्रयोगेण। पित्रादीनुद्दिश्य तावत्कन्यां विवाहयेदित्यादिणिजन्तप्रयोगा वरमुद्दिश्य विवहेदुद्वहेदित्यादिणिच्रहितप्रयोगाश्चालं सति धात्वर्थपरिज्ञाने दानातिरिक्तो विवाहपदार्थ इति बोधने। अन्यथा तदुक्तदिशा कन्यां दापयेद्भार्यां दद्यादित्यर्थापत्तिरनर्थदा स्फुटैव एतेन तदर्थपोषणादिकं कस्यचन बालशिरोमणेरप्युत्पन्नता नवन्धनं बालचापलमेवेति च व्यक्तीकृतमिति दिक् । न च—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ।

इत्यादिमन्वादिवचनानुरोधेन—

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः।
शुद्धिं च कारयित्वा तामुद्वहेदनृशंसधीः॥
पिता ऋतून् स्वपुत्र्यान्तु गणयेदादितस्सुधीः।
इत्यादि—
तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः।
इत्यन्तनिर्णयसिन्धुधृताश्वलायनवचनानुरोधेन च-
कन्यामृतुमतीं शुद्धिं कृत्वा निष्कृतिमात्मनः।
इत्यादि—
तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः।
इत्यन्तसंस्काररत्नमालाधृतशौनकवचनानुरोधेन च-
षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्।

इत्यादिमन्वादिवचनानुरोधेन च ऋतुदर्शनोत्तरकालिकऋतुत्रयवर्षत्रयान्यतराभ्यन्तरकालिकप्रायश्चित्तपूर्वकपित्रादिदातृकर्तृकविवाहविधेः ऋतुत्रयवर्षत्रयान्यतरानन्तरकालिक कन्याकर्तृकस्वयंवरणपूर्वक प्रायश्चित्तसहचरितविवाहविधेश्च ब्राह्मणीनामपि गान्धर्वविधानेन ब्राह्मणीनामपि प्राप्त्या त्वदुक्तव्यवस्था न सङ्गतेति वाच्यम्। ऋतुदर्शनोत्तरकालिकविवाहप्रापकवचनानां सर्वेषामपि ब्राह्मणातिरिक्तक्षत्रियादिविषयकत्वेन षडानुपूर्वेत्यादि ब्राह्मगान्धर्वप्रापकाणामपि ऋतुप्राक्कालिकयावद्दात्रभावप्रयुक्तस्वयंवरविषयकत्वेन च मदुक्तव्यवस्थाया निर्बाधनात्। तथाहि त्रीणि वर्षाणि ऋतुत्रयमुपास्येत्यादिमनुविष्णवादिवचनानां प्रायश्चित्तपूर्वकविवाहबोधकशौनकवचनानां चोद्देश्यतावच्छेदकावच्छिन्नवर्णविशेषबोधकपदाघटितत्वेन वर्णपदाध्याहारात्सर्ववर्णसाधारण्येन प्रापकत्वाद्वर्णपदबोध्य वर्णत्वस्य प्रायश्चित्तविधायकाश्वलायनवचनघटकद्विजपदबोध्यद्विजत्वस्यापि निरुक्तपरित्यागप्रायश्चित्तविधायकमार्कण्डेयवचनघटकविप्रपदबोध्यविप्रत्वधर्मापेक्षया व्यापकत्वाद्विप्रत्वस्य च तदपेक्षया व्याप्यत्वाच्च निरवकाशत्वरूपबाधबीजाक्रान्तव्याप्यधर्म्युद्देश्यकपरित्यागविधिना-व्यापकधर्म्युद्देश्यकक्षत्रियादिसावकाशप्रायश्चित्तपूर्वकदातृकर्तृककन्याकर्मकदानपूर्वकविवाहविधेश्च सामान्यविशेषन्यायेन बाधकल्पनस्य नाप्राप्तत्वेन व्यापकप्रायश्चित्तपूर्वकदातृकर्तृकविवाहस्वयंवरविवाहविधिशास्त्रीयव्यापकोद्देश्यतावच्छेदक विप्रत्वावच्छिन्नातिरिक्तत्वेन संकोचस्य कर्तव्यतया ब्राह्मणीनां दृष्टरजस्कानां परित्यागविवाहाभावयोरेव सिद्धत्वेन निरुक्तव्यवस्थानिर्बाधत्वं स्पष्टमेव। अन्यथा वैयर्थ्यविकल्पविषयव्यवस्थानापत्तिरूपं दोषत्रयं केन वार्येत। यदि रजोदर्शनानन्तरं ब्राह्मणीनामपि त्रीणि वर्षाणी त्याद्युक्तदिशा विवाहप्राप्तिस्तर्हि परित्यागविधेः का गतिः कुत्रात्रकाश इतिविभावनीयं विद्वद्भिः। अत्र सर्वत्र विवाहे दातरि कर्तृत्वं प्रयोजकत्वरूपं बोध्यम् वरस्यैव साक्षात्कर्तृत्वात्। न च रहोदृष्टरजस्काविषयक परित्यागविधायकगौतमवचने द्विजपदसद्भावेन परित्यागविधेरपि विप्रादित्रैवर्णिकविषयकत्वप्राप्त्या तद्बलेन रजस्वलाविवाहविधायकवचनानां परित्यागविधायकेन तुल्यबलत्वाद्विकल्पः कल्पनीय इति वाच्यम्। एकांशविधायकभिन्नवाक्यघटकयोरेकार्थशक्तयोःपदयोरन्यतरस्यार्थान्तरशक्तत्वेऽपि तदैकरूप्यायं तुल्यशक्यार्थकत्वकल्पनस्यैव तुल्यन्यायलभ्यतया तुल्यन्यायेन गौतमवचनघटकद्विजपदं विप्रार्थकमेवेति प्रागेव दत्तोत्तरत्वात्। दन्तविप्राण्डजा द्विजा इति कोशेन द्विजपदस्य विप्रेशक्तत्वनिरूपणादर्थान्तरकल्पनस्यान्याय्यत्वात् अत एव महाभारते द्रौपदी स्वयंवरपर्वणि—

न च विप्रेष्वधीकारो विद्यते वरणं प्रति।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः॥

इति द्रुपदं प्रति राज्ञां वचनं श्रुत्यनुवादकं ब्राह्मणस्वयंवराधिकारनिरासकं क्षत्रियमात्रविषयकत्वप्रापकं स्वयंवरस्य संगच्छते अत्र प्रथमवाक्यं षडानुपूर्व्येत्यादिप्राप्तगान्धर्वस्य दात्रनुमतिदात्रपेक्षाद्वयप्रयुक्तस्य निषेधकं श्रुत्यनुवादकं द्वितीयं तु क्षत्रियाणामेवेत्यर्थबोधकं सत् क्षत्रियातिरिक्तब्रह्मवैश्यादिनिषेधद्वारा क्षत्रियमात्रप्रा-

पकं वैश्यादीनामपि गान्धर्वाभावात् तेषामासुरस्यैव विधानात् अनुकल्पेन विधानन्तु क्षत्राणामपि सममेव। अत एव—

स्वयंवरन्तु राजन्याः प्रशंसन्त्युपयन्ति च।
प्रमथ्य तु हृतामाहुर्ज्यायसीं ब्रह्मवादिनः॥

इति महाभारतस्थभीष्मवाक्यं सङ्गच्छते राक्षसं क्षत्रियस्यैकमित्यादिना राक्षसस्यैव तेषां प्राशस्त्येन विधानाच्च युक्तं चैतत् क्षत्रियस्य विजितमिति स्मरणेन तेषां विजित एव स्वत्वोत्पत्तेर्न्यायप्राप्तत्वात्।

क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते।

इत्यादिकन्तुराक्षसाप्राप्तिनिबन्धनम्। अत्र हि-शब्द एवार्थे।

गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ॥

इत्यादिना धर्म्यत्वमात्रोक्त्या प्रशस्ततरत्वस्य तत्रैवासिद्धेः अस्तु वा प्राच्यक्षत्रियोत्तमपरिग्रहबलेन द्विविधवचनबलेन च प्राशस्त्यमात्रं भीष्मेणैव तत्रत्यतत्त्वप्रतिपादनात् इदानीन्तनक्षत्रपरिगृहीतप्राजापत्यतुल्यत्वात्, वैश्यानान्तु कदाप्यनुष्ठानागोचरत्वेन प्राजापत्यै वानुकल्पत्वेनानुष्ठानगोचरत्वेन च गान्धर्वविवाहानुष्ठानप्रापकत्वं लोकविद्विष्टतया सपिण्डकनान्दीश्राद्धवद्धेयमेवेति ब्रूमः।

क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते।
न सा दैवे च पित्र्ये च दासीं तां कश्यपोऽब्रवीत्॥

इत्यादिवचनैर्निषिद्धत्वेपि प्रकारान्तराप्राप्तविवाहानां रागवतां ब्राह्मणानां वंशविच्छेदादिप्राप्तिदशायामापद्धर्मत्वेनासुरानुष्ठानवद्गान्धर्वानुष्ठानवच्चाद्यावधि वैश्येषु कुत्रापि गान्धर्वानुष्ठानादर्शनाच्च।

येनाऽस्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्नरिष्यते॥

इति वैधेष्वपि प्राक्तनानुष्ठानस्यैव प्राबल्यबोधनाच्च यदि तु तत्रैव दुरभिनिवेशस्तर्हि वक्ष्यमाणव्यवस्थादिशा पैशाचतुल्यत्वेनास्तु प्रायश्चित्तपूर्वको विवाहो गान्धर्वश्च वैश्यानाम्, एतेन सङ्कीर्णा अपि व्याख्याता ब्राह्मणीनान्तु परित्यागविधिबलेन न रजोदर्शनान्तरं कयापि दिशा विवाह इत्येव तावद्ब्रूमः। अथ स्वयंवरव्यवस्था। ननु स्वयंबरो नामाष्टविधविवाहमध्ये किंरूपः सर्वैरपि मुनिभिर्विवाहानामष्टविधत्वस्यैव निरूपणात् अतिरिक्तस्यानिरूपणाच्चेतिचेदुच्यते, गान्धर्वरूपएवेति। तथाहि—

स्वयं कन्या वरयते स गान्धर्वः इच्छन्त्या स्वयं संयोगो गान्धर्वः इत्यादिवचनैर्हारीतादिभिः कन्याकर्तृकवरणविशिष्टविवाहस्यैव स्वयंवरशब्दशक्यार्थत्वप्रतीत्या तस्यैव च गान्धर्वपदेन सङ्केतविधानाच्च स्वयंवरगान्धर्वयोरैकरूप्यप्राप्त्या न पार्थक्यकल्पनं घटते, इयान् हि भेदः गान्धर्वपदं रूढं स्वयंवरपदं यौगिकमिति, ब्राह्मादिविवाहभेदबोधकेषु सङ्केतपदं गृहीतम्। विधायकेषु तूभयोपादानमिति च सचायं स्वयंवरस्त्रिविधो दृश्यते दात्रनुमतिप्रयुक्तः दात्रौदासीन्यप्रयुक्तः दात्रभावप्रयुक्तश्चेति। आद्यो यथा आनुशासनिके युधिष्ठिरं प्रति भीष्मेण—

शिष्टानां क्षत्रियाणान्तु धर्म एष सनातनः।
आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः॥

अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर।
गान्धर्वमिति तं धमं प्राहुर्वेदविदो जनाः।

इत्युक्तस्तपतीसावित्रीदमयन्तीन्दुमतीद्रौपद्यादिविवाहेषु परिगृहीतो बीर्यशुल्कादिविविधश्चेदव्यवहृतो दात्रनुमतिप्रयुक्तो मातपित्रादिदानपूर्वकः। अयं च न कदापि विवाहप्राक्कालिकपुरुषसंयोगविशिष्टः किन्तु दात्रनुमतिप्रयोज्यवरवरणमात्रपूर्वक एव। अत्र शिष्टानामितिविशेषणेन पित्रादिकर्तृकदानरहितकामोद्रेकप्रयुक्तगान्धर्वस्यानुकल्पत्वमुक्तं भवति। वरनाशविहितोऽप्यत्रैवान्तभूत इति न स पृथग्भूत इति ध्येयम्। द्वितीयस्तु मनुना—

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वस्स तु विज्ञेयो मैथुन्यः कामसम्भवः॥
विविक्ते स्वयमन्योन्यं स्त्रीपुंसोर्यः समागमः।
प्रीतिहेतुस्स गान्धर्वो विवाहः पञ्चमो मतः॥

इति देवलेन च द्वयोस्सकामयोर्मातापितृदानरहितो गान्धर्वं इति विष्णुना च लक्षितो मातापितृदानरहितः कामोद्रेकप्रयुक्तः। अत्र मनुवचने मैथुन्य इति विशेषणं कृतेऽपि मैथुने न दोष इत्यर्थमिति कुल्लूकभट्टः। तथा च संस्कारप्राक्कालिकसंयोगवैशिष्ट्येन तद्राहित्येन च द्वैविध्यमस्यायातम्। सम्भवति चायं दात्रनादरेण दात्रौदासीन्येन च द्वेधा कामोद्रेकप्रयुक्तः। अत्रत्यं तत्त्वमुपरिष्टान्निरूपयिष्यते। तृतीयस्तु याज्ञवल्क्यादिभिः-

गम्यन्त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम्।
यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत्॥
अनुज्ञया तस्य वरं प्रतीक्ष्य वरयेत्स्वयम्।
सवर्णमनुरूपञ्च कुलशीलवयःश्रुतैः॥
सह धर्मं चरेत्तेन पुत्राँश्चोत्पादयेत्ततः।

इत्यादिवचनैर्विहितो यावद्दा भावप्रयुक्तो राजानुमतिपूर्वकः। एवं सिद्धे गान्धर्वे त्रिविधे कस्य कः कालः शास्त्रसम्मत इति विमर्शनीयं विद्वद्भिः। तत्र प्रथमकल्पिके दात्रनुमतिपूर्वके गान्धर्वे—

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्।
दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणे॥

प्रदानं प्रागृतोः स्मृतमित्यादिविवाहकालविधायकैः पुष्पदर्शनानन्तरविवाहनिषेधकैश्च वचनैर्दातॄणां स्वकन्याविवाहकारयितृत्वस्यापि रजोदर्शनप्राक्कालिकत्वेन मुख्यतया प्रतीते रजोदर्शनप्राक्काल एव काल इति भविष्यत्पुराणगतसावित्रीचरितघटकवचनादिभिश्च सिद्धेऽपि; कामनामात्रप्रयोज्ये द्वितीये दात्रभावप्रयोज्ये तृतीये च कालस्याव्यवस्थितत्वाद्यदा कामना तदैवेत्यापतति, सत्यामपि कामनायां न स्त्रीस्वातन्त्र्यमर्हतीति निषेधस्मृत्या पित्रादिराजान्तानुमतिमन्तरा स्त्रियाः पुरुषसंयोगादावपि स्वातन्त्र्याभावेन दात्रपेक्षायां दात्रभावे वा विवाहसंस्कारराहित्येनावस्थानापत्तिश्च। अतो विधीयते कालनिर्देशपूर्वकं स्वातन्त्र्यप्रापणद्वारकस्स्वयंवरः त्रीणि वर्षाणीत्यादिना ऋतुत्रयमतीत्येत्यादिना च। कन्यायाः दात्रभावे तु कालस्यानिर्दिष्टत्वात्सामान्यशास्त्रोक्तऋत्वदर्शनकाल एव ग्राह्यः। तत्र स्वयंवरविधायकानि गम्यन्त्वभाव इत्यादीन्येव। अत एव हेमाद्रिमाधवीयादिनिबन्धेषु—अथ स्वयंवरः अथ स्वयंवरकालनिर्णय इतिविवाहकालविधितः पृथक्तन्निरूपणं च सङ्गच्छते। नन्वेवं त्रीणि वर्षाणीत्यादिवचनबोधितस्वयंवरविधिः किमपूर्वविधिराहोस्वित्परिसङ्ख्याविधिरुतनियमविधिः। उच्यते—

लोके व्यवायामिषमद्यसेवा
नित्यास्तु जन्तोर्न हि तत्र चोदना।
व्यवस्थितिस्तेषु विवाह-
यज्ञसुराग्रहैरासु निवृत्तिरिष्टा॥

इति श्रीमद्भागवतादिग्रन्थोक्तरीत्या रागतः प्राप्ते- र्नाद्यः। न वा नियमः रागवतीनां पाक्षिकप्राप्तिराहित्याभावात्। किन्तु परिसंख्याविधिरिति वाच्यं पतितदितरपुरुषाभ्यां च तत्प्राप्तेः। सा च प्रतिप्रसूता स्त्रीणां सर्वत्र स्वातन्त्र्यनिषेधात्। गुणवद्वरलाभे ऋतुत्रयानन्तरमेव तदलाभे वर्षत्रयानन्तरमेव चतुर्थे वर्षे एव वरयेदेव विन्देतैवेत्यादिरीत्या वक्तव्यं पित्रादिदातृवर्गस्य स्वत्वावधिबोधकानि त्रीणि वर्षाण्युदीक्षेतेत्यादीनि च। तत्स्वत्वनिवृत्तिबोधकानि तु—

स हि स्वाम्यादतिक्रामदृतूनां प्रतिरोधनात्।

इत्यादिमानवादिवाक्यानि। स्वस्वत्वोत्पत्तिबोधनद्वारा स्वयंवरविधायकानि तु ततश्चतुर्थे वर्षेत्वित्यादीनि इति वस्तुस्थितिः। वरस्य कन्यायां स्वत्वोत्पत्तिस्तु स्वयंवरसामान्ये कन्याकर्तृकवरणेनैव। दात्रनुमतिप्रयुक्तस्वयंवरे दात्रनुमतिरेव वरणे कन्यायास्स्वत्वोत्पादिका। वरणन्तु वरस्य स्वत्वोत्पादकमिति दातृकर्तृकस्वनिष्ठस्वामित्व-

प्रापणस्यैव दात्रनुमतिपदार्थत्वात् । दात्रभावप्रयुक्तस्वयंवरे तु स्वनिष्ठस्वत्वनिरूपितस्वामित्वाश्रयव्यक्त्यन्तरराहित्येन स्वस्या एव स्वामित्वप्राप्तौ नारदवचनेन राज्ञः स्वामित्वबोधनात्तदनुमतिरेव वरणे स्वामित्वोत्पादिका तस्याः । तथा च निरुक्तदिशा स्वस्याः स्वत्वोत्पत्त्यनन्तरं सावर्ण्यादिगुणविशिष्टपुरुषस्य स्वस्यां स्वत्वमुत्पाद्य तेन यथाविधि संस्कृता तद्द्वारैव कामनिवृत्तिं कुर्यान्न तु स्वातन्त्र्येण चरेदिति विधीयते 'सा कन्या वरयेत्स्वयम् । विन्देत सदृशं पतिम् । कन्या कुर्यात्स्वयंवरमित्यादिवचनैरिति फलितम् । एवं चात्र कन्याकर्तृकस्वस्वत्वनिरूपितस्वामित्वोत्पत्त्यनुकूलव्यापार एव सः । उभयत्रापि वरकर्तृककन्याकर्मकस्वीकारादेव वरस्य कन्यायां स्वत्वोत्पत्तेः । न च प्रदानं स्वाम्यकारणमिति मनुना प्रदानस्यैव स्वत्वोत्पत्तिजनकत्वोक्त्या स्वीकारे तत्त्वं कथमिति शङ्क्यम् । तस्य ब्राह्मादिमात्रविषयकत्वात् । अन्यथाऽऽसुरादिष्वव्याप्तिः स्फुटैव । साङ्गसंस्कारसिद्ध्ये विवाहाङ्गत्वेन पश्चाद्दानेऽपि तत्र तस्य स्वत्वोत्पत्त्यजनकत्वात् तस्यैव सर्वत्र तत्त्वस्वीकारे यत्र पश्चाद्दानं न भवति तत्र स्वत्वानुत्पत्तिप्रसङ्गाच्च ।

गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ।
गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैस्समर्थेनाग्निसाक्षिकम् ॥

इति नारदादिभिः पुनर्विवाहसंस्कारस्य साङ्गस्य विधानात्तदङ्गत्वेन दानं न तु स्वत्वजनकत्वेन आसुरादिषु शुल्कदानोत्तरं वरनाशादौ विशेषविधानाद्यनुपपत्तेः दात्रभावात्स्वयंवरेपि स्वत्वानुत्पत्तिप्रसङ्गाच्च । राजोद्देश्यकदात्रभाववत्कन्याकर्मकदानविधिविशेषाभावाच्च । वरणाधिकारमात्रप्रापणस्यैवानुज्ञापदार्थत्वाच्च । अतो ब्राह्मादिषु दानं आसुरे शुल्कं राक्षसे हरणं गान्धर्वे स्वीकारः पैशाचे अभ्युपगमश्च स्वत्वं जनयन्तीत्यवश्यमङ्गीकार्यम् । उक्तं च तथैव महानिबन्धेषु व्यक्तम् ।

कन्याया विवाहाभावेनावस्थाने प्रत्यवायो बोध्यते भीष्मेणानुशासनिके—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
चतुर्थेत्वथ सम्प्राप्ते स्वयं भर्तारमार्जयेत् ॥
प्रजा न हीयते तस्या रतिश्च भरतर्षभ ।
अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापते रिति ॥

अत्र वाक्यशेषेण स्वतन्त्रचारो विवाहाभावेनावस्थानं वा प्रजापतिनिन्दास्पदमिति स्पष्टमुच्यते । किञ्च तत्रैव ।

असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ।

इत्यादिवचनैर्नारदेनाविवाहितकन्याया उत्तमलोकानवाप्तिकथनेन नैष्ठिकब्रह्मचर्यमपि निरस्तम् । अतो नित्यो विवाह इति सिध्यति । अत्र युगे दीर्घकालं ब्रह्मचर्यं इत्यादिना पुंसामपि नैष्ठिकब्रह्मचर्यं निषिद्धम् । एतेन कन्याकर्तृकवरणस्यैव स्वत्वोत्पादकत्वं न पुंवरणस्येति व्यक्तीकृतं भवति । न च 'गान्धर्वः समयान्मिथः । इच्छयान्योऽन्यसंयोगः इत्यादिवचनैर्मिथःपदादिघटितैर्व्यासज्यवृत्तित्वेनोभयसमयस्यैव स्वत्वोत्पादकत्वसंस्कारप्रयोजकत्वे बोधिते इति वाच्यं इच्छन्त्यास्स्वयं संयोगो गान्धर्वः । स्वयं कन्या वरयते स गान्धर्वः इत्यादि गौतमहारीतादिवचनैर्गान्धर्वलक्षणैस्सा कन्या वरयेत् स्वयमित्यादिविधायकैश्च कन्याकर्तृकवरणस्यैव प्राधान्यलाभात्पुरुषोद्देश्यकवरणविधानाभावाच्च । कुत्रापि समयस्याङ्गीकाररूपस्य वरणोत्तरकालिकत्वेन च । एवं चोपनतां पत्नीं नावमन्येत्कदाचन । इत्यादिवचनैः प्रत्याख्याननिषेधद्वारा स्वस्वत्वोत्पत्त्यनुकूलव्यापाररूपस्वीकारमात्रस्यैव पुरुषनिष्ठत्वबोधनादुभयाङ्गीकारस्य संस्कारमात्रप्रयोजकत्वाभ्युपगमेन निरुक्तार्थसिद्धेः अत एव—

'योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामां दूषयँस्तुल्यो न वधं प्राप्नुयान्नरः ॥

इत्यादिभिरकामकन्यादूषकस्य दण्डविधानं सकामकन्यादूषकस्य तदभावश्च सङ्गच्छेते । एतद्

भवति भार्यात्वेन मामङ्गीकुर्वित्यादिस्वकामाविष्कारपूर्वकवाक्यप्रयोगादिरूपकन्याकर्तृकस्वीकारानुकूलव्यापारेण वरकर्तृकस्वाङ्गीकारपूर्वकस्वीकारेण कन्यायां वरस्य स्वत्वोत्पत्तिः उभयाङ्गीकारस्तु स्वत्वोत्पत्तिसमनन्तरकालिकवरकर्तृकसंस्कारप्रयोजक इति। संस्कारस्य स्वत्वोत्पत्तिसमनन्तरकालिकत्वात्सर्वत्र। स्वाशयाविष्कारे पौर्वापर्यभावस्तु विवक्षित इति बोधयन्ति मिथःप्रभृतीनि पदानि। कन्याङ्गीकारस्तु मुख्यः शरीरे स्वस्यास्तदानीं स्वत्वसंस्थितेः वरस्य स्वत्वाभावात्। एतेन विवहेद्विधिवत्पुमानित्यादिविधिवलेन पुंवरणमात्रस्यापि स्वत्वोत्पादकत्वं वदन्तः परे परास्ताः। निरुक्तदिशा क्रयप्रतिग्रहाद्युपायाद्यन्यतमानुत्पन्नस्वत्वेषु परस्वत्वाश्रयेषु सर्वेषामपि स्वच्छन्दभोगप्रसक्त्या सर्वव्यहारकाण्डोच्छेदापत्तेः। आसुरादिष्वपि दानमेव स्वत्वोत्पत्तिजनकमिति मते दानं स्वीकारानुकूलव्यापारः स्वयंवरे। इदमेवाभिप्रेत्य वीरमित्रोदयकारैरिच्छन्त्या स्वयं संयोग इति गौतमवचनव्याख्यानावसरे स्वयमितिवचनात्स्वयमेव स्वस्य दानं कर्तव्यमिति गम्यते इति व्याख्यातमित्यलं स्वत्वविमर्शेन। प्रकृतमनुसरामः इत्थं चेच्छयान्योन्यसंयोग इत्यादिलक्षितमातापित्रादिदातृकर्तृकदानरहितगान्धर्वविवाहस्य वधूवरोभयकामनामात्रप्रयोज्यस्य व्यवस्थारहित्येन कामनासमकालप्राप्तस्य निरुक्तदिशा वर्षत्रयऋतुत्रयान्यतरदीक्षणविधिः स्वयंवरविधिश्च प्रतिप्रसूतपरिसङ्ख्याविधिरिति केचित्। अन्ये तु व्यवायमात्रस्य रागतः प्राप्तावपि स्त्रीपुंससाधारण्येन पुंसां व्यापारान्तरानधीनव्यापाराश्रयत्वरूपस्वातन्त्र्यसद्भावेन रागस्य नित्यत्वपक्षे विवाहविधिः परिसङ्ख्या। अनित्यत्वपक्षे च रागाभावेऽप्राप्त्यभावेन रागसत्त्वे नियम एव। अत एव—

गार्हस्थ्यमिच्छन्व्रतिकः कुर्याद्दारपरिग्रहम्।

इत्यादाविच्छाया एव विवाहप्रयोजकत्वमुच्यते। स्त्रीणान्तु रागवत्त्वेऽपि पिता रक्षतीत्यादिवचनैस्सर्वत्र स्वातन्त्र्यनिषेधेन यावत्पर्यन्तमुदीक्षणादिविधयो न स्युस्तावत्पर्यन्तं दातृस्वत्वानिवृत्तेः पुंसंयोगादिप्रवृत्तेरपि निषेधाद्दातृस्वत्वाश्रयकन्यायां स्वस्वत्वाभावेन पुंसोपि तत्प्रवृत्तेर्निषिद्धत्वादुभयकामनायामप्युभयोरप्राप्त्या दातृस्वत्वावधिकालनिरूपणद्वारा तदुत्तरं तत्स्वत्वनिवृत्तेः कन्यास्वत्वप्राप्तेश्च बोधनद्वारा एवं चोपनतामित्यादिना प्रत्याख्याननिषेधद्वारा च कन्याकर्तृकवरणपूर्वकस्वस्वीकारमात्रेणापि पुंसस्स्वत्वबोधनद्वारा चोभयकामनायामृतुत्रयवर्षत्रयान्यतरानन्तरकाल एव विवाहप्रापकत्वादपूर्वप्रसवविधित्वमेव तेषां युक्तमित्याहुः। अकरणे प्रत्यवायबोधनाच्च नित्यत्वमिति विभावयन्तु विद्वांसः। एतेन दात्रनुमतिकालोऽपि निरूपित एव राज्ञो दातृस्थानापन्नत्वेन तदनुमतिकालोपि स एवेति न विशयावकाशः। एवं च दात्रभाववत्कन्यास्वयंवरस्यापि परमावधिश्चतुर्थवर्ष एवेति व्यक्तमुक्तं भवति। अत्र त्रीणि वर्षाण्युदीक्षेतेत्यादिना निरीक्षणादिविधितः स्वतः प्राक्कामनायामपि स्वातन्त्र्यनिषेधावगमात्सकामाया अपि गान्धर्वनिषेधः स्पष्टं प्रतीयते। तथा च मनूक्तिघटकपितृशासनपदस्य दातृमात्रोपलक्षकत्वाद्दात्रपेक्षादात्रभावयोः पित्रादिराजान्तदात्रनुमतिपरमावधिबोधकानि निरीक्षणादिविधिवाक्यानि स्वातन्त्र्येण तदुत्तरं चतुर्थवर्षे गान्धर्वविधायकानि च स्वयंवरविधिवाक्यानीति च सिद्धम्। एवं स्थिते या कामोद्रेकवशात्प्रागेव ऋतुत्रयाद्दात्रनुमतिमन्तरा स्वाच्छन्द्येन कञ्चन पतिमुपगच्छति दातृन्यक्कारिणी सा प्रत्यवेत्यैव स्वैरिणी शास्त्रोल्लंघिनी गर्ह्या चोभयत्रेति निरूपितप्रायम्। एतेन ऋतुत्रयप्राक्कालिकदात्रनादरपूर्वकस्वयंवरो न शास्त्रीय इत्यपि व्यक्तमुक्तं भवति। अत एव पोषकमात्रभूतवास्तविकस्वामित्वानाश्रयकण्वतश्शकुन्तलायाः—

फलाहारी गतो राजन्पिता मे इत आश्रमात्।
मूहूर्तं संप्रतीक्षस्व स मां तुभ्यं प्रदास्यति॥

इति भीतिपूर्वकं दुष्यन्तं प्रति प्रतिवचनम् ।

त्वया च भद्रे रहसि मामनादृत्य यः कृतः ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायास्सकामेन निर्मन्त्रो रहसि स्मृतः ॥

इत्यादिना शकुन्तलायाः कण्वेन सान्त्ववचनं च सङ्गच्छेते । तस्याः कति ऋतवो गता इति तु न प्रभवामो वयं निरूपयितुम् । स्वयमेव वित्तस्वामित्वाभावादेव धर्मसर्वस्ववेदिनस्त्रिकालज्ञस्य तावत्कालपर्यन्तशकुन्तलाविवाहाकारयितुः कण्वस्य कण्वाभाव इति ब्रूमः । अत एव च गान्धर्वविधिना विवाहमभ्यर्थयमानं संवरणं प्रति तपत्या—

नाहमीशात्मनो राजन् कन्या पितृमती ह्यहम् ।
मयि चेदस्ति ते प्रीतिर्याचस्व पितरं मम ॥
यथा हि ते मया प्राणास्संगृहीता नरेश्वर ।
दर्शनादेव भूयस्त्वं तथा प्राणान्ममाहरः ॥
न चाहमीशा देहस्य तस्मान्नृपतिसत्तम ।
समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः ॥

इत्यादिना स्वकामाविष्कारेऽपि स्वातन्त्र्याभाववर्णनं कामनामात्रस्य गान्धर्वाप्रापकत्वं च सङ्गच्छते । अत्र पितृमतीतिविशेषणेन दात्रभावे स्वातन्त्र्यमिति सूच्यत इत्यादि विभावनीयं विज्ञैः । एवं शर्मिष्ठोपाख्यानेपि तत्रैव ।—

गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी ।
ददर्श यौवनं प्राप्ता ऋतुं सा चाप्यचिन्तयत् ॥
ऋतुकालश्च सम्प्राप्तो न च मेऽस्ति पतिर्वृतः ।
किं प्राप्तं किन्तु कर्तव्यं किंवा कृत्वा कृतं भवेत्

इत्यादिना विचारवर्णनोत्तरं—

अधर्मात्पाहि मां राजन् धर्मं च प्रतिपादय ।
त्वत्तोऽपत्यवती लोके चरेयं धर्ममुत्तमम् ॥

इत्यादिना ययातिवरणतदङ्गीकारादिवर्णनं दात्रभावादिषु यथायथं निरुक्तार्थेषु गमकमित्यलमुपाख्यानावलम्बनेन । एतेन वर्षसहस्रान्तदृष्टरजस्कशर्मिष्ठोपाख्यानाद्यवलम्बेनेदानीन्तनानां कन्यकानां पुष्पवतीनां विवाहसाधनप्रयतनं स्वच्छन्दिनां कीदृशं वेति न लेखनी प्रभवति लिखितुम् । अत्र शर्मिष्ठावाक्ये चाऽधर्मत्वमृतुदर्शनस्य कुत इति विचारयन्तु सुधियः । एवं च दात्रनुमतिप्रयुक्तस्वयंवरस्यापि ऋतुप्राक्कालिकस्यैवानुष्ठेयता शास्त्रसम्मता क्षत्रियाणां सिद्धा । स्पष्टं चेदं सावित्रीचरिते भविष्ये ।

तां दृष्ट्वा यौवनं प्राप्तां स्वच्छां तां देवरूपिणीम् ।
उवाच राजा सम्मन्त्र्य स्मृत्यर्थं सह मन्त्रिभिः ॥
युक्तः प्रदानकालोऽस्यास्तेन कश्चिद्वृणोत्विमाम् ।
विचारयित्वा पश्यामि वरं तुल्यं महात्मनः ॥
देवादीनां यथा वाच्यो न लभेयं तथा कुरु ।
बोध्यमाना मया पुत्रि धर्मशास्त्रेषु गच्छतम् ॥
पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
ब्रह्महत्या पितुस्तत्र सा कन्या वृषली स्मृता ॥
अतोऽर्थं प्रेषयामीति कुरु पुत्रि स्वयंवरम् ।
वृद्धैरमात्यैस्सहिता शीघ्रं गच्छ विधारय ॥
एवमस्त्विति सा पुत्री प्रोक्ता तस्माद्विनिर्ययौ ।
तपोवनानि रम्याणि राजर्षीणां जगाम सा ॥

इत्यादिना सावित्रीं प्रत्यश्वपतिवचनादिभिर्दात्रनुमतिप्रयुक्तस्वयंवरस्य रजःपूर्वभावित्वमेव धर्म्यमिति न तिरोहितं प्रेक्षावताम् । एतेन स्वयंवरमात्रस्य रजोदर्शनोत्तरभावित्वमेव न कदापि तत्पूर्वभावित्वमिति दुरूहप्रपञ्चो दुर्मेधसां परास्तः । ऋतुदर्शनोत्तरं तु निरुक्तप्रायश्चित्तपर्वकत्वाग्निरीक्षणादिविधिस्वारस्याच्च दातॄणामनुमतिदानपूर्वकविवाहकारयितृत्वं चापत्कल्पतयाभ्यनुज्ञातम् । न हि कुत्रापि साक्षात्पित्रादीनामृतूत्तरं कन्यादानाविधायकं वचनमुपलभ्यते यथा प्राक् । ऋतुत्रयाद्यनन्तरकालिकस्तु स्वयंवरः कन्यानामापत्कल्प एव सर्वथा न मुख्यो नापि गौणः स्वतन्त्र्याभावाद्दात्रपेक्षणाच्च । दात्रभावप्रयुक्तस्तु सर्वदा कन्यानामापत्कल्प एव

स च रजोदर्शनात्प्रागेव न्याय्यो निरीक्षणादिविषयभावात् स्वातन्त्र्याद्राजभिन्नस्वामित्वाश्रयव्यक्त्यन्तराभावाच्च। न च रजोदर्शनात्प्राक्कामनाया असम्भवेन स्वयंवरसामान्यस्यैव दृष्टरजस्काविषयकत्वं कल्प्यम्। आवापोद्वापाभ्यां यौवनाविर्भावस्यैव कामनाहेतुत्वेन रजोवहिर्निस्सरणस्यैव तद्धेतुत्वकल्पने मानाभावादनुभवविरोधाच्च। मम तु गौरीमपि च रत्यर्थं गच्छेदित्यादि गौतमवचनै रजोदर्शनात्प्रागपि निषेककर्तव्यताबोधकैरनुभवेन च कामनोदये प्रतिबन्धकाभावस्सिद्ध्यतीति न विरोधः। अत एव सकामकन्यादूषक दण्डविधानाभावबोधकवचनसङ्गतिरपि। सा च कामना न प्रजोत्पत्तिप्रयोजिकेत्यन्यत् निरूपयिष्यते चैतदुपरिष्टात्। न च राजसन्निधिगमनतन्निवेदनयोरनुपपत्तिः बाल्यस्यतादृशज्ञानोदयप्रतिबन्धकत्वादिति वाच्यम्। पुरुषसंयोग विषयकज्ञानोदये बाल्यस्याप्रतिबन्धकत्वम्, राजनिवेदनज्ञानोदये प्रतिबन्धकत्वमिति वैषम्ये बीजाभावात्। न च शास्त्रापरिज्ञानं प्रतिबन्धकमिति वाच्यम्। वृद्धद्वारा तदवगमस्य सुशकत्वात्। अन्यथा शास्त्रापरिज्ञानिनां सर्वत्र स्वच्छन्दप्रवृत्त्यापत्तेः। तत्परिज्ञाने यत्नस्यैव कर्तव्यत्वात्। नहि ब्रह्मणा सर्वेषामप्युत्पत्तिसमकालिकत्वेन धर्मशास्त्रपरिज्ञानित्वमपि सृष्टमुपलभ्यते लोके। येनाधर्मप्रवृत्तिरेव न स्यात् तदज्ञानविलयश्च स्यात् तदज्ञानिनां पातकाभावप्रसङ्गेन प्रायश्चित्तादिविधायकशास्त्रव्याकोपाच्च। न हि रजोवहिर्निस्सरणमात्रस्यैव पुरुषकामनादिव्यज्ञानोत्पत्तिप्रयोजकत्वं शास्त्रदृष्टमनुभव दृष्टं वाऽस्तीत्युपपद्यते वक्तुम्। तस्माद्यत्किञ्चिदेतत्। अत एव गम्यन्त्वभावेदातृणामित्यादिविधीनां रजोदर्शनपूर्वकालविषयकत्वेनैव ( एतच्चासति रजोदर्शने द्रष्टव्यम् ) इत्याद्युक्तिभिर्माधवाचार्यादीनां निबन्धनकृतां व्यवस्थापनं सङ्गच्छते। यदि तु प्रमादादज्ञानाद्वा रजोदर्शनात्प्रागविवाहिता स्वयंवरविधानेन राजानुमतिपूर्वं कालमतिपातयेत्सा भ्रूणहत्यादिदोषभिया निरुक्तदिशा राजानुमतिमुपलभ्य निरीक्ष्य च तदर्थमावर्षत्रयं तदलाभे गुणवद्वरावाप्त्यावृतुत्रयानन्तरं तदनावाप्तौ वर्षत्रयानन्तरं च यथासम्भवगुणोपेतं सावर्ण्यादिधर्मविशिष्टं यं कंचन स्वयं वृणुयात् अन्यथा सा पतितैव स्यात् क्षत्रियादिकन्यका। ब्राह्मणी तु निरुक्तपरित्यागविधिबलेन दातृभावेपि रजोदर्शनात्प्रागेव स्वयं वृणुयाद्राजानुमत्या न परत्रेति वस्तुस्थितिः। यदा रजोदर्शनात्प्राग्दातृभाववती ब्राह्मणी गान्धर्वविधानेन ब्राह्मणेन विवाह्या भवति तदानीं परिणेतुर्विप्रस्य प्रायश्चित्तं विधत्ते हेमाद्रौ यथा अतो गान्धर्वासुरराक्षसपैशाचविवाहेषु विप्राणां निषेधात्पृथक् प्रायश्चित्तमाह मार्कण्डेयः—

विवाहे त्वासुरे विप्रश्चरेच्चान्द्रायणत्रयम्।
चान्द्रत्रयं पराकं च गान्धर्वे सम्यगाचरेत्॥
राक्षसे च महाचान्द्रं तप्तकृच्छ्रत्रयं तथा।
पैशाचे कामकृच्छ्रं च तथा चान्द्रत्रयं स्मृतमित्यदि॥
असुरादिविवाहेषु दैवाद्यदि ह पूर्वजः।
प्रायश्चित्तं तदा कृत्वा पश्चात्तेषु प्रवर्तयेत्॥
अन्यथा दोषमाप्नोति पापयोनिषु जायते इति॥

अत्र दैवादित्युक्तिरापद्विषयतां बोधयति। आपच्चासुरादिषु धनहैन्यगुणहैन्यविद्याहैन्यादिप्रयुक्तविवाहाप्राप्तिप्रयोज्या वंशविच्छेदावाप्तिमूलिका शुल्कदानदातृभाववत्कन्यापरिग्रहादिरूपा वरस्य। न चात्र गान्धर्वपदेन रजस्वलागान्धर्वग्रहणं घटते येन मार्कण्डेयेनैतत्प्रायश्चित्तं विधीयते तेनैव तस्याः परित्यागरूपप्रायश्चित्तान्तरविधानात्; न वा दात्रनुमतिप्रयुक्तगान्धर्वग्रहणं तस्यापद्रूपत्वाभावात् मानवमतिपूर्वकत्वेन दैवाहेतुकत्वाच्च। वक्ष्यमाणमन्वादिवाक्यानुरोधेन प्रागुक्तदिशा च ब्राह्मणानां तदप्राप्तेश्च। किन्तु दातृभाववदरजस्वलागान्धर्वस्यैव ग्रहणात् यावद्दातृभावस्यदैव हेतुकत्वात्। न च स सार्वदिकत्वेन प्राप्नोति किन्तु कादाचित्कतयेति दैवादित्युक्तिसङ्गतिरुन्नेया। अत एव च कमलाकरादिभिरपि निबन्धकृद्भिः गान्धर्वादिविवाहेष्वित्यादिवचनव्याख्या-

नावसरे ( गान्धर्वादौ विप्रवर्जमधिकार उक्तः ) इत्युक्त्वा त्रिभिर्वर्णैरित्यनेन क्षत्रियादयोग्राह्या इति व्याख्यातम्। यत्तु संस्काररत्नमालायां त्रीणि वर्षाणीत्यादिवचनानां दात्रभावप्रयुक्तरजोदर्शनविषयकत्वेन भट्टगोपीनाथव्याख्यानं तदापातरमणीयमपि न। दात्रभावे पित्रादिदातृशासननिरीक्षणविधिव्याघातापत्तेरित्यास्तां निवन्धविमर्शनेन वामिताकरेण। किं बहुना—

अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते।
इतरेषान्तु वर्णानामितरेतरकाम्यया॥

इति मनुना ब्राह्मणाना मुदकदानपूर्वकाश्चत्वारो ब्राह्मदाय एव धर्म्या नेतरे। दानमेव तेषां स्वत्वोत्पादकं नान्यदिति निषेधत्येवकारेण विशिष्यत इत्यनेन च। इदमेव प्रपञ्चितं बहुधा निखिलैरपि स्मृतिकारैः—

पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रदानिकाः।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति कुलद्वयम्॥
ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः॥
इतरेषु तु शिष्टेषु नृशंसानृतवादिनः।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषस्सुताः॥

यथायुक्तो विवाहस्तथा युक्ता प्रजा भवति।

अनिन्दितैःस्त्रीविवाहैरनिन्द्या भवति प्रजा।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्॥
कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥

इत्यादिवचनजातेन ब्राह्मणानां ब्राह्मादिविवाहचतुष्टयमेव धर्म्यं तदेवानिन्द्यसन्ततिजनकमितरे तु निन्दितसन्तानजनकाः कुलनाशकाश्चेत्युद्घुष्यते। तथाच न च विप्रेष्वधीकार इति वचनघटकवरणपदेन दात्रभाववदरजस्वलाकर्तृकवरणभिन्नत्वेन संकोचितं वरणं ब्राह्ममिति सिद्धम्। प्रागुदाहृतहेमाद्र्यादिधृतमार्कण्डेयादिप्रायश्चित्तवचनानुरोधादिति स्वयंवरव्यवस्था। एतेन त्रीणि वर्षाणीत्यादिवचनबोधितविवाहकालस्य सर्वस्यापि गौणत्वव्यवस्थापनं ब्राह्मणीनामपि तत्प्रापकत्वं गुणवद्वरलाभविषयकत्वेन निरुक्ताश्वलायनादिप्रायश्चित्तानामपि तल्लाभविषयकत्वेन च रजस्वलाविवाहनिषेधकवचनानां सर्वेषामपि गुणवद्वरलाभविषयकत्वेन च व्यवस्थापनादिकं विमर्शकृदादीनां दुर्वासनामूलकं प्रत्युक्तम्। गर्भे त्यागो विधीयत इत्यादि त्यागविधिष्वपीदृशैःरास्तिकाभासैः किं किं न कल्प्येतेति युक्तमुत्पश्यन्तु प्रामाणिकाः सुधियः। अथ निरुक्तयात्रद्व्यवस्थोपोद्बलकान्येव कानिचिदार्षाणि वचनान्युदाहरिष्यामः। प्रायश्चित्तकाण्डे कन्याशुद्धिप्रकरणे पराशरः।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिबन्ति पितरोऽनिशम्॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥
यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः॥

अत्र ऋतुदर्शनमुपलक्षयितुं द्वादशे वर्ष इत्युक्तमिति माधवाचार्याः। प्रदानं प्रागृतोरित्यादिगौतमवचनानुरोधात्। एवमत ऊर्ध्वं रजस्वलेत्युक्तिरपि तत्सम्भावनयेति। युक्तं चैतत् स्मृतिसारे रजोदर्शननिर्णये—

दशवर्षादथो ब्रह्मन्कन्या वै पुष्पिणी यदि।
तद्व्याधिजमिति ज्ञेयं न तु स्त्रीणां स्वभावजम्॥

धर्मप्रवृत्तौ—

रागजं रोगजं चैव द्रव्यजं कालजं तथा।
स्त्रीणां चैव रजः प्रोक्तं कालजं दोषकृद्भवेत्॥
यावत्पञ्चाशदब्दानि परतो दशवत्सरात्।
मासि मासि रजः स्त्रीणां कालजं तत्प्रचक्षते॥
प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते।

इत्यादि बहुलवचनानुरोधेन दशवर्षादूर्ध्वमनैयत्येन रजोदर्शनप्राप्त्या दृष्टरजस्कानिषेधाभिप्रायकत्वकल्पन-

स्योचितत्वात्। एतेनेदानीन्तनानां रजोदर्शनस्याशास्त्रीयत्वं वदता त्रीणि वर्षाणीत्यादि विहितवर्षचतुष्टयकालस्य मुख्यत्वमेवेति पञ्चनदपारिषद्येन केनचिद्देवानांप्रियेणोक्तं प्रत्युक्तम्। तदुक्तेरेव निरुक्तदिशा-निर्मूलत्वात्। तथाचैकरात्रमात्रतद्भोगिन एव प्रायश्चित्तविधानादसकृद्भोगिनः प्रायश्चित्ताभावो मदर्महित इति विशेषणेन पश्चात्तप्तेन तस्याः परित्यागश्च ध्वनित इति व्यक्तं विदाम्। एवमेवात्रियमम रीच्यङ्गिरोबृहस्पतिदेवलादयो बहवस्स्मृतिकारा अविवाहितानां ब्राह्मणीनां वृषलीत्वं तत्पतेर्वृषलीपतित्वं तस्यासम्भाष्यत्वापाङ्क्तेयत्वादिकं च विप्रब्राह्मणादिपदघटितैर्वचनैर्विस्तरेण बोधयन्ति तान्यत्र ग्रन्थविस्तरभिया नोदाहृतानीत्यलं ब्राह्मणीविवाहकालव्यवस्थाविचारेण। अथ क्षत्रादिकन्यानामपि रजोदर्शनपूर्वकाल एव विवाहकालस्स्मृतिकाराभिप्रेत इत्यत्र दिङ्मात्रमुच्यते। तथाहि गौतमः'प्रदानं प्रागृतोः। अप्रयच्छन् दोषी। प्राग्वाससः प्रतिपत्तेरित्येके। याज्ञवल्क्यः-

अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ।

शातातपः—

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषली स्मृता॥

संवर्तः—

यावन्न लज्जते कन्या यावत्क्रीडति पांसुषु।
यावत्तिष्ठति गोमार्गे तावत्कन्यां विवाहयेत्॥

एवमेवाश्वलायनापस्तम्बवासिष्ठनारदबौधायनवेदव्यासप्रजापतिप्रभृतयो बहवःस्मृतिकारास्सार्ववर्णिकतया वर्णविशेषबोधकपदाघटितैर्वचनैः कन्याया रजोदर्शने वृषलीत्वादिकं पित्रादीनां च भ्रूणहत्यादिकं दोषजातमुशन्ति।

विवाहो ह्यष्टवर्षायाः कन्यायास्तुप्रशस्यते।
सप्तसंवत्सरादूर्ध्वं विवाहस्सार्ववर्णिकः॥
कन्यायाःशस्यते राजन्नन्यथा धर्मगर्हितः।

इत्यादिवचनैस्सप्तमवर्षादूर्ध्वमादशमवर्षेदातुर्ब्रह्म-लोकाद्यवाप्तिफलकत्वेन प्रशंसन्ति च—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकाम्॥

इत्यादीन्यनागतार्तवाबोधकनग्निकापदघटितानि प्रदानं प्रागृतोरित्यादिविहितमेव कालं पोषयन्ति। केचिदेतानि—

वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम्।

इत्यादिविहितवधूवरवयःप्रमाणमात्रव्यवस्थापकानीति वदन्ति।

तत्र फलविशेषाकथनेन प्राप्ते तु द्वादशे वर्षे इत्यादिनिषेधेन कन्यादानजन्ययावत्फलाप्रापकत्वप्राप्त्या गौणत्वमात्रमेवेति वक्तुं युक्तम्। अत एव द्वादशे वर्षेपि कन्यादानप्रतिग्रहौ न निषिद्धाविति निषेधाविषयत्वमात्रमेवोशन्ति माधवाचार्याः।

यद्यपि वृषलीत्वबोधकानि सामान्यवचनानि शूद्राति रिक्तविषयाणीति साम्प्रतं वक्तुं तस्यातिदिश्यमानधर्मत्वेन वृषलेषु स्वतः सिद्धस्य तस्यानतिदेश्यत्वाद्वैयर्थ्याच्च। तथापि भ्रूणहत्यापादकानि वचनानि तद्विषयाण्यपीति न वक्तव्यम्। न च पूर्वोक्तब्राह्मणादिपदघटितैर्वचनैरेकवाक्यतया सामान्यवचनानां वर्णविशेषबोधकपदाघटितानां विशेषपर्यवसानात्सर्वेषामपि ब्राह्मणमात्रविषयकत्वमेव कुतो न कल्प्यत इति वाच्यम्। पूर्वोक्तविभिन्नविभिन्नप्रायश्चित्तादिविधायकवचनविरोधादिदोषप्रसङ्गात्। एवं च ब्राह्मणानामिव क्षत्रवैश्यशूद्राणां यावद्धर्मबहिष्कृतसङ्कीर्णानां च रजोदर्शनात्प्रागेव विवाहस्साम्परायिकफलौपयिक इति सिद्धम्। इयाँस्तु विशेषः ब्राह्मणीनां रजोदर्शनात्परमापत्कल्पतयापि न विवाहः किन्तु परित्याग एव। क्षत्रप्रभृतीनान्तु प्रायश्चित्तपूर्वकमापत्कल्पतया तावद्वर्षचतुष्टयमुक्तदिशा विवाहोऽभ्यनुज्ञायत इति। एवम्—

जातमात्रा तु दातव्या कन्यका सदृशे वरे।
काले दत्तासु कन्यासु पिता धर्मेण युज्यते॥

बालिका या भवेत्कन्या गुणाढ्यो यदि लभ्यते ।
दद्यादप्राप्तकालेऽपि देशकालभयान्नरः ॥
उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥

इत्यादीनि भीष्मादिवाक्यान्यत्यन्तबालिकाविवाहविधायकवचनानि कण्ठत उत्कृष्टगुणवद्वरलाभे गौणकल्पतयाभ्यनुजानन्ति । अत एव च—

द्विवर्षात्प्राग्विवाहश्चेत्कन्यका मरणंयदि ।
भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः ॥

इत्यादीनि तज्ज्ञापकान्यपि च सङ्गच्छन्ते । न हि गुणवद्वरलाभः कदापि चापद्भवति । किन्तु सम्पद्रूप एवेत्येतत्साम्यमविद्यमाने सदृशे गुणहीनमपि श्रये दित्यादीनां वदन्विमर्शकृत्पुष्पदर्शनानन्तरवर्षत्रयस्य गौणत्वव्यवस्थापकः कथं न लज्जति इत्यहो वलवती दुराशा पारलौकिकनिर्भीतिश्चेति विषीदामः । यथा गुणवद्वरलाभे कण्ठत इमान्यभ्यनुजानन्ति तथा नैकमप्यार्षं वचनं तल्लाभापेक्षया तावत्कालपर्यन्तावस्थापन निरीक्षणादिज्ञापकमप्यस्तीत्यलं पापकथया । यत्तु—

विवाह एव.पनयःस्त्रीणां वैदिक इष्यते ।
स्त्रीणामुपनयस्थाने विवाहं मनुरब्रवीत् ॥
उपायनोदितः कालः स्त्रीणामुद्वाहकर्मणि ॥

इत्यादिवचनैराषोडशाद्ब्राह्मणस्येत्यादिवचनैश्च स्त्रीणां विवाहस्योपनयनस्थाने विधानात्तत्कालस्यैवैतत्कालत्वेन विधानाच्च तदतिक्रमणकालस्य षोडशद्वाविंशतिवर्षोत्तरकालत्वे वर्णानुपूर्व्येण स्त्रीविवाहातिक्रमणकालोपि स एवेति सिद्धो रजस्वलाविवाह इति । तदप्यज्ञानविलसितमायुष्मतः उपनयनत्वातिदेशस्य नित्यत्वार्थत्वेन तत्कालविधानस्य चाष्टमादिवर्षप्राशस्त्यप्रापकत्वेन तदतिक्रमणावधिकालाप्रापकत्वात् अन्यथा पूर्वोदाहृतसर्वस्मृतिवचनव्याकोपवैयर्थ्ये केन वा परिह्रियेयाताम् । तदेकवाक्यतया सर्वासामपि रजोदर्शनस्यैव तदवधित्वेन कल्पनस्यैव युक्तत्वाच्च । प्रायश्चित्तादिभिः सावित्र्याहरणवत्पश्चात् क्षत्रादीनां प्रायश्चित्तादिभिर्यावद्वर्षचतुष्टयं विवाहप्राप्तिः । ब्राह्मणीनां नेत्येव विशेषः । अतो यत्किञ्चिदेतत् । एवं शिक्षाशास्त्रसिद्धान्तमहाघण्टापथे मन्त्रलिङ्गाद्येकपदिकाभासै रजस्वलोद्वाहसिद्धान्तफलप्राप्तये दुस्तर्कारण्यसञ्चारः परेषां मृतमूषिकालाभाय पर्वतखननप्रयत्नतुल्य एवेति तद्विमर्शनप्रयासोऽपि नस्तत्तुल्य एव । तथापि निर्विषसर्पफटाटोपवन्महताऽऽडम्बरेण लोकमोहनाय रचितश्शास्त्रार्थो विद्वदाभासैरिति स्थालीपुलाकन्यायेन परीक्ष्यतेऽस्माभिरपि । तत्र रजस्वलापाणिग्रहणकामुकैश्चिन्तामणित्वेन समाश्रितमिदं मंत्रद्वयम्—

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥
सोमो ददद्गन्धर्वाय गन्धर्वो ददग्नये ।
रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ॥

इति अत्र ब्राह्मणसर्वस्वे हलायुधः 'अघोरचक्षुरित्यादिमन्त्रं भवेति लोडन्तेनाशंसार्थकत्वेन व्याख्याय कन्यास्तुतिमाह सोम इत्यादि' इत्यवतार्य जन्मसमय एव ते त्वां सोमश्चन्द्रो लब्धवान् इत्यादिना स्तुत्यर्थकत्वेन व्याख्याय—

पूर्वं स्त्रियस्सुरैर्भुक्तास्सोमगन्धर्ववह्निभिः ।
भुज्यन्ते मानुषैः पश्चान्नैता दुष्यन्ति कर्हिचित् ॥
सोमश्शौचं ददौ तासां गन्धर्वश्च शुभां गिरम् ।
पावकस्सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥

इत्यभिप्राय इति प्रथमं मन्त्रं व्याचख्यौ । तत किमिदानीं चतुर्णामेवेत्याशङ्क्य सोमः गन्धर्वाय इमां ददत् दत्तवान् गन्धर्वोऽग्नये । अथ अनन्तरमग्निर्मह्यमिमामदाद्दत्तवान् न केवलमिमाम् रयिं च धनम् पुत्राँश्च पुत्रानपि अग्निर्मह्यमदादिति सम्बन्धः इति द्वितीयं मन्त्रं व्याचख्यौ । एवं जन्मसमय एव तद्भोगमेतन्मन्त्रव्याख्यानावसरे माधवाचार्यादयो न्यरूपयन्निति श्रुतम् । न तु तद्भाष्यमनुपलब्धत्वाद्दृष्टम्

हरदत्तादयस्तु न तद्भोगसमयं प्रतिपेदिर इति वस्तुतत्त्वम्। अथात्र तद्भोगसमयप्रतिपादने नैकापि श्रुतिरुपलभ्यत इति परैरिवास्माभिरपि स्मृतय एव शरणीक्रियन्ते। स्मृतयश्चात्र द्वेधा तत्कालमाचक्षते। काश्चन जन्मप्रभृत्येव काश्चन यौवनोदयप्रभृत्येव। तथाहि-बृहद्वज्ररञ्जने वेदव्यासः—

जन्मतः प्रथमे वर्षे सोमो भुङ्क्तेऽथ कन्यकाम्।
गन्धर्वोऽथ द्वितीयेऽब्दे तृतीयेऽग्निस्ततो नर इति॥

पराशरस्तु—

षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः।
सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः॥

इति। अन्यदपि—

चन्द्रगन्धर्ववन्ह्यम्बुशिवसोमस्मरा इमे।
पतयः कन्यकानां च बाल्यात्सन्ति सदैव ते॥

इति निर्णयसिन्धुधर्मसिन्धुसंस्कारकौस्तुभसंस्कारभास्करादिनिबन्धेष्वपि षडब्दमध्यइत्यादिवचनमुदाहृतम्। एतेनास्य वचनस्य बहुग्रन्थानुदाहृतत्वहेतुनाऽप्रामाणिकत्वकल्पनं विपश्चिच्चक्रवर्तिसत्साहसमात्रमेवेति व्यक्तीकृतम्। तथा च तद्भोगस्य मतभेदेनैकैकद्विद्विवर्षकालभेदेपि षडब्दमध्ये चन्द्रगन्धर्वेत्यादिवचनानुरोधेन षडब्दसप्तमाब्दान्तकालभेदेपि च तद्भोगस्य जननानन्तरकालिकत्वे न भेद इति स्पष्टम्। ततश्च निरुक्तत्रिविधवचनानुरोधेन सप्तसंवत्सरादूर्ध्वमित्यादिवचनानुरोधेन च—

सप्ताब्दा कन्यका नाम्नी शैशवी स्याच्छुभान्विता।
तामष्टादशवर्षीयो विवहेद्विधिवत्पुमान्॥

इत्यादिवचनानुरोधेन च सोमगन्धर्वाग्निमात्रभोगकाले च षडब्दसप्तमाब्दान्यतरान्तःपातिनि निषेधबलेन षडब्दान्तःपातिनि वा यदि मनुष्याय दीयते कन्या तर्हि तद्देयकाय कान्त्यादिरूपशुद्धिकल्याणवाणीनिखिलकर्मार्हताप्रयोजकपवित्रत्वादीनां तस्यामसिध्यापत्त्या विवाहनिषेधस्तदानीं प्रतिपादितस्समुचितश्चेति सिध्यति। अत एव मन्वादिभिः—

देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः।

इत्यादिभिर्बोधितोऽयमर्थस्सङ्गच्छते। अमुमेवार्थं दद्यादप्राप्तकालेपीत्यादिबालिकाविवाहविधायकेष्वप्यादिशब्दैस्सूचितवन्त इति प्रतीयते। प्रयोगपारिजातोदाहृतं—

विवाह्या जननादूर्ध्वं चतुर्थाब्दात्परं स्त्रियः।
आदशमाब्दपर्यन्तमारजोदर्शनात्पुरा॥
चतुर्थे जननादूर्ध्वं न विवाह्येति केचन।
गौरीव कन्यका भान्ति चूडादूर्ध्वमिह स्त्रियः॥

इति गौतमवचनं चौलकालादूर्ध्वमारजोदर्शनं विवाहप्रापकं पूर्वोक्तवेदव्यासवचनानुरोधीति परस्परसंवादोऽत्र सर्वेषामपि पक्षाणामस्तीति सिध्यति।

यानि तु—

भुञ्जीत व्यञ्जने सोमो गन्धर्वस्तु पयोधरे।
वलिवर्णागमे वायू रजस्यग्निः प्रतिष्ठितः॥
तस्माद्व्यञ्जनोपेतामरजामपयोधराम्।
अभुक्तां चैव सोमाद्यैर्दद्याद्दुहितरं पिता॥

इत्यादीन्यङ्गिरःकश्यपसंवर्तगृह्यसङ्ग्रहादिस्मृतिवचनानि यौवनचिह्नप्रादुर्भावादिकालमेव तद्भोगकालं निर्दिशन्ति। तानि सर्वाण्यपि वाक्यशेषेण तद्भोगकालप्राक्कालकर्तव्यतामेव विवाहस्य व्यवस्थापयन्तीति तदवलम्बेन सर्पमारणप्रयतनतुल्यमिति व्यक्तं विदाम्। अत एवात्रिबृहस्पती—

व्यञ्जने तु कुलं हन्यात्पितॄन्हन्यात्पयोधरे।
हन्यादिष्टं च पूर्तं च प्राप्ते रजसि कन्यका॥

इत्याहतुः। यत्र यत्र रोमाविर्भावादिकालस्तद्भोगकालत्वेन निर्दिष्टस्तत्र तत्र तद्वाक्यशेषेण तत्प्राक्कालकर्तव्यताया एव विवाहस्य विधानात्तत्र निषेधनाच्च जननानन्तरकालतद्भोगकालबोधकेषु तद्भोगकाले विवाहविधिनिषेधनात्तदनन्तरकाल एव तद्विधानाच्च गम्यते

सोमादिभोगकालो जननान्तरमेकवारं व्यञ्जनाद्याविर्भावोत्तरं च पुनरिति। तथा च प्राथमिकभोगानन्तरं द्वितीयभोगात् प्राक् च कन्यका विवाह्येति तुल्यबलविरुद्धस्मृतिद्वयव्यवस्था युक्तेति। अत एव च व्यञ्जनाद्याविर्भावकालभोगबोधकेषु वाक्यशेषैः—

विवाहस्त्वष्टवर्षायाः कन्यायास्तु प्रशस्यते।

इति क्वचित्क्वचित्स्मरणमपि सङ्गच्छते। अत एव च अष्टवर्षेत्यादिना गौर्यादिसङ्केतान्विधाय—

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां दददूब्रह्मलोकं रौरवन्तु रजस्वलाम्॥

इति मरीच्यादीनां तद्दाने फलविशेषस्मरणं तत्पूर्वकालेषु दोषबोधनं च घटते। प्रागुदाहृतस्मृतिवचनैर्जन्मादिसप्तमान्तःपातिन्येकादशादिरजोदर्शनपूर्वभाविनि च काले गुणवद्वरलाभालाभनिबन्धनाभ्यनुज्ञा दृष्टानुसन्धानेनाऽस्तीत्यन्यदेतत्। अत एव तस्य गौणत्वमेव न मुख्यत्वमुच्यते। तद्धि मुख्यत्वं यत्किञ्चिन्निषेधेनाप्यनाक्रान्तत्वे सति शास्त्रविहितयावत्फलाधायकत्वे सति कर्तव्यप्रापकत्वम्। गौणत्वन्तु यत्किञ्चिन्निषेधाक्रान्तत्वे सति विहितपूर्णफलाप्रापकत्वे सति प्रत्यवायाजनकत्वेन कर्तव्यप्रापकत्वम्। आपत्कल्पत्वन्तु निषेधाक्रान्तत्वे सति दृष्टफलप्रापकत्वेन प्रायश्चित्तादिपूर्वकाभ्यनुज्ञाविषयत्वम्। एतानि कालगतानि बोध्यानि। कर्मविषये तु कर्तव्यत्वेन विधीयमानत्वं वक्तव्यम्। तृतीयदलमाद्ययोः। प्रकृतमनुसरामः। किञ्च प्राथमिकभोगोत्तरं मनुष्याय चेत्सा दीयेत तदा न तेषां पुनर्भोग इत्यप्यनेन प्रतीयते। स च भोगस्तेषां तत्तत्कालिकः कीदृश इति भगवान्वेद एव वेत्ति तत्स्मर्तारो वा न वयं चर्मचक्षुष्का अदृष्टरूपं निरूपयितुं प्रभवामः।

अपि च सोमश्शौचमित्यादिवचनबोधितं तद्देयकायकान्त्यादिरूपशुद्धेः कल्याणवाण्या मेध्यत्वस्य च जन्मप्रभृतितत्तद्वर्षक्रमेण तत्तत्कालप्राप्याणां तत्तद्दशायामेव तत्प्राप्तिकल्पनं साधीयस्तदनन्तरयौवनदशायां वा, अन्यतरस्मृत्यवलम्बनेनान्यतरस्मृतिव्याकोपो वा कथं वा परिह्रियेतेति च युक्तमुत्पश्यन्तु सुधियः। एवं चाष्टवर्षादिविवाहविधिमेव साधयति सोमः प्रथम इत्यादिमन्त्रलिङ्गचयमित्यपरमनुकूलमस्माकम्। किञ्च तत्तत्कर्मसु तत्तन्मन्त्राणां विनियोजका आपस्तम्बादयो गृह्यकारा एव स्मृतिकारा अपीत्यविवादमद्यावधि। आपस्तम्बादिद्वयत्रयादिकल्पने मानाभावात्। यो ह्यापस्तम्बस्स्मृतौ सामयाचारिकधर्मप्रश्नेऽन्यत्र च (अनुद्वाहिता या कन्यार्तवेन युज्यते सा वृषली) इत्यादिना रजस्वलायाः कन्याया वृषलीत्वं निर्दिश्य तद्विवाहं निषेधति विधत्ते चाष्टवर्षादिविवाहं स एव कथं भवदभिमतरजस्वलाविवाहप्रापकलिङ्गवन्मन्त्राणामष्टवर्षादिविवाहे विनियोगं वक्तीति विचारणीयम्। एवं समावेशविषयेपि तथान्ये च महर्षयोपि। न च तेषामस्मादृशामिव विस्मृतिस्तन्मन्त्रार्थपरिज्ञानाभावो वा कल्पयितुं युज्यते। परावरज्ञेषु महर्षिषु तादृशकल्पनस्य विना स्वच्छन्दिनो नास्तिकानस्मादृशामयुक्तत्वात्। तदर्थपरिज्ञानाभावे तद्विनियोजकत्वस्य विप्रतिषिद्धत्वाच्च। एतेन विमर्शकृत्कृता पराशरनिबन्धा नास्तिकतां स्वस्य गमयतीत्यलं तत्परामर्शेन। किञ्च तन्मन्त्रयोस्तथैवार्थकल्पने धनपुत्रवत्या एव विवाहः प्राप्नोति नान्यासां। चेदिष्टापत्तिरलं शास्त्रविमर्शनप्रयासेन। अतो मेध्यत्वं यथाग्निर्धत्ते विवाहानन्तरकर्तव्यकर्मानुष्ठानौपयिकं तथा तत्तत्कालप्राप्यधनपुत्रादिसम्पत्तिमपि धत्ते तदनुगृहीतत्वात्। देवानुग्रहः किं किं न साधयति, अतस्तदनुगृहीतां त्वां लब्धवतः पुत्रादिकामुकस्य मे कामना त्वद्द्वारा सफला भविष्यतीति स्तुतिरेवात्र मन्त्रबोधितेति व्याख्येयं नान्यथा। एतेन (सा नः पूषा शिवतमा) इत्यादयस्सर्वेऽपि वैवाहिकमन्त्रा आशीसाद्यर्थकत्वेन हलायुधादिभिर्व्याख्याता व्याख्येयाश्चेति न किमपि मन्त्रलिङ्गं रजस्वलाविवाहसाधकमस्तीत्युक्त

भवति । अतो न श्रुतिलिङ्गशास्त्रार्थावकाशोऽपीत्थलं मन्त्रलिङ्गविमर्शनायासेन ।

अथ गृह्यलिङ्गमूर्धाभिषिक्तं समावेशनविधिलिङ्गं विमृश्य लिङ्गविमर्श उपरम्यते । यद्यपि स्मार्तश्रुतिमन्त्रलिङ्गयोर्द्वयोर्विरोधे कस्य वा प्राबल्यमिति चर्चायां केचिन्मन्त्रलिङ्गानां केचिच्च स्मार्तश्रुतेरेव प्राबल्यमित्युशन्ति, उभये च तत्र स्वशक्त्यनुगुणं मीमांसासरण्या विवदन्ते, उभयथा च दृश्यते तत्तद्विधिव्यवस्थानुगुण्येन निबन्धेषु, तस्य तु प्रकृते निरुक्तदिशा नावकाश इति निरूपित एव । प्रकृते तु गृह्यसूत्राणां कर्तृप्रतीत्या स्मृतित्वमेव न श्रुतित्वं कयापि दिशा सिद्ध्यतीति पूर्वोक्तप्रबलस्मृतिशतविरोधात्स्मार्तश्रुत्यपेक्षया स्मार्तलिङ्गस्य दौर्बल्यं श्रुतिलिङ्गाधिकरणन्यायेनाविप्रतिपत्त्या सर्वैरभ्युपगन्तव्यमेवेति न तद्विमर्शावकाशः, तथापि प्रत्येकपरिच्छेदात्प्रत्येकग्रन्थाडम्बरेण परैरुपक्रान्तत्वादस्माकमप्यस्ति तद्विमर्शेन व्यवस्थापनावसरः । अतोऽत्रकिञ्चिदुच्यते, आपस्तम्बोहि विवाहप्रकरणान्ते—आरोहोरुमित्याद्यनुवाकशेषस्य विनियोगं वक्तुमुपक्रम्य प्रणिनाय सूत्रचतुष्टयम् । तत्र प्रथमं सूत्रमिदम् ।

शेषं समावेशने जपेत् । इति ।

आरोहोरुमित्यादि देवेषु कृणुतो दुव इत्यन्तमनुवाकशेषमुद्दिश्य समावेशनाधिकरणकजपो विधीयतेऽनेन, अतस्तच्छेषस्य तत्र विनियोगो बोधितः न तु वधूवरावुद्दिश्य समावेशनकर्मानेन विधीयत इति स्पष्टं वाक्यार्थज्ञानिनाम् । समावेशनकालविशेषस्तद्विधिश्च वचनान्तरापेक्षः । तादृक् च वचनमापस्तम्बीयं दृश्यते नात्र । किन्तु गौतमेन—

गौरीमपि च रत्यर्थं गच्छेत्पुरुष आकुलः ।
अन्यथा वीर्यपातो हि सहस्रकुलपातकः ॥

गौरी तु नग्निका । अनागतार्तवेति कोशात् । अत एवेदं गमनं रत्यर्थं न प्रजोत्पादनार्थं तद्योग्यताभावात् । अन्यथा, प्रकारान्तरेण स्वदारगमनातिरिक्तेन, शिष्टं स्पष्टम् । एवं कश्यपेनापि

वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्न हि ।
अन्तः पुष्पं भवत्येव पनसौदुम्बरादिवत् ॥
अतस्तु तत्र कुर्वीत तत्सङ्गं बुद्धिमान् नरः ।

इत्यनेन द्वादशवर्षानन्तरमव्यक्तावपि रजसोऽन्तस्थित्यागमनं विधीयते । एतेनापि द्वादशवर्षादिविवाहस्या प्राशस्त्यं गौणत्वं च बोधितम् । एवमेतद्गमनस्य पूर्ववचनघटकाकुलविशेषणेनौच्छिकत्वं सति रागे गमनस्यादुष्टत्वादिकं च व्यक्तम् । एवं—

ऋतौ भार्यामुपेयात् ।
ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नाऽत्र संशयः ॥

इत्यादीनि नित्यत्वेन भार्योपगमनमृतूत्तरं विदधत्यनुपगमने प्रत्यवायं च । पूर्वन्तु न नित्यमकरणे प्रत्यवायास्मरणात् । तथा च ऋतुसमावेशनमनृतुसमावेशनमिति द्विविधं शास्त्रीयं समावेशनमित्यायातम् । तत्र च ऋतुपूर्वं समावेशनं—

नाजातलोम्न्या सहोपहासमिच्छेत् ।
अजातव्यञ्जनाऽलोम्नी न तया सह संविशेत् ।

इत्यादिनिषेधबलेन पूर्वोक्तकश्यपवचनेन च द्वादशवर्षानन्तरं समावेशनयोग्ययौवनवयोविशिष्टायामेवाभ्यनुज्ञायते न बालिकायाम् । एतदेव निषेकशब्देन व्यवह्रियते लोके । ज्योतिश्शास्त्रेपि मुहूर्तप्रकरणेषु मुहूर्तान्यपि च भेदेनैव तत्र समाम्नातानि । ऋतूत्तरसमावेशनन्तु गर्भाधानशब्देन । क्वचित्तु निषेकशब्देनापि । आचर्यते च लोके द्वितयमपि शिष्टैः । एवं च भेदो गृह्यरत्नकण्ठभूषणे वैदिकसार्वभौमैः कण्ठतो निरूपितः संवेशनमृतुकालात्पूर्वमेव गमनं गर्भाधानं पुनः ऋतुगमनमिति । वैवाहिकसमावेशनमित्यधुनातनैः परैर्व्यवह्रियमाणन्तु विना तान्न लोके नापि शास्त्रे कुत्रापि दृश्यते । ऊर्ध्वं त्रिरात्रात्सम्भव इति जैमिनीयगृह्यवचसापि

त्रिरात्रब्रह्मचर्यस्य नैयत्येन विधानात्तदूर्ध्वकालकर्तव्यतामात्रबोधनेनोर्ध्वत्वस्य चाव्यवस्थितत्वेनाङ्गीकृत्या निर्देष्टव्यतया चतुर्थदिनापररात्रनियतकर्तव्यत्वाव्यवस्थापकत्वेन च योग्यकालमात्रोपलक्षकत्वेन व्याख्येयतया च सन्निहिते पुण्यदिने सम्भव इत्यादिना तद्व्याख्यातृभिस्तथैव व्याख्याततत्वेन च संवत्सरादिब्रह्मचर्यविधायकगृह्यान्तरानुरोधेन च चतुर्थदिनापररात्रनियत कर्तव्यताव्यवस्थापकत्वे मानाभावेन च निरुक्तकश्यपादि वचनैकवाक्यतया निरुक्तदिशा योग्यतावत्यामृतोः पूर्वं सत्युत्कटे रागे,नियमेन च ऋतूत्तरमभ्युपगन्तव्यमित्येव प्राप्यते। अत एवैतत्सूत्रव्याख्यातृभिस्सर्वैरपि विना प्रमाणवचनोदाहरणमन्तरा च तत्सम्वादं स्वाभ्यूहितदिशा प्रकारभेदेन विविधपक्षाभिवर्णनपूर्वकं च चतुर्थ दिवसापररात्रस्य समावेशनकालत्वाकालत्वादिकं च नैयत्यानैयत्यादिवर्णनद्वारा कर्तव्यत्वाकर्तव्यत्वादिकं च बहुधा वर्णितम्। मण्डूकतोलनन्यायानुरोधितद्व्याख्यानावलम्बेनात्र व्यवस्थापनन्तु न शक्यम्। वैशिष्ट्यं नात्र सर्वे मिलित्वा व्यवस्थां वकहृदन्यायानुगां विदधिरे। परन्तु बहुलव्याख्यानानुरोधेन त्वयमत्र तत्सारांशः फलति। सत्यां च योग्यतायां युवतिविवाहे सतिच रागोद्रेके चतुर्थापररात्रे कालान्तरे वानृतुसमावेशनमपि कर्तव्यतामाप्नोतीति, तानि च सौदर्शनादीनि ग्रन्थ विस्तरभिया नोदाहृतानीति तत्रैव द्रष्टव्यानि। अष्टवर्षादिविवाहेऽप्यारोहोरुमित्यादिमन्त्रजपस्तु चतुर्थापररात्रे शेषहोमानन्तरं प्रयुज्यते याज्ञिकैः। स चायं मध्ये मन्त्रसमावेशनकालमुत्कटमोहान्धयोर्दम्पत्योः कदाचिन्मैथुनप्रवृत्तावमन्त्रसंस्कारापत्तिभियेति लौकिकानुसन्धानेनेति च वदन्ति ते। अत एवानृतुसमावेशनकाले पुनस्तन्मन्त्रजपाद्यनुष्ठीयत एव। यदि तु समावेशनकाल एव जपविधानात्कालान्तरे तदविधानाच्च यदा समावेशनं तदैव जपः कार्यः न चतुर्थापररात्रे समावेशनाभावे जपोऽपीत्युच्यतेऽभिनिवेशेन तर्हि कामं मास्तु जपो लौकिकानुयायी। इदमेवाभिप्रेत्य गृह्यर... सार्वभौमैश्चतुर्थापररात्रे शेषहेमान्ते, नात्रारोहोरुमित्या... दिमन्त्रान् जपेत् तेषां समावेशने विनियोगात् शेषान्ते वा विवाह इति निरूपितं कण्ठतः। एतेन समावेशनान्त एव विवाहः समावेशनं च चतुर्थापररात्रे नियमेन कर्तव्यमेवेत्यादयः पण्डिता... भासवादाभासास्सर्वेऽपि प्रत्युक्ता वेदितव्याः। यद्यपि वीरमित्रोदयादिषु निबन्धेषु प्राचुर्येण—

तेषां निष्ठा तु. विज्ञे या विद्वद्भिः सप्तमे पदे।

इत्यादियावत्स्मृतिवचनानुसारेण होमा... दिसप्तमपदनयनान्तसंस्कार एव विवाह इति सिद्धान्तितं, तथापि गृह्यानुसारिप्रयोगग्रन्थेषु शेषान्तो विवाह इत्येव क्वचिदुपलभ्यते; संवत्सरद्वादशरात्र षड्रात्रादिब्रह्मचर्याणामष्टाङ्गमैथुनरहितानामशक्यत्वस... म्भावनया त्रिरात्रपक्षस्यैव सर्वत्र परिगृह्यमाणतया तद... भिप्रायेण तथा व्यवस्थापितमिति भाति। शेषान्तो विवाह इत्यंशे प्रमाणानुदाहरणात्। आपस्तम्बेन त्रिरात्रमात्रविधानेपि तद्भिन्नशाखीयानां संवत्सरादिपक्ष... प्राप्तेः। नहि श्रेष्ठोक्तिर्निर्मूलेत्युपरम्यते तद्विचार... प्रकृते।

इत्थंचानृतुसमावेशनकालिकजपमन्त्रविधाय कमिदं सूत्रं न रजस्वलाविवाहसाधकमिति प्रत्युतानृतु कन्याविवाहसाधकमिति च सिद्धम्। किञ्च समावेशनस्यानैयत्येपि जपस्य नैयत्यमन्यो वैनामभिसन्त्रयेते... त्युत्तरसूत्रानुरोधेनाभिप्रयतां सुदर्शनादीनां मतेऽपि जपमात्रस्यैव प्रसक्तिस्तस्यैवात्र विधानात्। समावेशननै... यत्यन्तु न सुदर्शनादिसम्मतमिति तदनुयायियाज्ञिक... वर्गजपमात्रविधानमपि सङ्गतमस्तु। यदङ्गत्वेन यस्य विधानं तदङ्गाभावे तदङ्गाप्रसक्तिरिति न्यायाशयः अन्यो वैनामित्युत्तरसूत्रेपि समावेशनपदानुवृत्तेर... युक्तमुत्पश्यन्तु सुधियः। यदा मलवद्वासास्स्यादित्यादि... रजसः प्रादुर्भावात्स्नातामृतुसमावेशन उत्तराभिर... भिमन्त्रयते इत्युत्तरसूत्रद्वयेन च रजःप्रादुर्भावपूर्वक...

लिकत्वं विवाहस्य ऋतुसमावेशनानृतुसमावेशनद्वैविध्यं विभिन्नविभिन्नविधिद्वयेन स्पष्टमवगमयत्यापस्तम्ब इति न तिरोहितं प्रेक्षावताम् । एवमनेनैव वर्ज्यकन्यावोधनै रातान्युक्ता ।

राता—रमणशीला ऋतुस्नातावेति सुदर्शनादयः ।
वृषलीत्वबोधकमेतदुक्तं तु न विस्मर्तव्यम् ।

एवञ्च सर्वथा रजस्वलाविवाहसाधनमेतदवलम्बेन परेषां धीदृष्टिजाडयमन्तरा कथं घटत इत्यलं वृथायासजनकेन लिङ्गविमर्शेन, एतेनेदृशानि गृह्यलिङ्गानि सर्वाणि व्याख्यातानीति ध्येयम् ।

यत्तु न याचते चेदेवं स्यादित्यादिवचनानुरोधेन कन्याया याचमानाय वरायादाने एव भ्रूणहत्यादिदोष इति सङ्कोचनमपरं मेधाविनां तदपि स्वमेधाजाडयविलसितमनोराज्यमेव ब्राह्मादिषु कुत्रापि वरमुद्दिश्य कन्यायाञ्चाया अविहितत्वात् । परन्तु दातॄनुद्दिश्य कन्याकर्मकवरसम्प्रदानकदानमेव विधीयते । विवाहाङ्गत्वेन वरणन्तु मन्त्रवत्सुहृद्वरयितृसाम्मत्यरक्षणायैव । अतएव वेदव्यासादिभिर्वरमुद्दिश्य—

एवं स्नातकतां प्राप्य द्वितीयाश्रमकाङ्क्षया ।
प्रतीक्षेत विवाहार्थमनिन्द्यान्वयसम्भवाम् ॥ इत्यादि—
दातुमिच्छेद्दुहितरं प्राप्य धर्मेण चोद्वहेत् ।
इत्यादिवचनैः कन्यार्थं निरीक्षणमेव विधीयते ॥

आसुरे शुल्कदानाङ्गत्वेन याञ्चासत्वेऽपि तस्या न मुख्यत्वं न च शास्त्रीयत्वं प्रत्युत भ्रूणहत्याभाव एव याचमानायाप्यदाने वैशिष्ट्येन भ्रूणहत्यादोषस्तु ऋतुप्रतिबन्धादस्त्येवेति पृथक्पृथगित्यनेन समायात्येवेति गगनसौधे जाडयसिंहासनमधिरुह्य रजस्वलापाणिग्रहणकामनया मनोराज्यमनीषामन्त्रिमन्त्रणेन कालयापनमेव सिध्यति नतु तत्सिद्धिर्वन्ध्याप्रसूतिप्राया परेषामित्यलं परदोषगवेषणेन । एवमृतुमतीविवाहनिषेधकानि—

दृश्यरोमात्वपत्यघ्नी कुलघ्न्युद्गतयौवना ।
पतिघ्न्याविष्कृतरजास्ततस्ताः परिवर्जयेत् ॥
कालक्रीता तु सा वेश्या दासी स्यात्क्रयसंयुता ।
पितृदत्ता तु सा भार्या गान्धर्वी तु स्वयं युता ॥

इत्यादिस्कान्दादिप्रमाणवचनानि स्मृतिवचनानि च परस्सहस्राणि सन्ति । अत्र नग्निकाशब्दार्थनिरूपणादिषु परदुष्पाण्डित्यदुर्विलसितरूपशास्त्रार्थाभासस्सर्वोऽपि परेषां तुषावहननतुल्यतया ग्रन्थविस्तरभिया चोपेक्षित इति सन्तोष्टव्यमेतावतैव सुधीभिः । तथा च ग्रन्थादिनिरूपिता वर्णक्रमेण स्त्रीविवाहकालव्यवस्था निखिलस्मृतिसिद्धा विधातृसृष्टिमारभ्याद्यावधि निखिलभारतीयाविगीतवैदिकमहाजनपरिगृहीता निर्विचिकित्सं सिध्यतीति सिद्धान्त इति शिवम् ।

त्वदर्पितं विश्वनाथ व्यवस्थावज्रदर्पणम् ।
स्थापयार्यहृदम्भोजगृहेष्वाचन्द्रतारकम् ॥
परोक्ता वह्वस्सन्ति तुषतुल्याः कुयुक्तयः ।
सारहीनास्ततस्तास्तु नेहास्माभिस्समाहिताः ॥
इत्यत्रिकलपकुल्यः पुल्यस्स उमामहेश्वरस्सुधीन्द्रः ।
श्रीकाशिकीसरित्तटमुनिखण्डमहाग्रहारधृतधामा ॥
विबुधजनवसतिभूतलगंगलकुर्वग्रहारवास्तव्यः ।
तातान्वयजद्विजपतिकामेश्वरशर्मपोषितसुकविः ॥
श्रीमङ्गिपूडिवेंकटदेशिककरुणाप्तसद्विद्यः ।
वाग्देवीकरुणामृतपानावगताखिलागमरहस्यः ॥
कन्याविवाहकालव्यवस्थितिप्रथमबिम्बमिह विबुधाः ।
प्रादर्शयत्सुधर्मव्यवस्थितेर्वज्रदर्पणे हृद्ये ॥
मुद्रापयाञ्चकार स्वधर्मपरिपोषणाय निजवसुना ।
तातान्ववायकौस्तुभकामेश्वरशर्मबुधपतिः प्रथितः ॥
आचन्द्रतारमाभूतलमिहजीयात्सपुत्रपौत्रगणः ।
लक्ष्मीवाणीधरणीनाथस्सुखभाक्समस्तसम्पद्भिः ॥
त्वदनुचरवरविपश्चित्करकमलसमर्पितं गृहाण विभो ।
स्थापय विबुधाधीश्वरहृदयगृहेष्वीशदर्पणमिमं मे ॥
इत्यर्थयते भूयोभूयश्श्रीविश्वनाथसत्कृपया ।
इह दर्शितव्यवस्था शास्त्रीया भातु भवदनुग्रहतः ॥

ये तु च्छन्दोरसिका रण्डोद्वाहव्यवस्थितौ च कमितारः।
द्रष्टव्यार्योद्वाहद्विशती मन्निर्मिता सुधीभिस्तैः ॥

अद्यापि सन्ति विबुधा गुणदोषविज्ञा
आगामिनि स्युरपिचेह कलौ गुणज्ञाः ।
निर्मत्सरास्तत इयं सफला कृतिर्मे
दोषकदृष्टिपु तु मास्तु यथार्कविम्वः ॥

खभूतवस्विन्दुमितविभवाव्दाश्वयुक्सिते . ।
द्वितीयायां चन्द्रवारे पूर्ण ईशकृपावशात् ॥

इतिश्रीमत्पुल्योपनामकोमामहेश्वरविद्वत्कवीन्द्रकृतिपु धर्मव्यवस्थावज्रदर्पणे स्त्रीविवाहकालव्यवस्थाविम्बः प्रथमः श्रीविश्वनाथार्पितो विजयतेतमाम् ।

---

## आधुनिक-सभ्य-समाचाराः

( निबन्धकः—श्री श्रीनाथ काव्यतीर्थः )

पुरा भारते ब्राह्मणादयो वर्णा वर्णाश्रमधर्म्माचरणपरायणाः परस्परमपेक्षमाणा वेदोपनिषत्संहितापुराणादिशास्त्राणि यथाविधि यथासमयमधीयना, स्तानि शास्त्राणि जिज्ञासूनध्यापयन्तो वर्णाश्रमधर्म्मांश्च रक्षन्तः सच्छिक्षापूतमतयो विहितविविधक्रियाः सत्कथास्वनुरक्ताः सदा सदुपदेशश्रवणरता विगर्ह्यकर्म्मविरताः सुखमवतस्थिरे । त एव तदानीं देशेपु सभ्या भव्याः शिक्षिताश्चासन् । पुनरिदानीं त एवार्य्यजातीयाः पाश्चात्यवातान्दोलितचेतसो बीभत्सवचसो वैदेशिकशिक्षाशिक्षिताः सनातनार्य्यधर्म्मविमुखा ब्रह्मद्वेषिणो वेदवादपराङ्मुखा नव्यसभ्यसमाजमलं कुर्वाणाः स्वकीयगुणगरिम्णा वेदाचारान् पदाहत्या दूरीकुर्वाणाः धर्म्मानुष्ठानेनाप्रावृतशरीरान् सशिखानुपहसन्ति यथानियमं सन्ध्योपासनादिनिरतान् भूदेवान् ।

द्विधाविभक्तकेशा विशिखा दुःसहेऽपि निदाघसमये कञ्चुकावृतदेहाश्चिराय परित्यक्तोत्तरीयवसना जातिनिर्विशेषेणैकमेवासनमध्यासीना गृहीतयज्ञो लम्बकच्छाः क्षीरशर्करायुतकषायपत्ररसमुष्णोष्णमतिमधुर मित्यादरेण पिबन्ति । तदनु भुञ्जते च वैदेशिक पिष्टकादिकम् ।

ये च शिक्षितापरनामधेयाः सभ्यजातीया देशाद्देशान्तरं व्रजन्तः क्षुधाविरहिता अप्यवश्यकर्त्तव्यमितिधिया वाष्पीयशकटान्यारूढा येन केनापि यवनजातीयेन म्लेच्छेन वा पक्वानि यानि कान्यपि वस्तुजातानि सुखेन भुञ्जते । पूर्वपुरुषानेवं विधे सुखजनके कर्म्मणि एतत्प्रतिषेधकशास्त्राणि कुर्वाणानतिपरुषेण वचननिचयेनातितरां भर्त्सयन्ति, कुर्वते च मन्वादीनां धर्म्मशास्त्रप्रयोजकानां चतुर्दशपुरुषीयश्राद्धम् । चण्डालादीनामन्त्यजानां सर्वथा संसर्गादिकं विदधाना उच्चैरेवं ब्रुवन्ति हन्त भोः ! दुर्बलेपु वलवतां कीदृशः क्रूरापव्यवहारो यदस्माकं पूर्वपुरुषाः स्वार्थपराः परार्थेष्वनवहितचेतस एतानीदृशेषु निन्दितकर्म्मसु नियोजयन्तो नितरां निन्दितकर्म्मकारयामासुः । विदधिरे चामीषामस्पृश्यत्वम् । एवं विधैर्वचोभिस्तानाश्वासयन्तः पश्यतामेव पूर्वपुरुषाणां पुरतोऽन्त्यजानामस्पृश्यत्वं दूरीकुर्वन्ति । अङ्के निधाय कर्माण्चण्डालमत्यादरेण तदुत्थापितजलं पिवन्तस्तावदुदारतां प्रदर्शयन्ति च ।

विधवानां दुःखं स्मारं स्मारमेते दूयमानचित्तास्तासामाजीवनं कष्टं सोढुमशक्नुवानाः विवाहार्थं सदसद्विचारविरहिता यतन्ते शास्त्रवचनान्यवमत्य, नच ता ब्रह्मचर्य्यरक्षार्थमुपदिशन्ति नवा शास्त्रवाक्यमुररीकृत्य प्राचीनानामार्या

विवाहपद्धतिमनुसरन्ति । येन न सम्भवति बाल-वैधव्यम् ।

दैवं पित्र्यं वा, कर्म्मनिरतान् पुरोहितान् न सम्मानयन्ति । परन्तु तान् प्रतारकान् भाषमाणाः सततमसमीचीनपरुषवचसा तिरस्कुर्वन्ति, उपहसन्ति च तैर्विहितकर्म्माणि । तेषां केचन मृते पितरि मातरि वा तयोराद्यश्राद्धदिने दरिद्रान् भोजयन्ति । यथा नियममात्मशक्त्या श्राद्धादिकार्य्यकरणाय प्रवर्त्तकान् ग्रामवासिनो वृद्धान् धर्म्ममर्म्मग्राहिणो यूनो वा जनान् सक्रोधा ब्रुवन्ति—शृण्वन्तु भवन्तः न कदाचिन्मृतो बलीवर्द्दस्तृणादिकमत्तुं शक्नोति. कथमतो मृता-वस्मत्पितरौ मया प्रदत्तानि वस्तूनि भक्षयिष्यतः ? यांश्च पूर्वे पुरुषाः सहस्रारे उपास्यतया संस्थापयामासु-स्तान् विविधशास्त्रविज्ञानकुशलान् बुधोपमान् ज्ञान-वतो गुरूनज्ञाननाशकान् गृहागतानवलोक्य नावज्ञया प्रणमन्ति, नवालपन्ति नार्पयन्ति चोपवेशनार्थ मासनादिकमपि । कथमेवमनाहूतास्तावदस्माभि-र्भवन्तः प्रतिवर्षमस्मद्गेहमागत्य गृहस्थितान् सर्वानुद्वेजयन्ति । एवं पुनर्जानन्तुयत् कदाचिदपि शिक्षितानामस्माकमीदृशो दुर्बुद्धिर्जनिष्यते यया दीक्ष-मन्त्रो ग्रहीतव्यः, भवत्प्राप्या भिक्षा गृहस्थेनैव भवता प्राप्तव्येति पुनरस्मद्गृहं नागन्तव्यमिति वदन्त स्तान् स्वगृहाद्दूरमपसारयन्ति । आजन्मनोऽनल्पेन प्रय-त्नेन विविधप्रयासेन च बहूनि शास्त्राण्यधीतवतः शास्त्र विहितामाचारपद्धतिमनुसरतो भगवतश्चराचरगुरो-र्विश्वसृजः प्रतिनिधीनिव सर्वाणि शुभकराणि कर्म्माणि कुर्वाणान् अतिमानुषेण लोभपरिहारादि कर्म्मणा पश्यतः शृण्वतश्च जनान् चित्रार्पितानिव विस्मि-तानिव च विदधतः सज्जनपरिषदमात्मप्रभयाऽतिसर्वेण गुणेन च समलं कुर्वाणान् सद्गुणोपार्ज्जितबहुल यशसो विपश्चितस्तृणाय मन्यमानाः स्वकीय श्लाघापरायणाः परां प्रीतिमनुभवन्ति ।

कदाचित् कस्यांचित् परिषदि वक्तृरूपेण दण्डाय-मानाः सभापतेरनुमत्या सभासदामतिप्रीतिसम्पाद-नाय कम्पितशिखान् विदुषो ब्राह्मणान् निन्दन्त स्तत् क्षणात् सभ्यानां करतलध्वनिभिरुत्साहितास्तैरधी-तानि शास्त्राणि रचयतस्तत्रभवतो मनुप्रमुखान् आर्याणां धर्मशास्त्रप्रवर्त्तकान् मुन्यृषीन् विशेषतो विदेशयात्राप्रतिषेधकतया नितान्तपरुषवचसा उच्चै-स्तिरस्कुर्वन्तः श्रोतॄणां सभ्यानां बहुप्रशंसाभाजः सम्पद्यन्ते ।

अयं पुनरेषामेको महानचिकित्स्यो रोगः समजनि यदिमे कर्म्मणा सर्वेषामाचण्डालानां भारतीयानां अस्पृश्यत्वादिपरिहारेण समत्वं ज्ञापयन्ति । जात्या पुन रात्मनो जातेर्महत्वं प्रकाशयन्ति ।

ब्राह्मणानपहाय प्रायश एव नवीनसभ्य-जातयः स्वकीयजातेरौन्नत्यं येन केनाप्युपायेन कामयन्ते । विदधति च तदनुकूलानि कर्म्माणि । यथाहि केचिदिदानां उच्चैः पदमारुरुक्षवः शूद्रा-चाराः क्षत्रियोचितकर्म्माणि नानुतिष्ठन्तोऽपि आत्मीयं क्षत्रियत्वं सतां पुरतः प्रकाशयन्ति । यज्ञोपवीतवत् कानिचित् सूत्राणि कण्ठदेशे दधते च येच ब्राह्मणा-स्तेषामेवमशास्त्रीयाणि धर्म्मविगर्हितानि कर्म्माणि शास्त्रवचनादिभिः प्रतिनिवर्त्तयितुं यतन्ते तान् शास्त्रज्ञा अमी बलवन्तो मूर्खा इत्याद्यपभाषयाऽवमन्वते दण्डादि-प्रहारकर्म्मणा स्वकीयं क्षत्रियत्वं प्रदर्शयन्ति । संसारे ऽस्मिन् यथा उन्मत्ता जना देशशासनादिराजक्रिया मकुर्वाणा अपि 'वयं राजानः'' इत्येवं प्रलपन्ति तद्वदिमे ऽपि "वयं क्षत्रिया" इति वदन्तः सन्ततमुपहास्यन्ते । एतदेव गरीयसः कालस्य माहात्म्यं, यत् -शूद्राः क्षत्रि-यत्वं वैश्या ब्राह्मणत्वं सतां सामाजिकानां पुरतः कीर्त्तयन्तो न ह्रिया नवा भिया बाध्यन्ते ।

अन्यच्च सभ्यतमाः सम्प्रत्यापादकण्ठकञ्चुका-वृतदेहाः पथि विचरन्तो दण्डायमाना एवानात्तसलिला

मूत्राणि परित्यजन्ति । "ये मानवा दण्डायमाना मूत्रयन्ति, —पतन्ति तानि तेषां पितृमुखे मूत्राणि" इत्येवं जानन्तोऽपि जनाननतो हा ! पितुः प्रियपुत्रास्तस्मात् कर्म्मणो न निवर्त्तन्ते मृते च स्वकीयाः पुत्रा अपि एवं कर्म्म विदधाना आत्मनस्तर्पणं साधयिष्यन्तीति कथ मीदृशं कर्म्म न विजहतीति हि भोश्चित्रम् । मूत्र बिन्दुभि र्व्याप्रृतदेहा अपि वैदेशिकीं सभ्यता मनुकुर्वाणा न परिहीयन्ते सदाचारपद्धत्या न परिह्रियन्ते पवित्रत्वेन परं भगवतो नारायणस्य चरणामृतं तुलसीं गङ्गावारि च स्पृशन्तोऽतीवापवित्रत्वमेव मन्यन्ते देहस्य ।

एव मपरे चास्मद्देशीयाः सभ्याः प्रतीच्या इव ह्रदन कर्म्म विदधानाः शौचकर्म्मणि जलं न व्यवहरन्ति परं चोषकपत्रादिभिरेव शौचं कुर्वते किं बहुना ब्राह्मणा अपि चिरमत्यादरेण परिपालितान् पूर्वपुरुषागतान् सदाचारान् परिहाय इत्थमेवाधुनिकसभ्यतामनु कुर्वन्ति । साम्प्रतं कालमाहात्म्येनास्मदीयाआधुनिकाः सामाजिका अभिनवाः सभ्याः समजायन्त । बहुषु देशेषु अन्तः पुरचारिणीनां कुलरमणीना मवरोधप्रथा प्रचलिताऽसीत्, असूर्य्यम्पश्यरूपास्ताःस्त्रिय इदानीमेषा मेव शिक्षया शुभां तां प्राचीनप्रथामपहायाजन्मनः सहजातां लज्जां भीतिञ्च सागराम्भसि निःक्षिप्य पाश्चात्यशिक्षया स्वाधीन चिन्ता श्चिरन्तनमवगुण्ठनप्रथा मपाकृत्य युवभिः पुम्भिः सममेकासनमध्यासीना मिथः समालपन्ति विविधमक्रमम् । परिषदमधिष्ठाय च भारतीयार्य्यनारीणामार्य्यनिर्य्यातनविषयमवलम्ब्य युक्तिपूर्णया वक्तृतया सभासदः प्रीणयन्ति । हस्तञ्च-विधृत्य पुंसां बहुजनसङ्कुले पथि ताश्चविचरन्त्यो म्लेछदेशीया इव रमण्यः निर्म्मलं विशुद्धञ्च वायुं सेवन्ते । नहिभारतीया आर्य्यजातीया अनार्य्ये जुष्टानि परिच्छदादीनि खाद्यानिचाददाना आर्य्यजातीयत्वेनात्मानं प्रत्याययितुं वार्हन्ति । तेषां परिच्छदेन उभौयेन च यवनान् म्लेच्छांश्च लोका विदन्ति। यानि च भोजनीयानि वस्तूनि शास्त्रकृद्भिरार्य्यै र्निर्णीतानि दैहिकीं पुष्टिं साधयन्ति तान्येवाधुनिकाः सभ्या अनिष्टजनकत्वेन परिहरन्ति । यानिचानिष्टसाधकतयापरिजहिरे तान्येवशुभकराणीति मत्वा सादरं परिगृह्णन्ति । प्रायो हि भारतीया विपश्चितो बहूनि दर्शनादीनि शास्त्राण्याधीत्यापि यस्य याथार्थ्यसम्यगवगन्तुं न शक्नुवन्ति—अन्यांश्च वोधयितुमलं न भवन्ति, तेषामेवगीतोपनिषदादीनां तात्पर्य्यार्थमनधीतशास्त्रा असात्त्विकाः प्रायशः सर्वएव सभ्या वदनभङ्गया प्रकाश्य स्त्रीयपाण्डित्यं साङ्गभङ्गि वर्णयन्ति, सभासमितौ तथाविधानन्यान् वोधयन्ति च तेन चात्मप्रसादमनुभवन्ति च । इत्थमेवगीतादिज्ञानगरिम्णाधरां शराववन्मन्यमानाः शिक्षितानार्य्यशिक्षया अशिक्षितान् भाषमाणा आत्मनः शिक्षितत्वं श्रोतॄणां पुरतः ख्यापयन्ति । किं बहुना एते हि शास्त्रगर्हितानि पापकर्म्माण्येव सन्ततमनुतिष्ठन्ति । तेन सुखेन जीवनमतिवाहयन्ति च । आजीवनं सत्कर्म्मकारिणः साधवः प्रतिपदं विपद्यन्ते । अहो ! पापस्य काले राजत्वे पापाचारिणो जना राजशासनानुवर्त्तिनो राजप्रियाः सुखमतिवाहयन्ति जीवनं । अन्ये पुण्यशीलाश्चसाधवो राजशासनमतिक्रम्य राजद्रोहिणश्च दुःखभाजो भवन्ति । न जानीमहे कतिदिनान्यस्य प्रभुत्वं स्थास्यति । कतिवा दिनान्यस्य शासनादिषु कर्म्मसु नियुक्तानामाधुनिकसभ्यानामत्यादरेणार्य्याणां सनातनो धर्म्मो भग्नदेह इव निर्ज्जनं गिरिकन्दरमधिशयानो ह्यात्मानं पापात् परिरक्षिष्यतीति शिवम् ।



ग्राहक महोदयानां सविधे.

सादर मभ्यर्थनम् ।

बहुविधविघ्नपरम्पराभिः पत्रस्यास्य प्रकाशे विलम्वो जातस्ततोऽनुग्रहबुद्ध्या ग्राहकमहोदयैः क्षमा विधेया । द्वितीयवर्षे पत्रस्याकारवृद्धिः संजातेति प्रत्यक्षमेव । पत्रस्य वार्षिकं मूल्यं संग्रहीतुं तृतीयसंख्या वी० पी० पोष्टद्वारा प्रेषयिष्यते । पत्रमिदमात्मीयबुद्ध्या प्रतिपालनीयं भवद्भिः । अत आशास्महे पत्रमिदं भवत्करतलगतं व्यर्थं न परावर्त्तितं भविष्यतीति । येषां महानुभावानां पत्रस्य जिघृक्षा न भवेत् तैस्तु कृपया एतत्संख्याप्राप्ति समनन्तरमेव वयं विज्ञापनीयाः । अन्यथा निरर्थकार्थहानिर्भविष्यति ।

विनीतो निवेदकः—

कार्याध्यक्षः ।

## शुभ सन्देश।

धार्मिक जगत् में नवजीवन लानेवाला

# हिन्दी साप्ताहिक पत्र।

समस्त सनातनधर्म प्रेमियों को यह जानकर प्रसन्नता होगी कि, वर्त्तमान समय में सनातनधर्म के ऊपर अनेक प्रकार के आक्रमण हो रहे हैं और दिनों दिन सर्वसाधारण जनता में सनातनधर्म के प्रति अश्रद्धा उत्पन्न की जा रही है। इसलिए सनातनधर्म के वास्तविकरूप, तथा उसके महत्त्व के प्रचारार्थ, अखिल भारतवर्षीय ब्राह्मणमहासम्मेलन के कर्णधारों ने "ब्राह्मणमहासम्मेलन" नाम का एक उत्तम कोटि का हिन्दी साप्ताहिक पत्र प्रकाशित किया है और इस पत्र के सम्पादक सुयोग्य पण्डित श्रीविश्वनाथशास्त्री द्राविड हैं। अन्यान्य पत्र से इसकी विशेषता यह है कि, यह पत्र सनातनधर्म का कट्टर पक्षपाती और सनातनधर्म के विरोधियों को युक्तिपूर्ण प्रत्युत्तर देने को सदा तैयार रहेगा। इसलिए हम समस्त सनातनधर्मावलम्बी जनता, विद्वानों, राजा महाराजाओं, सेठ साहूकारों, धनी मानी सज्जनों से सादर सानुरोध निवेदन करते हैं कि, आप इस साप्ताहिक पत्र को अपनाकर और अपने इष्टमित्रों में प्रचार करके सनातनधर्म की रक्षा में सहाय हों। आशा है कि, आप हमारी प्रार्थना पर अवश्य ध्यान देंगे और इसकी ग्राहक संख्या की वृद्धि में सहायक बनेंगे।

इसका वार्षिक मूल्य २) रु० है और स्थानीय ग्राहकों के लिये १।) रु० और विद्यार्थियों के लिये १) रु० तथा बाहरी विद्यार्थियों के लिए १।) रुपया है।

ब्राह्मणमहासम्मेलन कार्यालय,
साङ्गवेदविद्यालय प्रेस, रामघाट,
बनारस सिटी।

विनीत निवेदकः—
व्यवस्थापक
"ब्राह्मणमहासम्मेलन"

द्वितीय वर्षे

सौराषाढश्रावणयोः
शकाब्दाः १८५१।

तृतीय-चतुर्थ संख्ये।

# ब्राह्मणमहासम्मेलनम्।

( मासिकं संस्कृतपत्रम् )



सम्पादकसंघः—

महामहोपाध्याय श्रीयुक्तानन्तकृष्णशास्त्री।

श्रीहाराणचन्द्रशास्त्री।

श्रीराजेश्वरशास्त्री द्रविडः, श्रीताराचरणभट्टाचार्यः;

श्रीश्रीजीव न्यायतीर्थः एम्. ए.।



वाराणस्याम्—

साङ्गवेदविद्यालय यन्त्रालये मुद्रयित्वा
ब्राह्मणमहासम्मेलन कार्यालयात्
प्रकाशितम्।



अग्रिमवार्षिक मूल्यम्
रूप्यकत्रयम्।

एतत्संख्याया मूल्यम्।
आणकाष्टकम्।

## ब्राह्मणमहासम्मेलननियमाः ।

१. अस्याः पत्रिकाया अग्रिमवार्षिकमूल्यं रूप्यकत्रयम् ।

२. प्रेषणव्ययो ग्राहकैर्न देयः ।

३. प्रबन्धलेखकेषु यस्य प्रबन्धो यस्यां संख्यायां प्रकाशितो भवेत् तत्संख्याया एकं खण्डं तस्मै विना मूल्यं प्रदीयेत ।

४. प्रबन्धादिकं समालोचनार्थं पुस्तकादिकं च सम्पादकसमीपे, मूल्यं च कार्याध्यक्षस्य समीपे प्रेषणीयम् ।

५. पत्रमिदं नियमेन सौरमासस्य अन्तिमसप्ताहाभ्यन्तर एव सर्वत्र प्रेषितं भवेत्। येन खलु ग्राहकेण तत्पत्रं यथाकालंनाधिगम्येत तेन तत्परमासस्य द्वितीयसप्ताहमध्य एव स्वपोष्टआफिसस्थाने तदन्विष्य तत्फलं वयं विज्ञापनीयाः नातः परं कस्याप्यभियोगः श्रूयेत ।

६. अस्याः पत्रिकायाः विद्यार्थिनां कृते वार्षिकं मूल्यम् २) रूप्यकद्वयम् ।

ब्राह्मणमहासम्मेलन कार्याध्यक्षः ।

ब्राह्मणमहासम्मेलन कार्यालयः,

साङ्गवेदविद्यालय प्रेस, रामघाट,

वाराणसीनगरम् ।

श्रीभाष्यकारा विशिष्टाद्वैतसम्प्रदायाचार्या भगवन्तः श्री १०८ रामानुजाचार्याः—



निरालोके लोके विमतकथकध्वान्तनिवहैः
श्रियः पत्याऽऽज्ञप्तो धरणिमवतीर्याऽतिकृपया ।
व्यतानीद्यो भाष्यद्युमणिमखिलार्थान्विशदयन्
स जीयाच्छ्रीरामानुजमुनिपरात्मा फणिपतिः ॥ १ ॥

॥ नमो ब्रह्मण्यदेवाय ॥

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः ।" [ महाभारतम् ]

द्वितीयवर्षे } सौर आषाढ़ः शकाब्दाः १८५१ । { तृतीय संख्या



## भारतगीतिका ।

[ पूर्वतोऽनुवृत्ता ]

( १७ )

सरसीजल राशय इव
धरणी धृतमालवा ।
उज्जयिनी कमलिनीव
तत्र स्मित मानवा ॥
तत्र गाढ़ भीन पीन
वंशाम्बुधिचन्द्रमाः ।
स विक्रमा दित्य नृपति
रनु जगाम यं रमा ॥

( १८ )

इन्द्रजाल विद्यागुरु
भोजराज कन्यका ।
कानकीव विद्युद्युति
रुद्यच्छवि तारका ॥
भानुमत्यु दारनाम
या दधार च यस्याः ।
गौरे गुरु करभोरौ
तिल चिह्न मिव मस्याः ॥

( १९ )

सा बभूव महिषी किल
विदुषी वरनारी ।
यां विलोक्य मुह्यतिस्म
मुनिरपि वनचारी ॥
स च तयैव हिमगिरिरिव
निर्झरजलधारया ।

विश्वेश्वर भूमिभाग
इव रराज गङ्गया ॥

( २० )

विविधदिग्भ्य इह विबुधान्
नव नव नव यत्नैः ।
आनीय वि निर्म्मि तैव
परिषन्नव रत्नैः ॥
द्वात्रिंशत् पुत्तलधृत
सिंहासन शिरसि ।
तत्र राज राजः खलु
विरराज स सदसि ॥

( २१ )

यस्य महा काले किल
भगवति गिरिजा पता-
वासीद्भव भाविनीव
भक्ति विधि सम्मता ॥
वे ताल स- हायकः स
जिगाय खलु सर्वम्
स कदापि च भेजे तु न
कमपि मनसि गर्वम् ॥

( २२ )

समुच्छिद्य शकनृपतीन्
कथितो भुवि शकारिः ।
विजहार स धरणि गिरिषु
जलधि जल विहारी ॥
कोऽपि कोऽपि नरपतिरिह
विश्रुत गुण धामा ।
तन्नामो पाधिमभज
दहह तीक्ष्ण धामा ॥

( २३ )

यस्य च नव रत्न सदसि
धरणि कालिदासः ।
अमृतवर्षि कविकुल गुरु
रतुलो विललास ॥
अद्यापि च तव वद्मसि
यस्य वर्षगणना ।
प्रचलति सति विस्मरसि नु
तमपि नृप मिवोन्मनाः ॥





# ब्राह्मण्यविषये विश्वामित्रो वीतहव्यो मतङ्गश्च ।

[ निबंधकः—श्रीगोपीचन्द्र सांख्यतीर्थः । ]

विश्वविदितः स खलु विश्वामित्रो महर्षिरगाधबोधस्ताड़कादिवधविधायकतया वस्तुतो यथा विश्वेषां मित्रमासीत् यथा वा विशिष्टशिष्टेन वसिष्ठेनर्षिणा ऽशिष्टाचरणादितो विश्वेषाममित्रमपि । साम्प्रतमपि बहवो विजिगीषवो ब्राह्मण्यमाप्तुकामा अब्राह्मणास्तमेवातितपस्विनमादर्शं प्रदर्श्यातितरां विचेष्टन्ते, विश्वेषामेतेषामेष नितरां मित्रमिव भवति । एतत्प्रतिपक्षाणामविदुषां चामित्रमिव अस्माकन्तु परमं मित्रमिवेति नात्र संदेहः यदेतस्य ब्राह्मण्यदृष्टान्तद्वारा प्रतिपक्षाणां लब्धलक्षकाकपक्षिणां पक्षच्छेदो दुर्निवार एव स्यादिति ।

अथ वयमस्य महर्षेराद्यन्तं जन्मादिवृत्तान्तं, मतंगस्य चरितं वीतहव्यस्य ब्राह्मण्यलाभस्तथाऽन्यदपि प्रमाणादिकं प्रियपाठकमहोदयानां समुपहरामो येन हि सर्वेषामेतस्मिन् विषये संशयलेशोऽपि समुदेतुमवसरं नापद्येत । अत्रच प्रमाणवचनादीनि प्रदर्शयन्तो मूलग्रन्थतो विकृष्याऽवस्थापयामो निम्नतने भागे । एतेषां सारमात्रमाकृष्य प्रथमतः संक्षेपेण पाठकमहोदयेभ्यः समुपहरामस्तावत् ।

आसीदेकः पुरा काले ब्रह्मणः सदने देवदेवर्षिब्रह्मर्षिमहर्षिभूयिष्ठायां महासभायामतिविस्मयकरश्चाश्रुतपूर्वः प्रस्तावः, स खलु ब्राह्मणवंशे दारुणक्षत्रियकर्मरसिको ब्राह्मण एको जनिष्यति क्षत्रियकुले च महातपा ब्राह्मण इति । अवगत्य च तद् ब्राह्मणकुलामलताविध्वंसकरमालोचनं च्यवनर्षिर्विश्वामित्रपितामहं कुशिकनृपतिं सवंशं निपातयितुकामः समागत्य च तत्र राजसदने केनचित् समयस्वीकरणेनाध्यवात्सीत् कियन्तं कालमिति ।

ततस्तेन मुनिना बहुधाऽतिविडम्बितस्यापि सराज्ञीकस्य तस्य ब्राह्मण्यतपस्तेजोबलविस्मितस्य नृपतेः समयप्रतिपालने दोषलेशमप्यनालोक्य नितरां स्ववंशे ब्राह्मणजनिरिति राज्ञोऽभीष्टतमः प्रसन्नेन महर्षिणा सादरं सानन्दं च वरः प्रदत्त आसीदिति ।

यः किल विधे र्विधानमन्यथाकर्तुमीहते विधिर्बलीयान् ध्रुवमिह तत्तेनैव संपादयतीत्येतदत्रातिस्पष्टतममीक्ष्यतामास्तिकैः पाठकमहाभागैरिति ।

## विश्वामित्रोत्पत्तौ च्यवनोपाख्यानम् ।

( महाभारते, अनुशासन. ५२ अध्याये । )

युधिष्ठिर उवाच ।

संशयो मे महाप्राज्ञ सुमहान् सागरोपमः ।
तंमे श्रृणु महाबाहो ! श्रुत्वा व्याख्यातुमर्हसि ॥
कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो ! ।
रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि ॥
कथमेष समुत्पन्नो रामः सत्य पराक्रमः ।
कथं ब्रह्मर्षिवंशोऽयं क्षत्रधर्म्मा व्यजायत ॥
तदस्य सम्भवं राजन्निखिलेनानु कीर्त्तय ।
कौशिकाच्च कथं वंशात् क्षत्राद्वै ब्राह्मणोऽभवत् ॥
अहो प्रभावः सुमहानासीद्वै सुमहात्मनः ।
रामस्य च नरव्याघ्र विश्वामित्रस्य चैव हि ॥
कथं पुत्रानतिक्रम्य तेषां नप्तृष्वथाऽभवत् ।
एष दोषः सुतान् हित्वा तत्त्वं व्याख्यातुमर्हसि ॥

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

च्यवनस्यच संवादं कुशिकस्यच भारत ॥
एवं दोषं पुरा दृष्ट्वा भार्गव श्च्यवन स्तदा ।
आगामिनं महाबुद्धिः स्ववंशे मुनिसत्तमः ॥
निश्चित्य मनसा सर्वं गुणदोषबलाबलम् ।
दग्धुकामः कुलं सर्वं कुशिकानां तपोधनः ॥
च्यवनः समनुप्राप्य कुशिकं वाक्यमब्रवीत् ।
वस्तुमिच्छासमुत्पन्ना त्वया सह ममाऽनघ ॥

कुशिक उवाच ।

भगवन् ! सह धर्म्मोऽयं पण्डितैरिह धार्य्यते ।
प्रदानकाले कन्यानामुच्यते च सदा बुधैः ॥
यत्तु तावदतिक्रान्तं धर्मद्वारं तपोधन ! ।
तत्कार्य्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि ॥

भीष्म उवाच ।

अथासनमुपादाय च्यवनस्य महामुनेः ।
कुशिको भार्यया सार्धमाजगाम यतो मुनिः ॥
प्रगृह्य राजा भृंगारं पाद्यमस्मै न्यवेदयत् ।
ग्राहयामास चाव्यग्रो महाऽत्मा नियतव्रतः ॥
संस्कृत्य तं तथा विप्रमिदं पुनरथाब्रवीत् ।
भगवन् ! परवन्तौ स्तो ब्रूहि किं करवामहे ॥
यदि राज्यं यदि धनं यदि गाः संशितव्रतः ।
यज्ञदानानि च तथा ब्रूहि सर्वं ददामि ते ॥
इदं गृहमिदं राज्यमिदं धर्मासनं च ते ।
राजा त्वमसि शाध्युर्वीमहं तु परवांस्त्वयि ॥
एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा ।
कुशिकं प्रत्युवाचेदं मुदा परमया पुनः ॥
न राज्यं कामये राजन्न धनं न च योषितः ।
न च गा न च वैदेशान् न यज्ञं श्रूयतामिदम् ॥
नियमं किंचिदारप्स्ये युवयोर्यदि रोचते ।
परिचर्य्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया ॥
एवमुक्ते तदा तेन दम्पती तौ जहर्षतुः ।
प्रत्यब्रूतां च तमृषिमेव मस्त्विति भारत ! ॥
अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम् ।
गृहोद्देशं ततस्तस्य दर्शनीयमदर्शयत् ॥
इयं शय्या भगवतो यथाकाममिहोष्यताम् ।
प्रयतिष्यावहे प्रीतिमाहर्तुं ते तपोधन ! ॥
अथ सूर्योऽतिचक्राम तेषां संवदतां तथा ।
अथर्षिं श्चोदयामास पानमन्नं तथैव च ॥
तमपृच्छत्ततो राजा कुशिकः प्रणतस्तदा ।
किमन्नजातमिष्टं ते किमुपस्थापयाम्यहम् ॥
ततः स परया प्रीत्या प्रत्युवाच नराधिपम् ।
औपपत्तिकमाहारं प्रयच्छस्वेति भारत ॥
तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः ।
यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिपः ॥
ततः स भुक्त्वा भगवन् ! दम्पती प्राह धर्म्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो ! ॥
ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः ।
संविवेश नरेशस्तु सपत्नीकः स्थितोऽभवत् ॥
न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ मे पादौ जागृतव्यं च तेऽनिशम् ॥
अविशंकस्तु कुशिकस्तथे त्येवाह धर्म्मवित् ।
न प्राबोधयतां तौ च दम्पती रजनीक्षये ॥
यथादेशं महर्षेस्तु शुश्रूषापरमौ तदा ।
बभूवतुर्महाराज ! प्रयतावथ दम्पती ॥
ततः स भगवान् विप्रः समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ॥
स तु राजा निराहारः सभार्य्यः कुरुनन्दन ! ।
पर्य्युपासत तं हृष्टश्च्यवनाराधने रतः ॥
भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः ।
अकिंचिदुक्त्वा तु गृहान्निश्चक्राम महातपाः ॥
तमन्वगच्छतां तौ च क्षुधितौ श्रमकर्षितौ ।
भार्य्यापती मुनिश्रेष्ठस्तावेतौ नावलोकयत् ॥
तयोस्तु प्रेक्षतोरेव भार्गवानां कुलोद्वहः ।
अन्तर्हितोऽभूद्राजेन्द्र ! ततो राजाऽपतत्क्षितौ ॥
स मुहूर्त्तं समाश्वस्य सहदेव्या महाद्युतिः ।

पुनरन्वेषणे यत्नमकरोत्परमं तदा ॥

❀ ❀ ❀

अथ शून्येन मनसा प्रविश्य स्वगृहं नृपः ॥
ददर्श शयने तस्मिन् शयानं भृगुनन्दनम् ।
अथापरेण पार्श्वेन सुष्वाप स महामुनिः ॥
तेनैव च स कालेन प्रत्यबुद्ध्यत व...गन् ।
नच तौ चक्रतुः किञ्चित् विकारं भयशङ्कितौ ॥

❀ ❀ ❀

ततः सर्वं समानीय तच्च शय्याशनं मुनिः ॥
वस्त्रैः शुभैरवच्छाद्य भाजनोपस्करैः सह ।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥
न च तौ चक्रतुः क्रोधं दंपती सुमहामती ।
तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत् ॥

❀ ❀ ❀

पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम् ॥
सभार्य्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ।
तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम् ॥
क्रीड़ारथोऽस्तु भगवन्नुत सांग्रामिको रथः ।
इत्युक्तः स मुनी राज्ञा तेन हृष्टेन तद्वचः ॥
च्यवनः प्रत्युवाचेदं हृष्टः परपुरंजयम् ।
सज्जीकुरु रथं क्षिप्रं यस्ते सांग्रामिको मतः ॥
सायुधः सपताकश्च शक्तीकनकयष्टिमान् ।
ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम् ॥
भार्य्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ।
त्रिदण्डं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ॥
सर्वमेतत्तथा दत्वा नृपो वाक्यमथाब्रवीत् ।
भगवन् क्व रथो यातु ब्रवीतु भृगुनन्दन !
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ।
एवमुक्तस्तु भगवान् प्रत्युवाचाथ तं नृपम् ॥
इतः प्रभृति यातव्यं पदकं पदकं शनैः ।
श्रमो मम यथा न स्यात् तथा मच्छन्दचारिणौ ॥

सुसुखं चैव वोढव्यो जनः सर्वश्च पश्यतु ।
नोत्सार्याः पथिकाः केचित् तेभ्यो दास्ये वसु ह्यहम् ॥
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि ।
सर्वान्दास्याम्यशेषेण धनं रत्नानि चैव हि ॥
क्रियतां निखिलेनैतन्माविचारय पार्थिव ।

❀ ❀ ❀

अन्वगच्छंत तमृषिं राजामात्याश्च सर्वशः ॥
हा हा भूतं च तत्सर्वमासीन्नगरमार्तवत् ।
तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रतोदितौ ॥
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ।
वेपमानौ निराहारौ पंचाशद्रात्रकर्षितौ ॥
कथंचिदूहतुर्वीरौ दंपती तं रथोत्तमम् ।
बहुशो भृशविद्धौ तौ स्रवन्तौ च क्षतोद्भवम् ॥
ददृशाते महाराज पुष्पिताविव किंशुकौ ।
तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकसमाकुलः ॥
अभिशापभयत्रस्तो न च किं चिदुवाच ह ।
द्वंद्वशश्चाब्रुवन्सर्वे पश्यध्वं तपसो बलम् ॥
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नेह शक्नुमः ।
अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ॥
राज्ञश्चापि सभार्यस्य धैर्य्यं पश्यत यादृशम् ।
श्रान्तावपि हि कृच्छ्रेण रथमेनं समूहतुः ॥
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ।
ततः स निर्विकारौ तौ दृष्ट्वा भृगुकुलोद्वहः ॥
वसु विश्राणयामास यथा वैश्रवणस्तथा ।
तत्रापि राजा प्रीतात्मा यथादिष्टमथाकरोत् ॥
ततोऽस्य भगवान्प्रीतो बभूव मुनिसत्तमः ।
अवतीर्य रथश्रेष्ठाद्दंपती तौ मुमोच ह ॥
विमोच्य चैतौ विधिवत्ततो वाक्य मुवाचह ।
ददानि वां वरं श्रेष्ठं तं ब्रूतामिति भारत ॥
सुकुमारौ च तौ विद्धौ कराभ्यां मुनिसत्तमः ।
पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ॥

❀ ❀ ❀

च्यवन उवाच ।

पितामहस्य वदतः पुरा देवसमागमे ।
श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु ॥
ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः ।
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ॥
ततस्ते कुलनाशार्थमहं त्वां समुपागतः ।
चिकीर्षन्कुशिकोच्छेदं संदिधक्षुः कुलं तव ॥

❀ ❀ ❀

नच ते दुष्कृतं किंचिदहमासादयं गृहे ।
तेन जीवसि राजर्षे न भवेथा स्त्वमन्यथा ॥

❀ ❀ ❀

ब्राह्मण्यं कांक्षसे राजन् तपश्च पृथिवीपते ।
अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं च पार्थिव ॥

❀ ❀ ❀

भविष्यत्येष ते कामः कुशिकात् कौशिको द्विजः ।
तृतीयं पुरुषं तुभ्यं ब्राह्मणत्वं गमिष्यति ॥
वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा ।
पौत्रस्ते भविता विप्रस्तपस्वी पावकद्युतिः ॥
वरं वरय राजर्षे यत्ते मनसि वर्त्तते ।

❀ ❀ ❀

कुशिक उवाच ।

❀ ❀ ❀

ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः ।
कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन ॥

❀ ❀ ❀

च्यवन उवाच ।

भृगूणां क्षत्रिया याज्या नित्यमेतज्जनाधिप ।
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥
क्षत्रियाश्च भृगून् सर्वान् वधिष्यन्ति नराधिप ।
आगर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः ॥
तत उत्पत्स्यतेऽस्माकं कुलेऽत्र कुलवर्द्धनः ।
ऊर्वो नाम महातेजा ज्वलनार्कसमद्युतिः ॥

तस्य पुत्रं महाराज ऋचीकं भृगुनन्दनम् ।
साक्षात् कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ॥
कुलात्तु तव धर्मात्मन् कन्यां सोऽधिगमिष्यति ।
उद्भावनार्थं भवतो वंशस्य भरतर्षभ ॥
गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः ।
ब्राह्मणं क्षत्रधर्माणं पुत्रमुत्पादयिष्यति ॥
क्षत्रियं विप्रकर्माणं बृहस्पतिमिवौजसा ।
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्म्मिकम् ॥
तपसा महता युक्तं प्रदास्यति महाद्युते ।
स्त्रियौ तु कारणं तत्र परिवर्ते भविष्यतः ॥
पितामह नियोगाद्वै नान्यथैतद् भविष्यति ।
तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपेष्यति ॥

स्कन्दपुराणेऽप्येवमेवोत्पत्तिरस्य प्रकटितास्ते । विष्णुपुराणेऽपि तथैव ।

इतः परं च्यवनमुनेरपत्येनर्चीकेनर्षिणातिकठिनतरेण "एकतः श्यामकर्णानां वातरंहसां श्वेतहयानां सहस्रस्य" विनिमयेनाग्राहि नृपतेर्गाधीतिविख्यातस्यात्मजापाणिरिति । तपोनिरतस्य महर्षेस्तस्यर्चीकस्य शुश्रूषया प्रसन्नहृदयस्य तपोऽर्थं वनं गन्तुकामस्य प्रियवरेण छंदमाना नृपकन्या मात्रा सहापुत्रया परामृष्य स्वकीयः पतिरिव ब्राह्मण्यधर्मधुरंधरः पुत्र एको मातुश्च क्षत्रियकर्मकठोरो जगत्यद्वितीयः कुलकीर्त्तिकरः कुमार एक इति वरद्वयमग्रहीत् । मुनिना च तेन पत्न्यर्थे ब्राह्मण्यतेजसा संपादित एकश्चरुभागस्तन्मात्रर्थे च क्षत्रतेजसा संस्कृतोऽपरः प्रदत्तो भोजनार्थम् ।

हन्त दैवबलान्मातुरभिलाषव्यत्यासादाग्रहातिशयाच्चागत्या परस्परव्यतिक्रमेण तयोश्चरुभोजनादन्यप्रकारो गर्भो ज्ञानबलाल्लक्षणेन च लक्षितो मुनिनासीत् । पृष्टा च पत्नी नितरां कातरा चरुभक्षणव्यतिक्रमं तत्कारणं च विज्ञाप्य तत्परिहारार्थं मुनिमतिविनयेनाह—'नाहं तादृशं कठोरकर्माणं सुतमवलोकयितुं

मपि पारयामीति प्रसीद मे स्वामिन् विपुलबलतपोनिधे इति तथाभूतां भीतामतिकातरां च तां सुप्रसन्नो मुनिराश्वस्तामकरोत्—" अयि प्रिये माभैः न ते तादृशः सुतः संभविष्यति किन्तु पौत्रस्तु तादृशोतिदारुणः परशुराम इति ।

एवमेव ब्रह्मण्यतेजस्संस्कृतचरुभोजनादजायतर्षिर्विश्वामित्रो न तु कर्मणा वा तपसा वेति "न ब्राह्मण्यं कथमपि कर्म कल्पितमपितु ध्रुवमेव जातिनियत" मितीतिहासोऽयं संशयनाशाय प्रचुरमेव प्रमाणम् 'गुणेन ब्राह्मण्यं कर्मणा ब्राह्मण्य" मिति विवदमानानामविदुषां जिगीषूणामिति ।

अथ यदि चरौ तस्मिन् ब्राह्मण्यं तेजः संक्रमितं नाभविष्यत् नाभविष्यत् कथमपि विश्वामित्रो परोलक्षैरपि वर्षैः सुकठोरैरपि तपोभिर्ब्राह्मण इति । एकतो विधेर्विधानं च्यवनस्य वरदानमृचीकस्य च ब्राह्मण्यतेजःसंपादनं चरुभाग इति तदेतत्त्रयमत्र ब्राह्मण्यकारणं विश्वामित्रस्येति । अवान्तरं च कारणं तपस्या, त्यागादयो ब्रह्मणो वसिष्ठस्य च संतोषश्चेति ।

## विश्वामित्रोपाख्याने जन्मरहस्यम् ।
## अनुशासने पर्वणि ३ अध्याये ।

युधिष्ठिर उवाच ।

ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैर्नराधिप ।
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥
विश्वामित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ ।

❀ ❀ ❀

देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ॥

❀ ❀ ❀

मतंगस्य यथातत्त्वं तथैवैतद्वदस्व मे ।
स्थाने मतंगो ब्राह्मण्यं नालभद् भरतर्षभ ॥

भीष्म उवाच ।

श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा ।
ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च ॥

❀ ❀ ❀

कुशिकस्यात्मजः श्रीमान् गाधिर्नाम जनाधिप ।
अपुत्रः प्रसवेनार्थी वनवासमुपावसत् ॥
कन्या जज्ञे सुतात्तस्य वने निवसतः सतः ।
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ॥
तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मसम्भवः ।
ऋचीक इति विख्यातो विपुले तपसि स्थितः ॥
स तां न प्रददौ तस्मै ऋचीकाय महात्मने ।
दरिद्र इति मत्वा वै गाधिः शत्रुनिबर्हणः ॥
प्रत्याख्याय पुनर्यातमब्रवीद्राजसत्तम ।
शुल्कं प्रदीयतां मह्यं ततो वत्स्यसि मे सुताम् ॥

ऋचीक उवाच ।

किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप ।
दुहितुर्ब्रूह्यसंसक्तो माभूत्तत्र विचारणा ॥

गाधिरुवाच ।

चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम् ।
एकतः श्यामकर्णानां सहस्रं देहि भार्गव ॥

भीष्म उवाच ।

ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः ।
अब्रवीद् वरुणं देवमादित्यं पतिमम्भसाम् ॥
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ॥
तथेति वरुणो देव आदित्यो भृगुसत्तमम् ।
उवाच यत्र ते च्छन्दस्तत्रोत्थास्यन्ति वाजिनः ॥
ध्यातमात्रमृचीकेन हयानां चन्द्रवर्चसाम् ।
गंगाजलात्समुत्तस्थौ सहस्रं विपुलौजसाम् ॥

❀ ❀

ततो वै गाधये तात सहस्रं वाजिनां शुभम् ।
ऋचीकः प्रददौ प्रीतः शुल्कार्थं तपतां वरः ॥
ततः स विस्मितो राजा गाधिः शापभयेन च ।
ददौ तां समलंकृत्य कन्यां भृगुसुताय वै ॥

जग्राह विधिवत्पाणिं तस्या ब्रह्मर्षिसत्तमः ।
सा च तं पतिं मासाद्य परं हर्षमवाप ह ॥
स तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत ।
छन्दयामास चैवैनां वरेण वरवर्णिनीम् ॥
मात्रे तत्सर्वमाचख्यौ सा कन्या राजसत्तम ।
अथ तामब्रवीन्माता सुतां किंचिदवाङ्मुखी ॥
ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति ।
अपत्यस्य प्रदानेन समर्थश्च महातपाः ॥
ततः सा त्वरितं गत्वा तत्सर्वं प्रत्यवेदयत् ।
मातुश्चिकीर्षितं राजन् ऋचीकस्तामथाब्रवीत् ॥
गुणवन्तमपत्यं सा अचिराज्जनयिष्यति ।
मम प्रसादात् कल्याणि माभूत्ते प्रणयोऽन्यथा॥
तव चैव गुणश्लाघी पुत्र उत्पत्स्यते महान् ।
अस्मद्वंशकरः श्रीमान् सत्यमेतद् ब्रवीमि ते ॥
ऋतुस्नाता तु साश्वत्थं त्वं च वृक्षमुडुम्बरम् ।
परिष्वजेथाः कल्याणि तत एवमवाप्स्यथ ॥
चरुद्वयमिदं चैव मंत्रपूतं शुचिस्मिते ।
त्वंच सा चोपभुंजीतं ततः पुत्राववाप्स्यथः ॥
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत ।
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥
तामुवाच ततो माता सुतां सत्यवतीं तदा ।
पुत्रि पूर्वोपपन्नायाः कुरुष्व वचनं मम ॥
भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः ।
एनं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥
व्यत्यासं वृक्षयोश्चापि करवाव शुचिस्मिते ।
यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥
स्वमपत्यं विशिष्टं हि सर्वं इच्छत्यनाविलम् ।
व्यक्तं भगवता चात्र कृतमेवं भविष्यति ॥
ततो मे तच्चरौ भावः पादपे च सुमध्यमे ।
कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय ॥
तथा च कृतवत्यौ ते माता सत्यवती च सा ।
अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ॥

दृष्ट्वा गर्भमनुप्राप्तां भार्यां स च महानृषिः ।
उवाच तां सत्यवतीं दुर्मना भृगुसत्तमः ॥
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति ।
व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ॥
मया हि विश्वं यद्ब्रह्म तच्चरौ सन्निवेशितम् ।
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम् ॥
त्रैलोक्यविख्यातगुणं त्वं विप्रं जनयिष्यसि ।
सा च क्षत्रं विशिष्टं वै तत एतत् कृतं मया ॥
व्यत्यासस्तु कृतो यस्मात् त्वया मात्रा च ते शुभे।
तस्मात्सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति ॥
क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि ।
नहि ते तत्कृतं साधु मातृस्नेहेन भाविनि ॥
सा श्रुत्वा शोकसन्तप्ता पपात वरवर्णिनी ।
भूमौ सत्यव्रती राजंश्छिन्नेव रुचिरालता ॥
प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च ।
उवाच भार्या भर्तारं गाधेयी भार्गवर्षभम् ॥
प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदांवर ।
प्रसादं कुरु विप्रर्षे न मे स्यात् क्षत्रियः सुतः ॥
कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति ।
न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः ॥
एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः ।
ततःसा जनयामास जमदग्निं सुतं शुभम् ॥
विश्वामित्रं चाजनयद् गाधिभार्या यशस्विनी ।
ऋचेः प्रसादाद् राजेन्द्र ब्रह्मर्षेर्ब्रह्मवादिनम् ॥
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ।

❀ ❀

विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः ॥
तथैव क्षत्रियो राजन् विश्वामित्रो महातपाः ।

❀ ❀

ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर ॥

---

टीका नीलकण्ठी—विश्वामित्रात्मजा इति क्षत्रिया दुब्रह्मवादिनः कथमुत्पन्ना इत्याशंक्याह ऋचीकेनेति। चरौ पूर्वं ब्रह्मैवाहितमतः क्षत्रबीजोद्भवस्यापि ब्राह्

अथापरो मतङ्गनामा कश्चित् यज्ञीयकाष्ठाद्याहरणार्थं ब्राह्मणेन पित्रा प्रेरितः खरयानेन गच्छन् गर्द्दभबालकं नासिकायां कशाघातैरक्ताक्तमकरोत् । तेन तं प्ररुदन्तं स्वशिशुमाह गर्द्दभी मनुष्यवचसैतत्—हे बालक ! अलं ते रोदनेन, चंडाल एष नहि ब्राह्मणकुमार एवमननुकम्पः कथमपि संभवतीति श्रुत्वा मानुषीं गर्द्दभीतोऽपूर्वां वाचं प्रतिनिवृत्तः पित्रोरंतिके स्वचाण्डालताहेतुं जिज्ञासमानो नापितेनात्मनो जनिं जननीतो जानन् नितरामत्यन्तं विदीर्णान्तःकरणोऽनुनयेनानुमतिमेतयोरादायागमत्तपसा साधयितुमात्मनो ब्राह्मणत्वम् । कठोरेण च तपसा प्रत्यक्षीकृतः शतक्रतुवरेण च्छन्द्यमानं तृणमिव मन्यमानं स्वर्गादिकं ब्राह्मण्यमात्रमभिलषन्तं मतङ्गबालकं तादृशतः तपसो निवर्तयितुं बहुशोऽवदत् वत्स ! मतङ्ग ! न कथमपि ब्राह्मण्यमन्यैः क्षत्रियादिभिरासादयितुं शक्येत किंपुनस्त्वया चांडालेनेति । एवमेव वारत्रयमपि क्रमशः कठोरतपा मतङ्गोऽगत्या देवराजवचसा "ब्राह्मण्यमनेन जन्मना न लभ्य"—मिति तपसो निरवर्तत ।

अनेन चेतिहासेन 'ब्राह्मण्यं कर्मानुमत" मिति वादिनां नितरामेव वदनबन्धो भूयात् ।

## मतङ्गोपाख्यानम् ।

### महाभा० अनुशासने–२७ अध्याये ।

युधिष्ठिर उवाच ।

❀ ❀ ❀

क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम !।
ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि ॥
तपसा वा सुमहता कर्म्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

ब्राह्मण्यं तात दुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद् युधिष्ठिर ॥
बह्वीस्तु संसरन् योनीर्जायमानः पुनः पुनः ।
पर्य्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मतङ्गस्य च संवादं गर्द्दभ्याश्च युधिष्ठिर ॥
द्विजातेः कस्यचित्तात तुल्यवर्णः सुतस्त्वभूत् ।
मतङ्गो नाम नाम्ना वै सर्वैः समुदितो गुणैः ॥
स यज्ञकारः कौंतेय पित्रोत्सृष्टः परन्तप ।
प्रायाद्गर्द्दभयुक्तेन रथेनाप्याशुगामिना ॥
स बालं गर्द्दभं राजन् वहन्तं मातुरन्तिके ।
निरविध्यत्प्रतोदेन नासिकायां पुनः पुनः ॥
तत्र तीव्रं व्रणं दृष्ट्वा गर्दभी पुत्रगृद्धिनी ।
उवाच मा शुचः पुत्र चांडालस्त्वधितिष्ठति ॥
ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते ।
आचार्य्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ॥
अयन्तु पापप्रकृतिर्बाले न कुरुते दयाम् ।
स्वयोनिं मानयत्येष भावो भावं नियच्छति ॥
एतच्छ्रुत्वा मतंगस्तु दारुणंरासभीवचः ।
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥
ब्रूहि रासभि कल्याणि माता मे येन दूषिता ।
कथं मां वेत्सि चांडालं क्षिप्रं रासभि शंस मे ॥
कथं मां वेत्सि चांडालं ब्राह्मण्यं येन नश्यते ।
तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्वमशेषतः ॥

गर्द्दभ्युवाच ।

ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह ।
जातस्त्वमसि चांडालो ब्राह्मण्यं तेन तेऽनशत् ॥
एवमुक्तो मतङ्गस्तु प्रतिप्रायाद्गृहं प्रति ।
तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत् ॥
मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्मणि ।

---

ण्यलाभो जातः । बीजापेक्षया संस्कारस्य बलवत्त्वात् । तथाहि दावाग्निदग्धेभ्यो वेत्रबीजेभ्यः कदलीकाण्डोत्पत्तिमुदाहरन्ति । न ब्राह्मण्यं क्षत्रियाद्यैस्तपकोट्यापि लभ्यते । विश्वामित्रस्य तत्प्राप्तिर्मात्रा ब्रह्मौदनप्राशनादिति ॥

कस्मात्प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव ॥

मतङ्ग उवाच ।

अन्त्ययोनिरयोनिर्वा कथं सकुशली भवेत् ।
कुशलं तु कुतस्तस्य यस्येयं जननी पितः ॥
ब्राह्मण्यां वृषलाज्जातं पितर्वेदयतीव माम् ।
अमानुषी गर्दभीयं तस्मात्तप्स्ये तपो महत् ॥
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः ।
ततो गत्वा महारण्यमतपत्सुमहत्तपः ॥

❀ ❀ ❀

तं तथा तपसा युक्तमुवाच हरिवाहनः ।
मतङ्ग तप्स्यसे किं त्वं भोगानुत्सृज्य मानुषान् ॥
वरं ददामि ते हन्त वृणीष्व त्वं यदिच्छसि ।
यच्चाप्यवाप्यं हृदि ते सर्वं तद्ब्रूहि माचिरम् ॥

मतङ्ग उवाच ।

ब्राह्मण्यं कामयानो ऽहमिदमारब्धवांस्तपः ।
गच्छेयं तदवाप्येह वर एष वृतो मया ॥
एतच्छ्रुत्वा तु वचनं तमुवाच पुरन्दरः ।
मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया ॥
ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः ।
विनशिष्यसि दुर्बुद्धे तदुपारम माचिरम् ॥

❀ ❀ ❀

चंडालयोनौ जातेन न तत्प्राप्यं कथंचन ।
एवमुक्तो मतंगस्तु संशितात्मा यतव्रतः ॥
अतिष्ठदेकपादेन वर्षाणां शतमच्युतः ।
तमुवाच ततः शक्रः पुनरेव महायशाः ॥
ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे ।
मतङ्ग परमं स्थानं प्रार्थयन् विनशिष्यसि ॥
मा कृथाः साहसं पुत्र नैष धर्मपथस्तव ।
नहि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्मते ॥
अप्राप्यं प्रार्थयानो हि न चिराद् विनशिष्यसि ।
मतङ्ग परमं स्थानं वार्य्यमानोऽसकृन्मया ॥
चिकीर्षस्येव तपसा सर्वथा न भविष्यसि ।
एवमुक्तो मतंगस्तु संशितात्मा यतव्रतः ॥
सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत ।
तं सहस्रावरे काले शक्रो द्रष्टुमुपागमत् ॥
तदेव च पुनर्वाक्यमुवाच बलवृत्रहा ।
मतंग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते ॥
बह्वीस्तु ता विशन् योनीर्जायमानः पुनः पुनः ।
पर्य्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति ॥
तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ।
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ॥

मतङ्ग उवाच ।

❀ ❀ ❀

एवंतु कथमेतद्वै यदहं मातृदोषतः ।
एतामवस्थां संप्राप्तो धर्म्मज्ञः सन् पुरन्दर ॥
नूनं दैवं न शक्यं हि पौरुषेणातिवर्तितुम् ।
यदर्थं यत्नवानेव न लभे विप्रतां विभो ॥

❀ ❀ ❀

अथापरो वीतहव्यो नाम नृपतिर्योगर्द्धिना भृगुमुनिना ब्राह्मणत्वमापित इति वीतहव्यपुत्रशत-शातितपुत्रशतकेन हि काशीराजेन दिवोदासाभिधेन भरद्वाजर्षिप्रसादाद् वीतहव्य—सुतशत—नाशकः प्रतर्दनो नाम संप्राप्तः पुत्र एको वीतहव्यपुत्रान् विनाशयन् पलायनपरं वीतहव्यमपि भृगुमुनेराश्रममुपगतं शरणमापन्नं ग्रहीतुकामो भृगुमुनिमुवाच-तपोनिधे ! देहि मे प्रतिपक्षं मदीयभ्रातृहन्तारमाततायिनं वीतहव्यमिति । अथा "स्मिन्नाश्रमे मे कोपि नास्ति ब्राह्मणेतरः सर्व एव ब्राह्मणा" इत्येवंवादिना शरणागतरक्षाव्रतिना वीतहव्यस्य ब्राह्मणत्वं बिना कालान्तरे पुनः प्रतर्दनेन तद्वधशंकितेनर्षिप्रवरेण भृगुणा प्रतारितः प्रतर्दन उक्तवान् तपोधन ! एतेनाप्यस्मि चरितार्थो यदेष वीतहव्यो मद्भयादेव भवतः प्रसादमासाद्य जातिविच्युतः संपन्न इति तं प्रणिपत्यागमत् स्वमालयमिति ।

## वीतहव्योपाख्यानम् ।

### महा० अनु० २१ अध्याये ।

युधिष्ठिर उवाच ।

श्रुतं मे महदाख्यानमेतत् कुरुकुलोद्वह ।
सुदुष्प्रापं यद्ब्रवीषि ब्राह्मण्यं वदतांवर ॥
विश्वामित्रेण च पुरा ब्राह्मण्यं प्राप्तमित्युत ।
श्रूयते वदसे तच्च दुष्प्रापमिति सत्तम ॥
वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः ।
तदेव तावद्गांगेय ! श्रोतुमिच्छाम्यहं विभो ॥
स केन कर्मणा प्राप्तो ब्राह्मण्यं राजसत्तमः ।
वरेण तपसा वापि तन्मे व्याख्यातुमर्हसि ॥

भीष्म उवाच ।

श्रृणु राजन् ! यथा राजा वीतहव्यो महायशाः ।
राजर्षिर्दुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ॥
स पालयामास महीं धर्म्मात्मा काशिनन्दनः ।
तैर्वीतहव्यैरागत्य युधि सर्व्वैर्विनिर्जितः ॥
सौदेवस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत ।
दिवोदासस्तु विज्ञाय वीर्यं तेषां यतात्मनाम् ॥
दिवोदासः पुरीं त्यक्त्वा पलायनपरोऽभवत् ।
गत्वाऽऽश्रमपदं रम्यं भरद्वाजस्य धीमतः ॥
जगाम शरणं राजा कृताञ्जलिररिन्दम ।
तमुवाच भरद्वाजो ज्येष्ठः पुत्रो बृहस्पतेः ॥
पुरोधाः शीलसम्पन्नो दिवोदासं महीपतिम् ।
किमागमनकृत्यं ते सर्वं प्रब्रूहि मे नृप ॥
यत्ते प्रियं तत्करिष्ये न मेऽत्रास्ति विचारणा ।

राजोवाच ।

भगवन् वैतहव्यैर्मे युद्धे वंशः प्रणाशितः ॥
अहमेकः परिद्यूनो भवन्तं शरणं गतः ।
शिष्यस्नेहेन भगवंस्त्वं मां रक्षितु मर्हसि ॥
एकशेषः कृतो वंशो मम तैः पापकर्मभिः ।
तमुवाच महाभागो भरद्वाजः प्रतापवान् ॥
न भेतव्यं न भेतव्यं सौदेव ! व्येतु ते भयम् ।
अहमिष्टिं करिष्यामि पुत्रार्थं ते विशांपते ॥
वीतहव्यसहस्राणि येन त्वं प्रहरिष्यसि ।
तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम् ॥
अथास्य तनयो जज्ञे प्रतर्दन इति श्रुतः ।
स जातमात्रो ववृधे समाः सद्यस्त्रयोदश ॥
वेदं चापि जगौ कृत्स्नं धनुर्वेदं च भारत ।

❃ ❃ ❃

ततस्तु वैतहव्यानां वधाय स महीपतिः ॥
पुत्रं प्रस्थापयामास प्रतर्दनमरिन्दमम् ।

❃ ❃ ❃

जघान तान्महातेजा वज्रानलसमैः शरैः ॥

❃ ❃ ❃

हतेषु तेषु सर्वेषु वीतहव्यः सुतेष्वथ ।
प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत ॥
ययौ भृगुं च शरणं वीतहव्यो नराधिपः ।
अभयं च ददौ तस्मै राज्ञे राजन् भृगुस्तदा ॥
अथानुपदमेवाशु तत्रागच्छत् प्रतर्दनः ।
स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत् ॥
भो भो केऽत्राश्रमे सन्ति भृगुशिष्या महात्मनः ।
द्रष्टुमिच्छे मुनिमहं तस्याचक्षत मामिति ॥
स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा ।
पूजयामास च ततो विधिना नृपसत्तमम् ॥
उवाच चैनं राजेन्द्र ! किं कार्य्यं ब्रूहि पार्थिव ! ।
स चोवाच नृपस्तस्मै यदागमनकारणम् ॥
अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्ज्यताम् ।

राजोवाच ।

तस्य पुत्रैर्हि मे कृत्स्नो ब्रह्मन् वंशः प्रणाशितः ॥
उत्सादितश्च विषयः काशीनां रत्नसंचयः ।
एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया ॥
अस्येदानीं वधादद्य भविष्याम्यनृणः पितुः ।
तमुवाच कृपाविष्टो भृगुर्धर्मभृतांवरः ॥

नेहास्ति क्षत्रियः कश्चित् सर्वे हीमे द्विजातयः ।
एतत्तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः ॥
पादावुप स्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत् ।
एवमप्यस्मि भगवन् ! कृत कृत्यो न संशयः ॥
य एष राजा वीर्येण स्वजातिं त्याजितो मया ।
अनुजानीहि मां ब्रह्मन् ! ध्यायस्व च शिवेन माम् ॥
त्याजितो हि मया जातिमेवं राजा भृगूद्वह ! ।
ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्दनः ॥
यथागतं महाराज ! मुक्त्वा विषमिवोरगः ।
भृगोर्वचनमात्रेण सच ब्रह्मर्षितां गतः ॥
वीतहव्यो महाराज ! ब्रह्मवादित्वमेव च ।

❀ ❀ ❀

अथापरो दृश्यते महाभारते १७८ वनपर्वीयाजगराध्याये । प्रमाणनिवहो यत्र खलु ब्राह्मण्यमब्राह्मण्यं वा गुणदोषानुबन्धमिवाभाति । वस्तुतस्तानि वचन—जातानि स्तुतिनिन्दार्थवादकत्वेन प्रमाणभूतानीति प्रदर्शितेतिहासानां याथार्थ्यात् । तैस्तैर्वचनजातैर्ब्राह्मण्यस्य कर्मादिसिद्धत्वे तु स्यादेतदितिहासादिकमत्यन्तं मिथ्यैवेति । मिथ्येतिहासेनाप्रामाण्यमुदीयाद् भारत रत्नस्य । वचनानामेतेषां स्तुतिनिन्दार्थकत्वदार्ढ्यार्थमितिहासप्रदर्शन मुपपन्नं स्यात् । अन्यथा वृथैव स्यादितिहास निबन्धनमत्र ग्रन्थकर्तु रिति ।

अपि च तत्रैवाशीत्यधिकशततमेऽध्याये "तावच्छूद्रसमो ह्येष यावद्वेदे न जायते, इत्यादिवचनेन प्रागुक्तवचनानां स्तुतिनिन्दार्थवादकत्वं सुस्पष्टमेव न कथं ज्ञायेत । किंच यदि युधिष्ठिरोक्तवचनानि कर्मानुमतब्राह्मण्यपराणि स्युस्तर्हि निम्नोक्तवनपर्वीय १५१ अध्यायोक्तस्तुत्यर्थवादकवचनजातानि अन्यानि च विरुद्धार्थकत्वान्निरर्थकान्येव भवेयुरिति सुधीभिर्भाव्यम् । अपरं पच "ब्राह्मणः को भवेद् राजन्वेद्यं किं च युधिष्ठिर" इति वचनं "ब्रह्मविदो लक्षणं ब्रह्मस्वरूपं च पृच्छति ब्राह्मण इति" एवं क्रमेण नीलकण्ठेनापि टीका कृता । व्याख्यानं विलोकयतां न केषांचिदपि विदुषां सर्पप्रश्ने वा युधिष्ठिरोत्तरे वा ब्राह्मण्यलक्षणमिति वोधोदयो भवितुं पार्यत इति ।

## अथा जगरयुधिष्ठिर संवादः ।

### म० वनप० १८० अ० ।

युधिष्ठिर उवाच ।

ब्रूहि सर्प ! यथा कामं प्रति वक्ष्यामि ते वचः ।
अपि चेच्छक्नुयां प्रीतिमाहर्त्तु ते भुजंगम ! ॥
वेद्यं च ब्राह्मणेनेह तद्भवान् वेत्ति केवलम्* ।
सर्पराज ! ततः श्रुत्वा प्रति वक्ष्यामि ते वचः ॥

सर्प उवाच ।

ब्राह्मणः‡ को भवेद्राजन् वेद्यं किं च युधिष्ठिर ! ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥

युधिष्ठिर उवाच ।

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र नागेन्द्र ! स ब्राह्मण इति स्मृतः ॥
वेद्यं सर्प ! परं ब्रह्म निर्दुःखमसुखं च यत् ।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् ॥ †

---

*। ब्राह्मणेनेति घटं करोतीतिवद्भाविनीं वृत्तिमाश्रित्य अब्राह्मणेऽपि मुमुक्षौ ब्रह्मविद्वाचिब्राह्मणशब्दप्रयोगः । श्रुतौ अमौनं च मौनं च निर्विद्याथ ब्राह्मण इति ।

‡। तत्र यान्येव ब्रह्मविल्लक्षणानि तानि ब्रह्मविद्यासाधकानीति मन्वानो ब्रह्मविदो लक्षणं ब्रह्मस्वरूपं च पृच्छति ब्राह्मण इति ।

†सर्पस्तु ब्राह्मणपदेन जातिमात्रं विवक्षित्वा शूद्रे तल्लक्षणं व्यभिचारयति चातुर्वर्ण्यमिति सार्धेन । चतुर्णां वर्णानां हितं सत्यं प्रमाणं च धर्मव्यवस्थापकं ब्रह्म शूद्रवेदः । शूद्राचारस्मृतेरपि वेदमूलत्वात् सर्वोऽप्याचारादिः श्रुतिमूलक इत्यर्थः।एवं च सत्यादिकं यदि शूद्रेऽप्यस्ति तर्हि सोऽपि ब्राह्मण एव स्या दिति त्याह शूद्रेष्वपीति ।

चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ।
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ॥
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ! ।

युधिष्ठिर उवाच ।

शूद्रे च यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ॥
नवै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ।
यत्रैतल्लक्ष्यते सर्प ! वृत्तं स ब्राह्मणः स्मृतः ॥
यत्रैतन्न भवेत् सर्प ! तं शूद्रमिति निर्दिशेत् ।

❀ ❀ ❀

सर्प उवाच ।

यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन् ! कृतिर्यावन्न विद्यते ॥

युधिष्ठिर उवाच ।

जातिरत्र महासर्प ! मनुष्यत्वे महामते ।
संकरात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥
इदमार्षं प्रमाणं च ये यजामहे' इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥

प्राङ्नाभि वर्द्धनात् पुंसो जात कर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥
तावच्छूद्रसमो ह्येष यावद् वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायम्भुवोऽब्रवीत् ॥
कृत कृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
संकर स्तत्र नागेन्द्र ! बलवान् प्रसमीक्षितः ॥
यत्रेदानीं महासर्प ! संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान् भुजगोत्तम ! ॥ इति ।
महाभारते—अनुशासन—१५१ अध्याये च—
येषां वृद्धश्च बालश्च सर्वः सम्मानमर्हति ॥
तपोविद्याविशेषात्तु मानयन्ति परस्परम् ।
अविद्वान् ब्राह्मणो देवः पात्रं वै पावनं महत् ॥
विद्वान् भूयस्तरोदेवःपूर्णसागरसन्निभः ।
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ॥
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ।
श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति ॥
हविर्यज्ञे च विधिवद् गृह एव विशोभते ।
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्म्मसु ॥
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम् । इति ।

❀ ❀ ❀

अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः ॥
इति ।
तपः श्रुतं च योनिश्चा प्येतद् ब्राह्मण्य कारणम् ।
त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः ॥
इति च । (अनुशासन ११ अध्याये ।)

---

'ये यजामहे' इत्यादि ब्राह्मण्येऽनवधारणं दर्शितं मन्त्रलिंगमपि । य एवास्मि स सन् यजे इति । नन्वेवं स्वस्याब्राह्मणत्वपक्षे यज्ञस्यानिष्टकरत्वमापततीत्याशंक्य तत्परिहाराय यागे यजमानस्य प्रवरवरणं क्रियते याज्ञिकैः तच्चाग्निर्होतेति मन्त्रे गौतमवदयास्यवदंगिरोवद् ब्राह्मणवदिति कुर्वन्ति तस्य च प्रयोजनमब्राह्मणस्यापि यजमानस्य ब्राह्मणत्वसम्पादनम् । तस्मादाचार एव ब्राह्मण्यनिश्चये हेतुर्वेदप्रामाण्यादित्युपसंहरति तस्मादिति । प्रधानं च तदिष्टं चेति कर्मधारयः । कर्मैव ब्राह्मण्यहेतुरित्याह प्रागिति । नाभिवर्द्धनान्नालच्छेदनात् । जायते संयुज्यते वेद संयोगानन्तरमेव ब्राह्मण्यमुदेति तद्वत्प्रवरणेनापीति भावः । द्वैधे जातौ संशये सति वृत्तं वैदिकसंस्कारो यदि न विद्यते तर्हि सर्वाः प्रजाः कृतकृत्याः शूद्रतुल्याः तथा च स्मृतिः न शूद्रे पातकं किंचिन्न च संस्कार महति इति तेषां संस्कारानर्हत्वनिष्पापत्वाभिधानात् कृतकृत्यत्वं दर्शयति तद्वत् त्रैवर्णिका अपि स्युरिति । अत्र वृत्त्यभावे । उपसंहरति यत्रेति ।

अथापरं चादि पर्वणि दृश्यते २८ अष्टाविंशेऽध्याये मातुर्विनताया दासीत्वमपाकर्तुकामस्यामृताहरणोद्यतस्य क्षुधितस्य वैनतेयस्याहारार्थं समुद्रकुक्षिवास्तव्या ये निषादा उपदिष्टास्तेषु निषादाकृतयो निषादाचारा निषादवृत्तयो ब्राह्मणा निषिद्धा आहारार्थम् ।

एकरूपत्वात् कथं ते ज्ञातव्या इति विनतया तेषामान्तरं लक्षणं उपदिष्टं "यस्ते कण्ठमनुप्राप्तं निगीर्ण-वड़िशं यथा । दहेदंगारवत् पुत्र ! तं विद्याद् ब्राह्मणर्षभम्" इत्यादि । एतेन च प्रतीयते जातिसिद्धं ब्राह्मणत्वं न गुणानुमतम् । अत्र च "ब्राह्मणर्षभत्वं" 'द्विजोत्तमत्वं" इति निर्देशात् क्षत्रियादितः श्रेष्ठत्वमुपपादितं दृश्यते । अपिचात्र यो ब्राह्मणोऽज्ञाततया वैनतेयेन कवलीकृत आसीत् स पुनः निषादीभार्य्य इत्येतदति-विस्मयकरं विशेषतो नव्यानां शिक्षितम्मन्यानामिति ।

इदानीमपि दौवारिकादिकार्य्यवृत्तयो वहवो ब्राह्मणा हीनाचारचरिता जात्या ब्राह्मणा वृत्त्या ये केचन वा भवन्तु, परन्तु ब्राह्मणत्वेनैव सामाजिकैर्गृह्यमाणा दृश्यन्ते ।

किंच ब्राह्मणानां दशविधत्वमुक्तमत्रिमहर्षिणेति विदितं विदुषामेतत् यथा—

देवोमुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः ।
पशुर्म्लेच्छोपि चांडालो विप्रा दशविधाःस्मृताः ।

एतच्च दशविधत्वं नोपपद्यते यद्युच्यते कर्म्मसिद्धं गुणग्राह्यं वा ब्राह्मण्यमिति । अत्र च क्षत्रियत्वं वा वैश्यत्वं वा शूद्रत्वं वा अथापरमपि वा वृत्तितः कर्मतो-वा गौणं नवधा भवति, एकं च मुख्यतमं जातिवस्तु वास्तवं स्यात् यथा देवब्राह्मणः क्षत्रियब्राह्मणः, मुनिब्राह्मणः चांडालब्राह्मणः इत्यादि ।

अत्र ब्राह्मण्यं जातिवस्तु यन्मुख्यमुच्यते तच्चेत् कर्म्मानुमतमुच्यते तर्हि यो ब्राह्मणो दैवेन कर्मणा देवो भूतः, स कथं देवब्राह्मण इति । यश्च क्षात्रेण कर्मणा क्षत्रियः संपन्नः स कथं क्षत्रियब्राह्मण इति एवं प्रकारेण सर्वत्र ब्राह्मणत्वस्यानुगमनं स्यात् । परशुराम-द्रोण-कृपाचार्यादयो जात्या ब्राह्मणाः कर्म्मणा वृत्त्या वा क्षत्रियाः, एवं वाल्मीक्यादयो जात्या ब्राह्मणाः कर्मणा च काले व्याधाः काले च महर्षय इति रावणादयो जात्या ब्राह्मणाः कर्मणा च राक्षसा इति अथवा जात्या राक्षसाः कर्मणा क्षत्रिया इति एवं प्रकारेण योनिसम्बन्धजनितजातेरनुच्छेदेन कर्म्मजनितजातावनुवर्तनात्, वाल्मीकिपरशुरामादौ च कर्मानुमतामुख्यव्याधत्वाक्षत्रियत्वादीनां तत्तत्कर्मनाशे नाशात् वा अननुवर्तनाद्वा न कर्मजनिता जातिः स्यादनित्यत्वात्, नहि मुख्यं जातिवस्तु विनश्यति, न वा गौणी जातिर्नित्या स्यात् ।

जातेर्गुणकर्म्मानुमतत्वे तु ब्राह्मणोऽयं योऽद्य ब्राह्मणकन्यापतिरस्ति स पुनः श्वः कर्मणा क्षत्रियो भूत्वा कथं नाम ब्राह्मणकन्यायां पत्न्यां पुत्रादि जनयेत्, तां त्यक्त्वा क्षत्रियकन्यामेवोद्वोढुं योग्यः स्यात्, परश्वश्चेत् कर्म्मणा शूद्रः संपत्स्यते, ततः परं चंडालस्ततश्चान्य स्ततश्चान्यइत्येवमेकेन जन्मना कर्म्मभिर्बहुरूप एकः किम्भूतो भवति तदेतद् भव्यैर्भावनीयम् । किंच ब्राह्मणभिन्नः पिता स्वपुत्रं कर्मगुणानुमतब्राह्मणं प्रणमेत् स पुत्रस्तं पितरं न नमेत् । एवमेव मातृभ्रातृपितृव्यश्वशुरादौ व्यवहारवैचित्र्यमभूतपूर्वमश्रुतपूर्वं च प्रसज्येत । अपिचैकस्य पुरुषस्य नानाविधकर्मविचित्रस्य तत्तत्कर्म्मोचितजात्यवच्छिन्नसमयोत्पन्नपुत्रकन्यानामद्भुतमेकं जातिसांकर्य्यं कथं नापद्येतैकत्वान्मातुरिति विलोक्यतां नेतॄणां तन्नेत्राणां च पंडितम्मन्यमानानां बुद्धेरगाधत्वं, पांडित्ये प्रकांडत्वं, सिद्धान्ते वैशद्यं विचारेच नैपुण्यमिति ।

अत्रोच्यते ब्राह्मणत्वादिजातिस्त्रिधा विभज्यते यथा जन्मानुमतं कर्म्मानुमतं, निमित्तानुमतं चेति, तत्र जन्मानुमतं मुख्यं, कर्म्मानुमतं गौणं, निमित्तानुमतं नैमित्तिकमिति । तत्र यो यस्यां जातौ जायते तस्य

सा जातिर्मुख्या गुणकर्म्मादितो वैलक्षण्यात् यस्यां वृत्तौ वर्त्तते सा गौणी, साधारण्यात् "गुणकर्म्मादयस्तु जात्युत्कर्षका भवन्ति । यथा परशुरामो ब्राह्मणयोनिजत्वान्मुख्यतया ब्राह्मणः क्षत्रवृत्तिकतया च गौणक्षत्रियः एवमेव व्याधचाण्डालादयो ज्ञेयाः । विश्वामित्रो वीतहव्यश्च नैमित्तिको ब्राह्मण इति ।

इत्याद्यालोचनया जातिर्जन्मना सिध्यति न कर्मणेति ध्रुवमेवावगम्यते । ये त्विदानीमत्यन्ताशुद्धेन शुद्धिविधिना यवनादीनपि ब्राह्मणत्वादिना व्यपदिश्याशु विशोधयन्ति, ते खलु जिगीषवो, विधर्मिविचालिताः, लड्डुकलोभेन प्रतारिता बालका इव, विचारमूढाः, आपातमधुरमुग्धाश्च न शास्त्राचारचरितानि प्रमाणयन्ति स्वसंप्रदायोपचयार्थं मुग्धमोहनार्थं च यानि यानि प्रमाणयन्ति तानि तान्यप्यपव्याख्या-कलुषितान्येव कुर्वन्ति । एतेहि जातिसमाजविच्युताः पापिष्ठा राजद्वारप्रवेशपुरस्कारमदिरामत्ता आत्मनोदुष्टाभिसन्धिसाधनपरायणा अर्वाचीनानवोधान् बालकांश्च प्रनर्तयन्ति, स्वकीयानि च गौरवकराणि ज्ञानविज्ञानधर्माचारादीन्युत्सादयितुमिच्छन्तो नितान्तमन्तःसारशून्याः पशुतोप्यपकृष्टतमा एवापभान्ति ।

## अमृताहरणोद्यतवैनतेयस्य भक्ष्योपदेशः ।

## महाभारते आदिपर्वणि २८ अध्याये ।

सौतिरुवाच ।

इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत् ।
गच्छाम्यमृतमाहर्तुं भक्ष्यमिच्छामि वेदितुम् ॥

विनतोवाच ।

समुद्रकुक्षावेकान्ते निषादालयमुत्तमम् ।
निषादानां सहस्राणि तान् भुक्त्वामृतमानय ॥
नच ते ब्राह्मणं हन्तुं कार्य्या बुद्धिः कथं च न ।
अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः ॥
अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः ।
गुरुर्हि सर्वभूतानां ब्राह्मणः परिकीर्त्तितः ॥
एवमादिभिरूपैस्तु सतां वै ब्राह्मणो मतः ।
स ते तात ! न हन्तव्यः संक्रुद्धेनापि सर्वथा ॥
ब्राह्मणानामभिद्रोहो न कर्तव्यः कथं च न ।
नह्येवमग्निर्नादित्यो भस्म कुर्यात् तथानघ ॥
यथाकुर्यादभिक्रुद्धो ब्राह्मणः संशितव्रतः ।
तदेतैर्विविधैर्लिंगैस्त्वं विद्यास्तं द्विजोत्तमम् ॥
भूतानामग्रभूर्विप्रो वर्णश्रेष्ठः पिता गुरुः ॥

गरुड़ उवाच ।

किं रूपो ब्राह्मणो मातः ! किंशीलः किंपराक्रमः ।
किंस्विदग्निनिभो भाति किंस्वित् सौम्यप्रदर्शनः ॥
यथाऽहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः ।
तन्मे कारणतो मातः ! पृच्छतो वक्तुमर्हसि ॥

विनतोवाच ।

यस्ते कण्ठमनुप्राप्तो निगीर्णंवड़िशं यथा ।
दहेदंगारवत्पुत्र ! तं विद्याद्ब्राह्मणर्षभम् ॥
विप्रस्त्वया न हन्तव्यः संक्रुद्धेनापि सर्वदा ।
प्रोवाच चैनं विनता पुत्रहार्दादिदं वचः ॥
जठरे न च जीर्य्येद्यस्तं जानीहि द्विजोत्तमम् ।

ततः स मातुर्वचनं निशम्य,
वितत्य पक्षौ नभउत्पपात ।
ततो निषादान् बलवानुपागतो,
बुभुक्षितः कालइवान्तकोऽपरः ॥
सतन्निषादानुपसंहरंस्तदा,
रजः समुद्धूय नभःस्पृशं महत् ।
समुद्रकुक्षौ च विशोषयन् पयः,
समीपजान् भूधरजान् विचालयन् ॥
ततः स चक्रे महदाननं तदा,
निषादमार्गं प्रतिरुध्य पक्षिराट् ।
ततो निषादास्त्वरिताः प्रवव्रजुः,
यतो मुखं तस्य भुजङ्गभोजिनः ॥
तदाननं विवृतमतिप्रमाणवत्,
समभ्ययुर्गगनमिवार्दिताः खगाः ।

सहस्रशः पवनरजोविमोहिता,
यथाऽनिलप्रचलितपादपे वने ॥
ततः खगो वदनममित्रतापनः
समाहरत् परिचपलो महाबलः ।
निषूदयन् बहुविधमत्स्यजीविनो,
बुभुक्षितो गगनचरेश्वरस्तदा ॥

सौतिरुवाच ।

तस्यं कण्ठमनुप्राप्तो ब्राह्मणः सहभार्यया ।
दहन् दीप्तवदङ्गारस्तमुवाचान्तरिक्षगः ॥
द्विजोत्तम ! विनिर्गच्छ तूर्णमास्यादपावृतात् ।
नहि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा ॥
ब्रुवाणमेवं गरुडं ब्राह्मणः प्रत्यभाषत ।
निषादी मम भार्य्येयं निर्गच्छतु मया सह ॥

गरुड़ उवाच ।

एतामपि निषादीं त्वं परिगृह्याशु निष्पत ।
तूर्णं सम्भावयात्मानमजीर्णं मम तेजसा ॥
ततः स विप्रो निष्क्रान्तो निषादीसहित स्तदा ।
वर्द्धयित्वा च गरुड़ मिष्टं देशं जगामह ॥
सहभार्ये विनिष्क्रान्ते तस्मिन् विप्रे च पक्षिराट् ।
वितत्य पक्षावाकाशमुत्पपात मनोजवः ॥

नो जातिसिद्धमपि तु द्विजतादि वस्तु
कर्म्मप्रक्लृप्तमिति ये ह्यबुधा वदन्ति ।
नृत्यन्ति तालयलज्जितिभीतिहीना-
स्तेषामसौ हृदयभित् कठिनः प्रबन्धः ॥



## सुधारकाविद्याविद्रावणम् ।

**श्री रामप्रपन्नाचार्य्याः शास्त्रिणः**
**अयोध्यामठाधिपतयः ।**

अभिभुवनाभिवर्धमानसनातनधर्मवैभवासहिष्णुकलिबलकलुषितान्तःकरणाः वैदेशिकशिक्षाघ्रातमहावातोन्मत्तशिरस्काः शास्त्रगन्धरहिता जगद्धितानुशासनपरवेदशास्त्रविद्वेषका दलद्वयविभक्तस्त्रीत्वाभिव्यञ्जकचिकुराः मेदिनीस्पर्शिलम्बकच्छा अत्यन्तभानुभानुसंतप्तकालेऽपि ऊर्द्धाधोवस्त्रसंवृतशरीराः स्कन्धोपरिस्कन्धं निधाय निरपत्रपाः स्त्रीभिः सह सञ्चरन्तः धूम्रपानादिषु म्लेच्छसमानासनमधिरूढास्तदीयोच्छिष्टपात्रैरतिशीततरजलं शर्करापयोमिश्रितमुष्णं जलं वा तदीयसंस्कृतं तदीयमद्यमांसादिविदूषितं पक्वान्नं पिबन्तो भुञ्जानाश्च केचन, केचन तु संजातब्राह्मणकुलजन्मानोऽपि यवनं चाण्डालं वा पाककर्तारं स्वगृहे संस्थाप्य तदीयहस्तनिर्मितमधुरान्नं भुञ्जानाः पण्डितपदभाजः स्वात्मानं ब्राह्मणं मन्वानास्त्यक्तमातृपितृपूज्यवर्गाः स्त्रीविलासमात्रैकपरमपुरुषार्थवादिनः स्वविलासप्रतिबन्धकभूदेवजगद्धितानुशासनपरवेदशास्त्रं विद्विषन्तः स्वकीयविलासचेष्टितान्तःकरणकामनापरिपूर्त्यर्थं सततं यतमानाः प्रच्छन्नवैदेशिकमतप्रचारधुरन्धरा आपातरमणीयविधवादुःखदयार्द्रचेतसः सुधारकनामभाजः स्वमतप्रचारप्रतिबन्धकवर्णाश्रमभित्तिरूपविवाहसंस्कारविदूषणे बद्धपरिकरा अन्योद्देश्येन सनातनधर्मनिर्वाहधुरन्धरै र्लोकमान्यबालगङ्गाधरतिलकमहोदयैः संस्थापितामपि राजकीयसभां तेषु जीवत्सु न लब्धावसरा भारतीयानां भाग्यदुर्विपाकात् दिवं गतेषु तेषु झटिति आक्रम्यापि असंप्राप्तमनोरथा असहयोगिनामभाजोऽपि पुनरपि ब्रिटिशराजपादमूलमवलम्ब्य संप्रा-

प्रमनोरथा विचारशून्यहृदयाः शठास्ते तावदित्थं जल्पन्ति वालविवाह एवास्मद्देशस्य पतनहेतुः स च प्राचीनेतिहासविरुद्धोऽर्वाचीनस्वार्थपरायणपैशाचकर्मरतन्नाह्मणपण्डितैः प्रचारितः विधवासंख्यावृद्धिकरः नायं धार्मिकोऽपितु सामाजिको दुर्व्यवहारः सर्वथा लोककल्याणपरैः प्रतिषेध्य इति।

तत्रेदं तावद्विचार्यते किमयं वालविवाहोऽधुनैव पतनहेतुराहोस्वित्सर्वदा।सर्वप्राचीनेतिहासेषु वाल्मीकिरामायणमेव प्राचीनेतिहास इति सर्वसम्मतम्। तत्र मर्यादास्थापनार्थं धृतमनुजजन्मनः श्रीदाशरथे रामस्य लक्ष्मणादेश्च विवाहो वाल्य एव पञ्चदशे वर्षे जातः।

ऊनषोडशवर्षो मे रामो राजीवलोचन इति दशरथोक्तवचनमेव प्रमाणम्। सीताविवाहकालस्तु षष्ठो वर्षो, रावणसमागमे अरण्यकाण्डे सप्तचत्वारिंशेऽध्याये, मम भर्ता महातेजा वयसा पञ्चविंशकः। वनप्रवेशसमये इति शेषः। अष्टादश हि वर्षाणि मम जन्मानि गण्यते। अत्रापि वनप्रवेशसमये इति शेषः आर्षमेकवचनम्। एवमेव महाभारते अभिमन्यो र्विवाहः षोड़शवर्षाभ्यन्तरे एव जातः तदानींतनकाले भारतस्य कीदृशमुत्थानमित्यत्र तावितिहासावेव प्रमाणम्। यद्ययं विवाहः पतनहेतुस्तर्हि तदानींतनानां पतनं कुतो न जातमिति अविमृश्यवादोऽयं मन्दधियाम्। पतनस्य त्वपरो हेतुः स्वकीयधर्माश्रद्धा परकीयधर्मपरिग्रह एव। अधुनैवामानुल्लामहाराजः च्युतराज्यः स्वधर्मत्यागात्। ब्रिटिशसम्राट् तु स्वधर्मं पालयन् सामन्तमण्डलसमभ्यर्चितशासनः साम्प्रतं वर्तते इत्येव प्रमाणं स्वधर्मपालनेन देशोन्नतेः। स्वधर्मत्यागे देशस्य स्वस्य च पतनेऽत्र पूर्वमहाराज एव प्रमाणपदमर्हति। यदप्याहुर्दुर्वलेत्यादि, तदपि न विचारसहम्। न हि वाल्यविवाहप्रतिषेधमात्रेण वलजीवनपुष्टसन्तानोत्पत्तिः संभवति अप्रयोजकत्वात् अपितु ब्रह्मचर्यमेवात्र ब्रह्मचर्य्यस्थापनस्य को वोपायः। सदुपदेशनिरीक्षणादि यद्युच्यते, तर्हि कृते विवाहेऽपि तत्संभवात् शास्त्रमूलवालविवाहप्रतिषेधो निरर्थकः। यदि च विवाहाभाव एव तर्हि कथं वा अनूढा अपि सहस्राणि स्खलन्ति ब्रह्मचर्य्यात् इति नैवास्ति विवाहस्तत्प्रयोजकः, अपि तू पदेशाभाव एव प्रयोजकः। स कर्त्तव्यः, नतु विवाहप्रतिषेधः। वाल्यविवाहप्रतिषेधे तु रहस्यदोषादेः महामहतो दोषस्य संभवः येन कृतोद्वाहानामपि पूर्वतनाभ्यासात् महामहतोऽनर्थस्य संभवः समाजे दोषा बहवः संक्रमेयुः तत्परिहारार्थमेव महर्षयो वेदहशो वालविवाहप्रथां व्यवस्थापयामासुः मनोविज्ञानसंमतश्च वाल्यावस्थायां विवाहः अदूषितमनसोः दम्पत्योः परस्परप्रेमाकारा वृत्तिर्वर्धमाना, एवंरूपमासादयति यत्सर्वत्र सर्वावस्थासु पतिरेव एको दृश्यते नापरः स्वप्नादिमानससृष्टौ सुप्रसिद्धमेतत विज्ञानम्। यदेव महामनसो मालवीयमहोदयादयः अनुमोदन्ते। किं वहुना दाम्पत्यप्रेम्णोऽपि अयमेवैक आधारो वालविवाहोऽन्यथा अमेरिकादिदेशपरिस्थितिः व्यभिचारकर्मणि भारतेऽपि स्यादिति निर्मत्सराः सन्तः सुधियो विभावयन्तु। यद्युच्यते विधवावृद्धिरिति तत्र वयं पृच्छामः किमयं वैधव्यदोषो जन्मान्तरकर्मप्रयुक्तः आहोस्वित् वालविवाहप्रयुक्तः यदि प्रथमः तदा स्वकर्मफलस्यावश्यभोग्यत्वनियमात् यत्नशतमपि निरर्थकं यदि द्वितीयः पक्षः तदा समानकालविवाहितानां समानवयस्कानां युगपदेव वैधव्यं कुतो न भवति कारणस्य तुल्यत्वात् इति व्यामोहमात्रमेवैतत् सुधारकाणां नैवेश्वरशासनमुल्लङ्घयितुं कैरपि शक्यते इति शास्त्रोच्छेदो व्यामोहस्य कर्तव्य इति विस्तरभयाद्विरमामः।



सहस्रशः पवनरजोविमोहिता,
यथाऽनिलप्रचलितपादपे वने ॥
ततः खगो वदनममित्रतापनः;
समाहरत् परिचपलो महाबलः ।
निषूदयन् बहुविधमत्स्यजीविनो,
बुभुक्षितो गगनचरेश्वरस्तदा ॥

सौतिरुवाच ।

तस्य कण्ठमनुप्राप्तो ब्राह्मणः सहभार्यया ।
दहन् दीप्तवदङ्गारस्तमुवाचान्तरिक्षगः ॥
द्विजोत्तम ! विनिर्गच्छ तूर्णमास्यादपावृतात् ।
नहि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा ॥
ब्रुवाणमेवं गरुडं ब्राह्मणः प्रत्यभाषत ।
निषादी मम भार्य्येयं निर्गच्छतु मया सह ॥

गरुड़ उवाच ।

एतामपि निषादीं त्वं परिगृह्याशु निष्पत ।
तूर्णं सम्भावयात्मानमजीर्णं मम तेजसा ॥
ततः स विप्रो निष्क्रान्तो निषादीसहित स्तदा ।
वर्द्धयित्वा च गरुड़ मिष्टं देशं जगाम ह ॥
सहभार्ये विनिष्क्रान्ते तस्मिन् विप्रे च पक्षिराट् ।
वितत्य पक्षावाकाशमुत्पपात मनोजवः ॥

नो जातिसिद्धमपि तु द्विजतादि वस्तु
कर्म्मप्रक्लृप्तमिति ये ह्यबुधा वदन्ति ।
नृत्यन्ति तालयलज्जितिभीतिहीना-
स्तेषामसौ हृदयभित् कठिनः प्रबन्धः ॥



## सुधारकाविद्याविद्रावणम् ।

**श्री रामप्रपन्नाचार्य्याः शास्त्रिणः**
**अयोध्यामठाधिपतयः ।**

अभिभुवनाभिवर्धमानसनातनधर्मवैभवासहिष्णुकलिबलकलुषितान्तःकरणाः वैदेशिकशिक्षाघ्रातमहावातोन्मत्तशिरस्काः शास्त्रगन्धरहिता जगद्धितानुशासनपरवेदशास्त्रविद्वेषका दलद्वयविभक्तस्त्रीत्वाभिव्यञ्जकचिकुराः मेदिनीस्पर्शिलम्बकच्छा अत्यन्तभानुभानुसंतप्तकालेऽपि ऊर्ध्वाधोवस्त्रसंवृतशरीराः स्कन्धोपरिस्कन्धं निधाय निरपत्रपाः स्त्रीभिः सह सञ्चरन्तः धूम्रपानादिषु म्लेच्छसमानासनमधिरूढास्तदीयोच्छिष्टपात्रैरतिशीततरजलं शर्करापयोमिश्रितमुष्णं जलं वा तदीयसंस्कृतं तदीयमद्यमांसादिविदूषितं पक्वान्नं पिबन्तो भुञ्जानाश्च केचन, केचन तु संजातब्राह्मणकुलजन्मानोऽपि यवनं चाण्डालं वा पाककर्तारं स्वगृहे संस्थाप्य तदीयहस्तनिर्मितमधुरान्नं भुञ्जानाः पण्डितपदभाजः स्वात्मानं ब्राह्मणं मन्वानास्त्यक्तमातृपितृपूज्यवर्गाः स्त्रीविलासमात्रैकपरमपुरुषार्थवादिनः स्वविलासप्रतिबन्धकभूदेवजगद्धितानुशासनपरवेदशास्त्रं विद्विषन्तः स्वकीयविलासचेष्टितान्तःकरणकामनापरिपूर्त्यर्थं सततं यतमानाः प्रच्छन्नवैदेशिकमतप्रचारधुरन्धरा आपातरमणीयविधवादुःखदयार्द्रचेतसः सुधारकनामभाजः स्वमतप्रचारप्रतिबन्धकवर्णाश्रमभित्तिरूपविवाहसंस्कारविदूषणे बद्धपरिकरा अन्योद्देश्येन सनातनधर्मनिर्वाहधुरन्धरै र्लोकमान्यबालगङ्गाधरतिलकमहोदयैः संस्थापितामपि राजकीयसभां तेषु जीवत्सु न लब्धावसरा भारतीयानां भाग्यदुर्विपाकात् दिवं गतेषु तेषु झटिति आक्रम्यापि असंप्राप्तमनोरथा असहयोगिनामभाजोऽपि पुनरपि त्रिदिशराजपादमूलमवलम्ब्य संप्रा-

प्रमनोरथा विचारशून्यहृदयाः शठास्ते तावदित्थं जल्पन्ति वालविवाह एवास्मद्देशस्य पतनहेतुः स च प्राचीनेतिहासविरुद्धोऽर्वाचीनस्वार्थपरायणपैशाचकर्मरतब्राह्मणपण्डितैः प्रचारितः विधवासंख्यावृद्धिकरः नायं धार्मिकोऽपितु सामाजिको दुर्व्यवहारः सर्वथा लोककल्याणपरैः प्रतिषेध्य इति ।

तत्रेदं तावद्विचार्यते किमयं वालविवाहोऽधुनैव पतनहेतुराहोस्वित्सर्वदा ।सर्वप्राचीनेतिहासेषु वाल्मीकिरामायणमेव प्राचीनेतिहास इति सर्वसम्मतम् । तत्र मर्यादास्थापनार्थं धृतमनुजजन्मनः श्रीदाशरथे रामस्य लक्ष्मणादेश्च विवाहो वाल्य एव पञ्चदशे वर्षे जातः ।

ऊनषोडशवर्षो मे रामो राजीवलोचन इति दशरथोक्तवचनमेव प्रमाणम् । सीताविवाहकालस्तु षष्ठो-वर्षो, रावणसमागमे अरण्यकाण्डे सप्तचत्वारिंशेऽध्याये, मम भर्ता महातेजा वयसा पञ्चविंशकः । वनप्रवेशसमये इति शेषः । अष्टादश हि वर्षाणि मम जन्मानि गण्यते । अत्रापि वनप्रवेशसमये इति शेषः आर्षमेकवचनम् । एवमेव महाभारते अभिमन्यो र्विवाहः षोड़शवर्षाभ्यन्तरे एव जातः तदानींतनकाले भारतस्य कीदृशमुत्थानमित्यत्र तावितिहासात्रेव प्रमाणम् । यद्ययं विवाहः पतनहेतुस्तर्हि तदानींतनानां पतनं कुतो न जातमिति अविमृश्यवादोऽयं मन्दधियाम् । पतनस्य त्वपरो हेतुः स्वकीयधर्माश्रद्धा परकीयधर्मपरिग्रह एव । अधुनैवामानुल्लामहाराजः च्युतराज्यः स्वधर्मत्यागात् । ब्रिटिशसम्राट् तु स्वधर्मं पालयन् सामन्तमण्डलसमभ्यर्चितशासनः साम्प्रतं वर्तते इत्येव प्रमाणं स्वधर्मपालनेन देशोन्नतेः । स्वधर्मत्यागे देशस्य स्वस्य च पतनेऽत्र पूर्वमहाराज एव प्रमाणपदमर्हति । यदप्याहुर्दुर्वलेत्यादि, तदपि न विचारसहम् । न हि वाल्यविवाहप्रतिषेधमात्रेण वलजीवनपुष्टसन्तानोत्पत्तिः संभवति अप्रयोजकत्वात् । अपि तु ब्रह्मचर्यद्वारेणैव । ब्रह्मचर्य्यस्थापनस्य को वोपायः । सदुपदेशनिरीक्षणादि यद्युच्यते, तर्हि कृते विवाहेऽपि तत्संभवात् शास्त्रमूलवालविवाहप्रतिषेधो निरर्थकः । यदि च विवाहाभाव एव तर्हि कथं वा अनूढा अपि सहस्राणि स्खलन्ति ब्रह्मचर्य्यात् इति नैवास्ति विवाहस्तत्प्रयोजकः, अपि तु पदेशाभाव एव प्रयोजकः । स कर्त्तव्यः, नतु विवाहप्रतिषेधः । वाल्यविवाहप्रतिषेधे तु रहस्यदोषादेः महामहतो दोषस्य संभवः येन कृतोद्वाहानामपि पूर्वतनाभ्यासात् महामहतोऽनर्थस्य संभवः समाजे दोषा बहवः संक्रमेयुः तत्परिहारार्थमेव महर्षयो वेददृशो वालविवाहप्रथां व्यवस्थापयामासुः मनोविज्ञानसंमतश्च वाल्यावस्थायां विवाहः अदूषितमनसोः दम्पत्योः परस्परप्रेमाकारा वृत्तिर्वर्धमाना, एवंरूपमासादयति यत्सर्वत्र सर्वावस्थासु पतिरेव एको दृश्यते नापरः स्वप्नादिमानससृष्टौ सुप्रसिद्धमेतत विज्ञानम् । यदेव महामनसो मालवीयमहोदयादयः अनुमोदन्ते । किं वहुना दाम्पत्यप्रेम्णोऽपि अयमेवैक आधारो वालविवाहोऽन्यथा अमेरिकादिदेशपरिस्थितिः व्यभिचारकर्मणि भारतेऽपि स्यादिति निर्मत्सराः सन्तः सुधियो विभावयन्तु । यद्युच्यते विधवावृद्धिरिति तत्र वयं पृच्छामः किमयं वैधव्यदोषो जन्मान्तरकर्मप्रयुक्तः आहोस्वित् वालविवाहप्रयुक्तः यदि प्रथमः तदा स्वकर्मफलस्यावश्यभोग्यत्वनियमात् यत्नशतमपि निरर्थकं यदि द्वितीयः पक्षः तदा समानकालविवाहितानां समानवयस्कानां युगपदेव वैधव्यं कुतो न भवति कारणस्य तुल्यत्वात् इति व्यामोहमात्रमेवैतत् सुधारकाणां नैवेश्वरशासनमुल्लङ्घयितुं कैरपि शक्यते इति ज्ञात्वोच्छेदो व्यामोहस्य कर्तव्य इति विस्तरभयाद्विरमामः ।



# ब्राह्मणमहासम्मेलनम् ।

[ निबन्धकः—म० म० श्रीअनन्तकृष्णशास्त्री ]

ब्राह्मणमहासम्मेलनमिदं श्रीवाराणस्यां सर्वेषां धर्माचार्याणाम्, बहूनां पण्डितप्रवराणाम्, बहूनामेव धनिकवराणाम्, ब्रह्मक्षत्रियवैश्य-शूद्राणां चतुर्णामेव वर्णानां सहयोगेन, बहूनामेव वाराणसीविद्यालयाध्यक्षाणामध्यापकानां विद्यार्थिनां श्रीभारतधर्ममहामण्डलादीनां चान्यादृशेन साहाय्येन च सुचारु समपद्यतेति नेयमत्रातिशयोक्तिः ।

ब्राह्मणमहासम्मेलनमिदं प्रथमतः स्वल्पानामेव केषाञ्चन प्रयत्नेन संघटनीयमिति प्रक्रान्तमपि राजश्रीशशिशेखरेश्वररायबहादुराणां प्राथमिकेन द्विसहस्ररूप्यपर्यन्तं तदर्थंव्ययार्थं स्वीयस्वाभाविकौदार्येण वितरणप्रतिज्ञाद्वाराप्रदत्तेनोत्साहेनैव कथञ्चनावसरमलभत । आलोचितमिदं कार्यकारिसमित्या प्रथमतः—यत् अन्ततो दश दश पण्डितानां तत्तद्देशीयानां समानयनेन ब्राह्मणमहासम्मेलनं संपादनीयमिति । पर्यवसानन्तु यादृशं ब्राह्मणमहासम्मेलनस्य समवलोकितम्, विश्वसिमः—न केनापि वामनावतार एव त्रिविक्रमावतारः पर्यवसन्न इति सत्यं न स्मृतिपथमानीता स्यात् कथेति । मन्यामहे—एवं परिणामे भगवतः श्रीविश्वनाथस्य, परमात्मनः श्रीवेणीमाधवस्य, भगवत्याः श्रीदुर्गायाः किंबहुना सर्वेषामेव देवतानां तत्प्रेमास्पदस्य सनातनस्य भगवतो धर्मस्य भगवत्पादानां धर्मसंस्थापकानां स्वनामधन्यप्रातःस्मरणीय-पण्डितप्रवराणां चाव्याजकरुणैकैव निदानं नान्यदिति ।

श्रीभगवत्पादाः श्रीकाञ्चीकामकोटिपीठाधिपजगद्गुरुश्रीकुंभघोणशङ्कराचार्यपादाः, श्रीभगवत्पादशृङ्गगिरिमठाधिपजगद्गुरु श्रीशङ्कराचार्यपादाः श्रीजगद्गुरुवानमामलैजीयरमहास्वामिपादाः तादृश-श्रीमदहोबिलमठाधीशमहास्वामिचरणाश्च बहूनां तत्तत्प्रतिनिधीनां पण्डितप्रकाण्डानां स्वव्ययेन प्रेषणेन ब्राह्मणमहासम्मेलनस्यानन्यादृशीं शोभामदधतेति ब्राह्मणमहासम्मेलनकार्यनिर्वाहकसमितिरधमर्णा तेषामिति वस्तुस्थितिकथनमिदम् ।

बहुपरिश्रमस्वीकरणेन कायेन, वाचा, मनसा, किं बहुना सर्वस्वविनियोगेनापि सोत्साहं स्वयमागत्य 'भगवन्तः स्वनामधन्यजगद्गुरुश्रीसङ्केश्वरशङ्कराचार्य-पादाः, श्रीद्वारकाशङ्कराचार्यपादाश्च विचारसभायां महासम्मेलने वा तत्तादृशोपदेशसहस्रवितरणेन ब्राह्मणसमाजस्य, सनातनधर्मिसमाजस्य, किं बहुना भारतवर्षस्यैवोत्तमर्णा न कथमपि प्रतीमो विस्मृता भविष्यन्तीति ।

श्रीयदुगिरियतिराजमठजगद्गुरुश्रीसम्पत्कुमाररामानुजजीयरमहास्वामिनः जगद्गुरुप्रतिवादिभयङ्कर-श्रीमदनन्ताचार्यस्वामिपादाश्च ये खलु धर्मस्य संस्कृतवाण्या वा जीवातवः बहुभिरेव स्वास्थानपण्डितैः पण्डितकुलमण्डनैः स्वयमागत्य ब्राह्मणमहासम्मेलनं विशिष्यालमकुर्वतेति कोवात्र विप्रतिपद्येत ।

श्रीवल्लभकुलभूषणस्वनामधन्यजगद्गुरुपण्डितप्रकाण्डधर्मप्राणश्रीनाथद्वाराधीशाः—श्रीकांकरोलीपीठाधीशाः श्रीमथुरापीठाधीशाः श्रीकाशीपीठाधीशाश्चासङ्ख्याकैरेव स्वास्थानपण्डितैरसङ्ख्यधनव्ययेन स्वयं रात्रिंदिवं ब्राह्मणमहासम्मेलनकार्यपद्धतिमात्रविचारार्थं स्वसमयक्षेपणेन प्रतिकार्यं कार्यनिर्वाहकसमितेः विशिष्टस्योत्साहस्य प्रदानेन, मन्महे ब्राह्मणमहासम्मेलनं सत्यं विराड्रूपमकुर्वत ।

स्वनामपूज्यश्रीकाशीमहाराजानां श्रीप्रभुनारायणसिंहदेवानां स्वागतसभाध्यक्षता, श्रीदर्भङ्गामहाराजानां स्व० श्रीरमेश्वरसिंह महोदयानां स्थायिसभापत्यं, म० म० पं० श्रीपञ्चाननतर्करत्नमहोदयानां कार्यैति

र्वाहकसभापतित्वं, श्रीभारतधर्ममहामण्डलस्य, सनातनधर्मविद्यालयस्य, टीकमणिविद्यालयस्य, श्रीगौरीशङ्करमहाविद्यालयस्य, श्रीवल्लभरामशालग्रामसाङ्गवेदविद्यालयस्य, श्रीगौरीशङ्करमहोदयानां, राजश्रीशशिशेखररायवहादुराणां वङ्गीयब्राह्मणसभायाः, श्रीव्रजेन्द्रकिशोररायचौधुरीमहोदयानां, राजामोतीचन्दमहाशयानां श्रीमाधवरामसरएढमहाशयानामन्येषां च वाराणसीनिवासिनां विशिष्य च श्रीलक्ष्मणशास्त्रिपादानां म० म० श्रीवामाचरणभट्टाचार्याणां तत्तत्पत्रिकासंपादकानां श्रीरामेश्वरनाथानी श्रीमदोङ्कारमलजटिया श्रीजुलारामगोयन्का श्रीशिवबक्सवागडी श्रीरामरक्षपाल श्रीरामकुमारझुंझुनवालाप्रभृतीनां पृष्ठपोषकाणाञ्च नेतृत्वमेकमेव ब्राह्मणमहासम्मेलनं यथार्थतोऽपूर्वमहासम्मेलनमकल्पयतेति नात्र मात्रयाऽप्यवस्तुस्थितिः।

ब्राह्मणमहासम्मेलनमिदं नाम्ना ब्राह्मणानामिव प्रतीयमानमपि सनातनधर्मावलम्बिनां चतुर्णामेव वर्णानां धनमिति न केवलं नियमपत्रिकायां निमन्त्रणपत्रेषु च सूचितं, किन्तु कार्यतोऽपि वहूनामेव राजमहाराजानां क्षत्रियाणां वैश्यानां शूद्राणाञ्च प्रतिविषयं नेतृत्वावलम्बनेन यथासंभवं साहाय्यादिग्रहणेन यथायोगं सर्वेषामेव स्वावासप्रबन्धादिव्यवस्थापनेन च कार्यतोऽपि तथैव सङ्घटितमासीदिति सर्वविदितमिदम्।

युक्तप्रान्तविहारासाममध्यप्रान्तमुंबईगुजरातपञ्चनदकाश्मीरनेपालवङ्गोत्कलमद्रान्ध्रप्रान्तप्रतिनिधयः परःसहस्रं पण्डितप्रवराः त्रिकरणशुद्ध्या, त्रिकरणविनियोगेन च नितरामेवातिथ्यादिविषयत्रुटिमपरिहार्यां तृणाय मत्वापि तत्तादृशकार्यप्रणालीमात्रेषु दृष्टिविनियोगेन स्वयमेव ब्राह्मणमहासम्मेलनं स्वगृहकार्यमिव पञ्चदशदिनपर्यन्तं तत्तादृशकायक्लेशादिसहनेन सोत्साहमुत्सवमिव समपादयन्निति नेदमसांप्रतं वचनम् यत् कार्यनिर्वाहकसमितिः केवलं निमित्तमात्रम्। तत्तद्देशीयाः प्रतिनिधयः, प्रातःस्मरणाया धर्माचार्याः, तत्तादृशराजमहाराजादयः स्वनामधन्याः पृष्ठपोषकवर्गा एव च कर्तारो ऽथवा श्रीविश्वनाथ एव कर्तेति।

युक्तप्रान्तविहारमध्यप्रान्तासामविभागमारवाडवङ्गप्रदेशेषु वहव एव ब्राह्मणसभा वहोः कालादनुवर्तमाना विशिष्य साहाय्यमकुर्वत वहूनामेव प्रतिनिधीनां प्रेषणेनेति नेदं दुरपह्नवं तत्त्वम्।

ब्राह्मणसम्मेलनावसरे समवलंबितः प्रतिनिधीनां कार्यकारिणाम्, पृष्ठपोषकाणाञ्चोत्साहो यदि कियन्तं कालमनुवर्तेत, तर्हि सत्यं सम्मेलनेनापि महत् किमपि कृत्यं कृतं स्यादिति नेदमनवसरं सूचनं यत् उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः।

इदमेवात्रानन्दकारणं यत् वङ्गदेशे, मद्रप्रान्तेषु च वहून्येव महासम्मेलनानि तत्तद्देशीयविवादास्पदविषयनिर्धारणार्थं विवाहकालवर्धननियमपर शारदाविलविरोधार्थं च तत्र तत्र समघटिषतेति।

महासम्मेलनप्रस्तावानुसारेण शारदाविलप्रस्तावविरोधार्थं महाराजाधिराजश्रीदरभङ्गानराधीशानां द्वारेण राजप्रतिनिधिसविधे कृतेऽपि वहुशः प्रतिनिधिप्रेषणार्थं पत्रव्यवहारे, त्रयाणामेव महासम्मेलनप्रतिनिधीनामनुमतिस्ततोऽलभ्यत स्वमतोपस्थापनायेति नेदं केषामपि महासम्मेलनसदस्यानां नारुन्तुदं भविष्यति।

इतोऽपि महदिदमरुन्तुदं वस्तु ब्राह्मणमहासम्मेलनसहयोगिनां यत् राजकीयैः स्वयं राजनीतिपरिस्थितिमिदानीन्तनीमनुसृत्य सुधारकाणां पक्ष एव कदाचन समर्थनीयो भविष्यतीति सूचितम्। मन्यामहे सुधारकाणामेव राजनीतिक्षेत्रे प्रविष्टानां हस्तीकरणं कौटिलीयार्थशास्त्रमनु स्वकार्योपयोगि समगृह्यतेति। नितरामिदं विश्वसिमः यत् राजकीयाः स्वकार्यधुरन्धराः धर्मविषये हस्तक्षेपो न करिष्यत इति प्रतिज्ञां नेदानीं कथमपि स्मरन्तीति। स्पष्टमियं परिस्थिति रस्माकं पुरतः स्थास्यति यत् स्वधर्मरक्षा स्वबलायत्ते-

वेतः परं, न राजकीयसाहाय्यायत्तापीति त्रिकरण-बलमपि सनातनधर्मावलम्बिभिः तत्र तत्र महासम्मेलन-सङ्घटनेन। नूनं वर्धनीयम्। विना येनात्मरक्षाऽपि दुरवकाशा स्यात्। धर्मरक्षणेनैव राज्यरक्षा, धर्मरक्षणेनैवात्मरक्षा, किं बहुना धर्मरक्षणेनैव परमात्मरक्षेति नेदं कस्यापि धार्मिकस्य विप्रतिपन्नम्। विवाहो हि वर्णानां मूलाधारश्चतुर्णामिति विवाहविषये हस्तक्षेपः सत्यमुदासीनानपि विरूपयिष्यति । विश्वसिमो वयम् यत् भगवानपि—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥"

इति प्रतिजानन्न सुखमनन्ते शेष्यते, यदि सनातन-धर्मावलम्बिनः सर्वेऽपि स्वीयेन सङ्घटनेन धार्मिकं भावम् "न जातु कामान्न भयान्नलोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः" इति ब्राह्मणमहासम्मेलननीतिमनुसृत्य न परित्यजेयुः परिपूर्णोऽयमस्माकं विश्वासो यत् ब्राह्मणमहासम्मेलननीतिरियं सम्यगेव परिपालिता कथमपि न निःश्रेयसाय न भविष्यति ।

वाराणस्यां ब्राह्मणमहासम्मेलनमपूर्वं श्रीविश्वनाथ-कृपया प्रथमं सङ्घटितमपि न द्वितीयं तादृशसम्मेलन-मन्तरेण कार्यप्रणाली तत्तद्देशेषु तत्तत्कार्यभारविनि-योगश्च सम्भवतीति । यदि सर्वे समुत्सहेरन् मन्यामहेऽचिरेणैव द्वितीयमपि ब्राह्मणमहासम्मेलनं सङ्घटितं तत्तत्कार्यक्षेत्रे तांस्तान् प्रवर्तयेदिति सप्रश्रयमिदमेव प्रार्थयामहे यत् पूर्वतने ब्राह्मणमहासम्मेलने कार्यभारेषु या काऽपि त्रुटिरस्मदीया, सर्वैरपि प्रतिनिधिभिः राज-महाराजादिभिः पृष्ठपोषकैः स्वनामधन्यैस्तत्तद्धर्माचार्यैश्च सा सदयं सोढव्येति ।

प्रथमे हि महासम्मेलनाधिवेशने प्रक्रमनिबन्धना वा तत्तत्कार्यभारविषये बहूनामेव तत्तद्देशीयानामुत्साहिनां व्यवस्थापकपदे विनियोगानवकाशनिबन्धना वा हठादेवाविचारितमेव महासम्मेलनस्य विराड्भावापत्तिनिमित्ता वा कार्यनिर्वाहकाणां प्रधानानामप्रधानानां वाऽसामर्थ्यनिदाना वा त्रुटयः द्वितीयसम्मेलने नियतमेवाऽनवसरं प्राप्येरन् सर्वैरपि प्रतिनिधिभिः समैरेव पृष्ठपोषकैः, निखिलैरेव च धार्मिकप्रवरैरिति सप्रश्रयमिदं प्रार्थयामहे परित्यज्य वैयक्तिकमभिमानं विद्वेषं वा पुनरप्युत्थीयतां स्वकार्य-साधनाय, समाजसङ्घटनाय, स्वकर्तव्यनिर्धारणाय, स्वात्मबलप्रकाशनाय वा ।

ब्राह्मणमहासम्मेलने हि प्रथमे सत्यं तत्तादृशानां धर्माचार्याणां तत्तादृशानां लोकविख्यातपण्डितानां चोपस्थित्या विचारप्रणाल्योपदेशमाधुर्येण समयोपयोगिनां प्रस्तावानां स्वीकरणेन नूनमास्तिकानां सन्दिग्ध-मतीनां बहूनामेव चित्तं धर्मविशेषेषु निस्सन्दिग्धं समपद्यत, परन्तु विना तत्तद्देशेषु प्रचारकार्यं तदर्थं चान्तरेण तत्तद्देशेषु समुचितानां पण्डितवराणां साहाय्यावलम्बनमन्तरा वा तत्तत्प्रान्तीयसम्मेलनव्यवस्थापनं सर्वेषां विभागानां परस्परवृत्तविज्ञानादिकं कार्यकारिणस्ते ते विचाराः प्रस्तावा नियमा वा भवितार इति नेदं कस्यापि तिरोहितम् ।

सत्यं महासम्मेलने तत्तद्देशीयानां पण्डितवराणां कार्यनिर्वाहकसमितिप्रस्तावः तत्तत्प्रान्तीयशाखासमितिप्रस्तावः विशुद्धसंस्कृतविश्वविद्यालयप्रस्ताव इत्यादयो बहवः प्रस्तावाः प्रस्तुताः परं तु दैवादकस्मादेव सभापतिमहोदयानां परमपदप्राप्त्या, हठादेव संपादकादीनां शरीरास्वास्थ्यवशादिना च विशिष्टाङ्कप्रकाशनकार्यं ब्राह्मणमहासम्मेलनपत्रिकाप्रचारकार्यं संस्कृतविश्वविद्यालयस्य च कथमप्याशाप्रदस्वल्पधनसंग्रहादिकमतिरिच्य किमप्यपरं कर्तुं न पारितमिति स्वाशक्तिनिवेदनं सोदराणां स्वपोषकाणां स्वपूज्यानां वा पुरतोऽलङ्करणमेव वयं पश्यामः ।

विशिष्टाङ्के चात्र बहूनामेवागतानां तत्तद्देशीयानां पण्डितवराणां प्रतिनिधीनां च नामानि धामग्रामाद्य-

विज्ञानतो न प्रकाशितानीति त्रुटिरियं तैस्तैरागतैरितः परमप्यत्रानुल्लिखितैः स्वनामधामनामादिनिर्देशपूर्वकं यदि सूचना दीयेत, तर्हि परिशिष्टाङ्करूपेण तेषामपि नामान्यचिरेण प्रकाश्य सर्वेषां सविधे प्रेष्येरन्निति सूचनपुरस्सरमिदमन्ते विज्ञापयामः -यत् यदि द्वितीयमपि महासम्मेलनस्याधिवेशनमवश्यसंपादनीयं तर्हि कुत्र कदा कैरेतद्भारनिवाहः कर्तुं शक्यत इति सूचनेनानुग्रहः कर्तव्यः, येन वयमपि तेषां यथाशक्ति स्वात्मविनियोगेन दास्यकरणार्थं प्रभवो भवेम ।

---




[ निबन्धकः—श्रीहाराणचन्द्रशास्त्री भट्टाचार्यः । ]



राणिकदेवतानां शिवविष्णुब्रह्मगणेशकार्तिकेयप्रभृतीनां वेदग्रन्थेषु नास्ति क्वचिदपि कथमपि समुल्लेखः, अत एवैषां कल्पना मूलभूतवेदाभावेन पुराणेषु दृश्यमानाऽवैदिकत्वेन निर्मूलेति केषाञ्चिद्वेदैकदेशदर्शिनां पण्डितप्रकाण्डमानिनां कोलाहलः प्रबलतया कर्णपटहमाहत्य साम्प्रतं दिग्वलये प्रसरन् नभोमण्डलमालोडयन् श्रूयते । परन्तु सोऽयं महान् कोलाहलो मुधैवेति शास्त्ररहस्यनिष्णातानां पण्डितमूर्द्धन्यानां तत्र समुपेक्षणमेव समालोक्यते । अनया खलूपेक्षया केषांचिदल्पज्ञानां भ्रान्तिरेव रात्रिन्दिवं परिवर्द्धत इति संक्षेपतोऽत्र विषये किञ्चित् प्रस्तूयते ।

वेदग्रन्थास्तावदनेकेऽधुना धर्मविप्लवराजविप्लवादिभिः परिलुप्ता नैव समुपलभ्यन्ते । महाभाष्यस्य पस्पशाह्निके खलु भगवता पतञ्जलिमहर्षिणा वेदशाखानां केनचित् प्रसङ्गेन परिगणना कृता । तत्र "एकशतमध्वर्य्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाऽऽथर्वणो वेद" इत्युक्त्या वेदशाखानां संख्या ११३० त्रिंशदधिकैकादशशतीति लभ्यते । परन्तु साम्प्रतमेतासु शाखासु त्रिंशदपि नोपलभ्यन्ते, याश्च सन्त्युपलब्धास्तासामपि सर्वासां परिशीलनं न सर्वैः कर्त्तुं शक्यमिति सम्यगनालोच्यैव साहसमात्रेण कासाञ्चिदतिप्रसिद्धानामपि देवतानामवैदिकत्वं समुद्घोष्यत इति चित्रमेतत् ।

अस्ति खलु कृष्णयजुर्वेदस्य तैत्तिरीयशाखा सर्वजनप्रसिद्धा, तदीयारण्यकग्रन्थे—

शिवस्य गायत्री समुपलभ्यते—"तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।" इति ।

अस्ति तावत्कठशाखा यजुर्वेदस्य यस्या उपनिषत् कठवल्लीति प्रसिद्धा भगवच्छङ्कराचार्य्यप्रभृतिभिर्ब्रह्मविद्यासम्प्रदायप्रवर्त्तनाचार्य्यैः सबहुमानं व्याख्याता सुप्रसिद्धा च । अस्या एव कठशाखायाः संहितायां "काठक"मिति नाम्ना १९०० तमे ख्रीष्टसंवत्सरे जर्म्मनदेशान्तर्वर्त्तिलिपिजिग्नगरे मुद्रितायामियमेव शिवगायत्री दृश्यतेऽविकलैव सप्तदशस्थानके इति तत्त्वानुसन्धाननिरतानां धीरधौरेयाणां नास्ति तदेतत्परोक्षमिति मन्यामहे ।

यजुर्वेदस्यैवान्या शाखा मैत्रायणीति प्रसिद्धा । तस्याश्च संहिता ( मैत्रायणीसंहिता ) जर्म्मनदेशे

बर्लिननगरे १९२३ खीष्टसंवत्सरे मुद्रिता। यस्यास्तावत्संहिताया मध्यमकाण्डे नवमप्रपाठके बहूनां देवतानां गायत्रीमन्त्राः समुपलभ्यन्ते। तत्र संहिताग्रन्थे "तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदया"दिति शिवगायत्र्याः पूर्वत्र शिवदेवताकं मन्त्रद्वयं परिदृश्यते, तयोश्चायं प्रथमो मन्त्रः—

"आत्वा वहन्तु, हरयः सुचेतसः श्वेतैरश्वैरिह केतुमद्भिः। वातजवैर्बलवद्भिर्मनोजवैरस्मिन् यज्ञे मम हव्याय शर्व" इति।

अस्मिन्मन्त्रे शर्वेति सम्बोधनान्तं शिवनाम विद्यते पुराणेषु श्वेतो वृषभः शिववाहनत्वेन प्रसिद्धोऽत्रतु श्वेतवर्णा आशुगामिनः (अश्वाः) हरयः (हयाः) एव शिववाहनत्वेन समाम्नाताः। तत्र देवतानां महैश्वर्य्यशालित्वादुभयमविरुद्धमिति प्रतिभाति। नच उत्तर मन्त्रे*"सहस्राक्ष"मिति श्रवणादिन्द्रविषयकमेवेदं मन्त्रद्वयं तथाच हरीणां तदीयवाहनत्वमपि सुष्ठूपपद्यत इति शङ्क्यम्। यतो मन्त्रेऽस्मिन् हरय इति बहुवचनदर्शनेनेन्द्रग्रहणयोग्यताविरहेण तादृशशङ्कायाः समुत्थानमेव न सम्भवेत्। हरिद्वयं हि शक्रस्य वाहनम्, तथाचोक्तं निघण्टौ यास्कप्रणीते निरुक्तमूलभूते ग्रन्थे "हरी इन्द्रस्ये" ति। ननु बहुत्र वैदिकमन्त्रेषु इन्द्रवाहनानामपि बहुबचनान्तपदेनोल्लेखनं समुपलभ्यमानं न शक्यतेऽपह्नोतुमिति बहुवचनदर्शनं नेन्द्रनिवर्त्तकं भवितुमर्हतीति चेत्। सत्यम्। परन्तु इन्द्रवाहनानां हरितवर्णत्वमेव तत्र तत्र वेदमन्त्रेषु प्रसिद्धं नतु श्वेतवर्णत्वम्। एतस्मिन् मन्त्रे तु वाहनानां श्वेतवर्णत्वं प्रतिपाद्यत इति नास्मिन् मन्त्रे इन्द्रग्रहणं युक्तमपि तु तदपेक्षया देवतान्तरं शिवमेव ग्राह्यं पूर्वोत्तरमन्त्रयोः शर्वशिवमहादेवेतिशिववाचकपदानां दर्शनात्। किञ्च,—

*"देवानांच ऋषीणां चासुराणाञ्च पूर्वजम्। महादेव ँ सहस्राक्ष ँ शिवमावाहयाम्यहम्।" इत्युत्तरमन्त्रस्वरूपम्।

"देवानाञ्च ऋषीणां चासुराणाञ्च पूर्वजम्।
महादेवं सहस्राक्षं शिवमावाहयाम्यहम्॥"

इत्येतस्मान्मन्त्रात्पूर्ववर्त्ती "आत्वा वहन्तु हरयः" इत्यादि मन्त्रो दृश्यते, यत्र शिववाचकं शर्वपदं सम्बोधनान्तं प्रयुक्तम्। उत्तरत्र च "तत्पुरुषाय विद्महे महादेवाय धीमही"त्यादि शिवगायत्री पठिता। अनयोरन्तरालवर्त्तिनो "देवानाञ्च ऋषीणाञ्चासुराणाञ्च पूर्वजम्" इत्यादिमन्त्रस्यापि महादेवशिवपदघटितत्वेन प्रकरणानुरोधेन च शिवप्रतिपादकत्वमेव समीचीनतया प्रतिभाति। यथा—

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
सभूमिं सर्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥"

इति पुरुषसूक्तीये प्रथमे मन्त्रे सहस्राक्षपददर्शनेऽपि प्रकरणानुरोधेन तत्रत्यस्य सहस्राक्षपदस्य नेन्द्रपर्य्यायता किन्तु तस्य पदस्य यौगिकत्वेन—

"शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्"

इत्यादि महाभारतीयवचनानुसारेण अनन्तनेत्रयुक्तस्य विराट्पुरुषस्यैव प्रतिपादकता, तथाऽत्र मन्त्रेऽपि सहस्राक्षपदमनन्तनेत्रयुक्तं शिवं विराटपुरुषत्वेन प्रतिपादयतीत्येव युक्तम्।

अस्य मन्त्रस्य रुद्राध्यायान्तर्गतत्वेनापि शिवप्रतिपादकत्वमुचितम्।

एवं च पूर्वोक्तस्य मन्त्रस्य शिवप्रतिपादकत्वे भूयसीनां युक्तीनां सत्त्वेन ता अनादृत्य सहस्राक्षपददर्शनमात्रेणैवेन्द्रपरत्वकल्पना सर्वथा युक्तिपथादपेतेति मन्तव्यम्।

मैत्रायणीयसंहिताया अत्रैव प्रकरणे शिवस्य गायत्री वर्त्तते। सा तु तैत्तिरीयारण्यके यादृशी दृश्यतेऽत्रापि तादृश्येव पठ्यते। अन्या अपि काश्चिद् गायत्र्यो मैत्रायणीसंहिताया अत्र प्रकरणे सन्ति; ता अत्र समुपदर्श्यन्ते,—

"तद् गाङ्गौच्याय विद्महे गिरिसुताय धीमहि ।
तन्नो गौरी प्रचोदयात् ॥"
"तत्कुमाराय विद्महे कार्त्तिकेयाय धीमहि ।
तन्नः स्कन्दः प्रचोदयात् ॥"
"तत्कराटाय विद्महे हस्तिमुखाय धीमहि ।
तन्नो दन्ती प्रचोदयात् ॥"
"तच्चतुर्म्मुखाय विद्महे पद्मासनाय धीमहि ।
तन्नो ब्रह्मा प्रचोदयात् ॥"
"तत्केशवाय विद्महे नारायणाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥"
"तद्भास्कराय विद्महे प्रभाकराय धीमहि ।
तन्नो भानुः प्रचोदयात् ॥"
"तत्सोमराजाय विद्महे महाराजाय धीमहि ।
तन्नश्चन्द्रः प्रचोदयात् ॥"
"तज्ज्वलनाय विद्महे वैश्वानराय धीमहि ।
तन्नो वह्निः प्रचोदयात् ॥"
"तत्त्वजपाय विद्महे महाजपाय धीमहि ।
तन्नो ध्यानः प्रचोदयात् ॥"
"तत्परमात्माय विद्महे वैनतेयाय धीमहि ।
तन्नः सृष्टिः प्रचोदयात् ॥"

शिवगौरीकार्तिकेयगणेशब्रह्मविष्णुप्रभृतयो देवाः पुराणप्रसिद्धा मैत्रायणीयसंहितायामुक्ता अतो गणेशादिदेवतानां वेदप्रतिपाद्यत्वं नास्तीति मन्वानानामुक्तयस्तेषामल्पदर्शित्वनिबन्धना एव। याः खलु वेदशाखा अधुना विलुप्ता यदि तासां कथमपि समुद्धारो भवेत्तर्हि सर्वा एव पौराणिका देवा देव्यश्च तासु प्रतिपादिताः सन्तीत्यस्माकमुपलब्धिविषयोऽवश्यमेव भवेत् । परन्तु याः खल्वधुना समुपलभ्यन्ते वेदशाखास्तासामप्यनुसन्धानमविधायैव केचन सर्वासां पौराणिकदेवतानां मूलोच्छेदाय प्रवृत्ता इति चित्रीयामहे ।

केचित्तु साम्प्रतिकमार्य्यसमाजप्रवर्त्तकं दयानन्दनामानं महर्षित्वेन मन्यमानास्तद्वचनमेव वेदप्रामाण्यनिर्द्धारकमभ्युपगच्छन्तो ब्राह्मणभागस्य वेदत्वं निराकुर्वन्ति । वयं तदीयं बुद्धिकौशलमवधारयितुं न पारयामः । परमप्राचीनेन महर्षिणाऽऽपस्तम्बेन स्वकीये यज्ञपरिभाषासूत्रे मन्त्रब्राह्मणयोरुभयोरपि वेदत्वमुट्टङ्कितम

'मन्त्रब्राह्मणयोर्वेदनामधेयम् ।' इति ।

पूर्वमीमांसादर्शने महर्षिजैमिनिना भेदलक्षणे [ द्वितीयेऽध्याये ] मन्त्र ब्राह्मणयोर्वेदत्वं प्रतिपादितम् ।

निरुक्तकारेण महामुनिना यास्केनापि तत्र तत्र ब्राह्मणवाक्यस्य मन्त्रसमकक्षतया प्रामाण्यमभ्युपगच्छता ब्राह्मणभागस्यापि वेदत्वमभ्युपगतम् । तथाहि·

अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च ।

[ निरुक्ते— २ अ० १६ ख० ] इत्यादि ।

भगवान् पाणिनिरपि "मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ" ६ । ३ । १२१ इत्यादौ केवलमन्त्रभागाभिप्रायेण च ब्राह्मणपदं "द्वितीयाब्राह्मणे" [ २ । ३ । ६० ] इत्यादौ मन्त्रब्राह्मणोभयभागाभिप्रायेण तु छन्दः पदं प्रायुङ्क्त "छन्दसि पुनर्वस्वोरेकवचनम्" [ १ । २ । ६१ ] इत्यादौ । यद्यपि "छन्दोब्राह्मणानि च तद्विषयाणि" [ ४ । २ । ६६ ] इति सूत्रे छन्द पदेनैव मन्त्रब्राह्मणोभयबोधसम्भवे ब्राह्मणपदं निरर्थकमिवाभाति तथापि तत्र ब्राह्मणवसिष्ठन्यायेन प्राधान्याच्च ब्राह्मणस्य पृथग् ग्रहणम् । ब्राह्मणस्य प्राधान्यं च यज्ञादिसर्वकर्म्मविधायकत्वेन बोद्धव्यम् ।

इत्थं च प्राचीनानां परमप्रमाणत्वेन स्वीकृतानां परमर्षीणां मन्त्रब्राह्मणयोरुभयोरपि वेदत्वे सम्पन्ने आधुनिकदयानन्दवचनबलेन ब्राह्मणभागस्य वेदत्वं निराकुर्वतां बुद्धिपाटवमेव प्रकटितं भवति । एवं च ब्राह्मणभागस्य वेदत्वे प्राचीनमहर्षिवचनबलात्सिद्धे ब्राह्मणभागान्तर्गतस्यारण्यकभागस्यापि वेदत्वं सुसिद्धमेव । तथाच तैत्तिरीयारण्यकस्यापि वेदत्वेन

वैषम्यं प्रकृतेर्गुणाञ्जनिकृतानन्वीक्ष्य वर्णस्थितिम्
संस्कारैश्च समुन्नतिं शुभधियोऽन्वालोच्य तच्छासनम् ॥
धर्मार्थादिपुमर्थसिद्ध्यधिगमोपायाः शुभा आश्रमा
इत्थं सर्वहितां विलोप्य सरणिं लाभं कमाशंससि ॥ ६ ॥

स्पृश्यास्पृश्यविवेकमुज्झति तथाऽऽद्यानाद्यभेदं जनः
पेयापेयविभाग एव विगतः शौचं न नित्याशुचेः ॥
रागप्राप्तमथो प्रमादजनितं यत्कर्म तच्छिक्षणं
मर्कस्येव हि मद्यपानमहह भ्रष्टैः कलौ तन्यते ॥ ७ ॥

देवार्चा शुभवेदमन्त्रनिवहैः संस्थापितां भूसुरैः
स्प्रष्टुं बोधयसेऽन्त्यजानबुध !को लाभोऽत्र तच्चिन्त्यताम् ॥
मूर्तावीश्वरधीर्हि शास्त्रवचनात्किं वा मनःकल्पना-
दाद्ये स्पर्शनिषेधकं त्यजसि किं स्पर्शोऽन्त्यपक्षे वृथा ॥८॥

यत्त्वं वाञ्छसि पुष्पितापरिणयं तद्योगसंरोधनं
वर्षं यावदरेऽतितीक्ष्णदमनं धर्मात्मनां चेच्छसि ॥
हेतुः कोऽत्र नृणां हितं यदि न तद्धर्मत्यजां संभवि
स्वाच्छन्द्यं यदि नो विधिः पशुषु किंतद्धन्नृणामिष्यते ॥९॥

मन्वादिस्मृतयः पुरातनतया याता जरां नूतनः
कालोऽयं च परिस्थितिर्भरतभू पुंसां च जाता नवा ॥
तस्मान्नूतनधर्मशास्त्ररचना कार्येति चेदुच्यतां
किं जीर्णौ पितरौ जहासि विपिने प्रत्नं च रत्नं जले ॥१०॥

ये साक्षात्कृतगूढधर्महृदया धीदोषमुक्ता बुधाः
तेषां विप्रतिपत्तिरेव न विधौ मन्वादिशास्त्रोदिते ॥
रागद्वेषमयैस्तु वेदरहितैर्बद्धे निबन्धे नृभिः
प्रामाण्यं कथमेव संभवति च श्रद्धा कुतो युज्यते ॥ ११॥

शिक्षाकुक्षिभृतीच्छया बहुधनक्षेपेण सम्पादिता
न क्षेमाय निजात्मनः श्रवणयोः श्रुत्यक्षरं प्रापितम् ॥
दीक्षा नैव धृता त्वयोदरदरीपूर्त्यै प्रतीक्षा कृता
सेवावृत्तिसमर्जनाय सततं नीतं जनुर्निष्फलम् ॥ १२ ॥

साफल्यं जनुषो न वित्तनिचयैर्भोगैर्न वा राज्यतः
तत्सर्वं परिणामनीरसमतो धर्मं परं संचिनु ॥
दुस्तर्कैर्मलिनीकृतां निजमतिं सच्छास्त्रवाक्याम्बुभिः
संशोध्याचलभक्तिमीश्वरपदे कृत्वा भवाब्धिं तर ॥ १३ ॥






( निबन्धकः म० म० पं० श्रीअनन्तकृष्ण शास्त्री )

सत्यं वैयक्तिकदूषणभूषणरहितप्रतिवादिभयङ्करश्रीमदनन्ताचार्यस्वामिकृतगभीरार्थबहुलदत्तकविवादनिर्णयोध्वंससमालोचनेन पण्डितवरश्रीबाक्रेमहादेवशास्त्रिमहाशयानां दत्तकविवादनिर्णयोऽपि समालोचितप्रायः। क्व वा प्रतिवादिभयङ्कराणां लेखः, क्व वा पण्डित श्रीवाक्रेशास्त्रिमहाशयानां लेखः । शास्त्रिमहाशया हि स्वमतविरोधे जगद्गुरूनपि तृणाय मन्यन्ते स्वमतसमर्थने मूकानपि बृहस्पतीन्मन्यन्त इति स्थान एव दत्तकशम्भुभट्टे स्वकुले च पूर्णमभिमानं प्रदर्शयन्ति प्रबन्धेनानेन । अत्र हि प्रवन्धे स्वमतविरोधिनः सर्वानप्यसत्यवादिन इति वा वितथवादिन इति वा अनृतवादिन इति वाऽन्यथा वा साक्रोशमेव निन्दावादेनाऽऽक्रामन्तः स्वस्य स्वानुयायिनां वा हरिश्चन्द्रवंशीयत्वाऽभिमानं परिचाययन्तो ह्रीमे विश्वस्त सूत्रतो वयं जानीमो—यद्यत्रानुरूपबलिन्यायेन प्रत्यक्षरं समुचितोत्तरप्रदेन स्वतन्त्रेण पुस्तकेन कैश्चन विद्यार्थिभिरेवाचिरेणैव प्रकाशयिष्यमाणेन सन्तोषयिष्यन्त इति । पत्रिकायां त्वस्यां वैयक्तिक दूषणसमालोचनं प्रियपाठकमहोदयानां न तथा सन्तोषप्रदं भविष्यतीति नाऽस्माभिस्तत्र समुचितं मन्यते दृष्टिक्षेपणमपि ।

स्थालीपुलाकन्यायेन तैर्दत्तकविवादनिर्णयविमर्शप्रसङ्गेनोपक्षिप्तांश्चतुरो दोषान् प्रियपाठकानां परीक्षणार्थमुपक्षिपामः—येन शैलीयं ग्रन्थकाराणां सम्यगेवाऽवगता स्यात् । पीठस्थैः स्वमतं निवेदयितुं त एवाऽऽज्ञप्ताः एतत् दत्तकविवादनिर्णयपत्रतो ज्ञातुं शक्यम् । तदनुसारं मोहमय्यां लिखितम् इदं काशीं गत्वा सर्वैः संमील्य पुनरपि लिखितमिति यदि कथयेयुस्तदपि पुनरुक्तिदोषान्निस्तारयितुं नालम् । तद् दुष्टतासंपादकमिति प्रथमः पुनरुक्तिदोषः । अत्रेदं वाक्रे शास्त्रिणः प्रियपाठकाश्च समालोचयितुं प्रार्थ्यन्ते यत् कुत्र नेदं लिखितमिति वाक्रेशास्त्रिणो लेखकानां वाक्यमन्तरा लेखनसमये स्वयमपि सहयोगादिदानमन्तरा वा न कथमपि निश्चेतुं शक्नुवन्ति । सत्यामपि शक्तौ वयं तु पश्यामः एतेषामत्र परं शक्तिरुपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यवत् केवलं कुण्ठीभाव मेवापन्नेति । भवतु कथमपि कथं वात्र पुनरुक्तिदोषः पुनरुक्तौ पुनरुक्तिदोषो वा, अन्यत्र लिखितस्यान्यत्र लेखनोपक्षेपमात्रेण पुनरुक्तिदोषो वेति । त एव नाम विभावयन्तु ।

(२) द्वितीयस्तु—परं कौतुकं चैतत् पण्डितानां ग्रन्थनामनिर्देशेनानभिज्ञजनान् मोहयतामिति वृथा ग्रन्थनामोद्घोषो दोषः ।

इदमेवात्र विचारणीयम्—यत् यानि पुनर्ग्रन्थनामानि स्वनिर्णयोपयोगितया निर्णयकारैरुद्घोषितानि किन्तेषु ग्रन्थेषु प्रकृतनिर्णयोपयोगित्वमेव नास्तीति विमर्शकारा मन्यन्त इति । वयं तु पश्यामः—विमर्शकारैः कुत्रापि तेषां तदनुपयोगित्वस्यानुपक्षेपात् स्वप्रबन्धे प्रत्युत निर्णयकारैस्तदुपयोगस्योपक्षेपाच्च स्वविरुद्धानां ग्रन्थानां नामतोऽपि श्रवणमेतेषां

शास्त्रिमहाशयानां कर्णारुन्तुदमिति कृत्वैव बहुतर-ग्रन्थनामोपक्षेपस्तैर्दोषत्वेन परिगण्यते ।

(३) द्व्यामुष्यायणस्य जनककुले दशरात्र-माशौचं परिपालनीयं नवेति विचारे तु बाक्रेप्रभृति-भिर्दशरात्रमाशौचं स्वीकृतमिति तद्वितथमिति सत्यापलापदोषस्तृतीयः । सत्यापलापविषये द्वितीय मुदाहरणम्—"श्रीचरणा एव यत्किमप्यत्र निश्चिन्व-न्तु इति त्वसत्यम् ।" तृतीयमुदाहरणम्—अस्मद्देशे केनचन देशप्रभुणा भागिनेयो दत्तकत्वेन गृहीतः पुन-स्तस्मा एव दत्तकाय स्वकन्यकापि दत्तेति धूपकरवा-क्यमप्रासङ्गिकमित्युपक्षिप्तं श्रीवासुदेवशास्त्रिभिः, सङ्ग्रहमात्रेण तु तस्य न दोषः। अनन्तरं सर्वं श्रीवासु-देवशास्त्रिणां सविधे स्थाप्येतेति प्रतिज्ञायापि तत्प्रकाश-नेनाऽसत्यव्यवहारो विचारकैर्लेखकैर्वा कृत इति । इदमेवात्र वक्तव्यम्—यत् स्वयं श्रीबाक्रेशास्त्रिप्रभृति-भिर्यत्र यत्र बाक्रेशास्त्रिणो दशरात्रमाशौचं स्वीकृतवन्त इति लिखितं तत्र हस्ताक्षरं यदि दत्तवन्तः कुत्र वाऽ सत्यवादितेति सर्व एव समालोचयन्तु । एतेन द्वितीयमपि प्रत्युक्तम्। यत्तु तस्य भावान्तरमेवेत्यादि-कमुपन्यस्यते तत्र सत्यं बाक्रेशास्त्रिणः प्रभव एव। इदं तु ते न वक्तुं शक्नुवन्ति—यदन्यैरपि श्रीचरणा-दिभिः पाठकैर्वा भावान्तरमपि संभवदत्र ग्रहीतुं न सां-प्रतमिति । तृतीयोदाहरणविषये तु अप्रासङ्गिकत्वे-नैव श्रीवासुदेवशास्त्रिभिस्तदसंग्रहवार्तोपक्षिप्तेति निर्णयावसरे तस्य विशेषत उपयोगो देशाचारविचार-प्रसङ्गेन यः प्रदर्शितस्तदनुसारेण श्रीचरणा अन्ये च निर्णेतारः काशीस्थाः येषां हस्ताक्षराणि निर्णयपत्रे दृश्यन्ते ते यदि प्रकाशनमपि तस्य परिस्थिति-विशेषप्रदर्शनोपयोगितया कुर्वन्ति, तत्र वस्तुतत्वा-पलापं ये खलु न कामयन्ते, तेषां किं वा छिन्नमिति सर्व एव समालोचयन्तु । संगृहीतानां प्रमाणा-नामुपयोगे श्रीचरणानामधिकारदानपुरस्सरं हस्ताक्षर-स्यापि सर्वैरपि श्रीबाक्रेश्रीवासुदेवशास्त्रिप्रभृति-भिर्दानानन्तरं विचारकाणां लेखकानां वा को वाधिकारोऽन्यथाकरणे इत्यपि किंचिदिव विभावनीयम्। अन्यत्तु सर्वमचिरेण प्रकाशयिष्यमाणात् ग्रन्थादे-व ज्ञातव्यं भविष्यति। यस्य समालोचने पत्रि-कान्तराण्येव विशेषतः प्रयतिष्यन्ते। अन्ते पुनरि-दमिह पर्यनुयुज्यते—वितथोक्तिस्तृतीयो दोषः, चतुर्थो दोषस्तु सत्यापलपनमित्यनयोः को वा फलतो विशेषः प्रबन्धकारैरत्र मन्यते । अधिकं सत्यवसरेऽवस-रान्तरे समालोचयिष्यते ।





# धर्म-सिद्धान्तः।

[ निव०—श्रीपञ्चाननतर्करत्नः ]

श्रुति स्मृति सदाचार—प्रमाणो लोकधारकः।
निःश्रेयसाभ्युदयकृत् धर्म्मः शरणमस्तु नः ॥१॥
संसारासक्तमर्त्त्यानां लोकद्वयहितार्थिना।
उच्यते धर्म्मसिद्धान्तः श्रीपञ्चाननशर्म्मणा ॥२॥

मर्त्त्या द्विविधाश्चातुर्वर्ण्यप्रभवास्तद्बाह्याश्च। तत्राद्या वक्ष्यन्ते; ये चान्त्यास्ते मन्वादिभिः सामान्यतो दस्युत्वेनाभिहिताः। तथाच मनुः—

मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः॥
( मनु० १० म० अ० ४५ )

येषामुत्पत्तौ साक्षात् परम्परया वा ब्राह्मणाद्यन्यतमवर्ण—शुक्रशोणितसापेक्षत्वं नास्ति त एव चातुर्वर्ण्यप्रभवबाह्याः। चीन जवन शकादयस्तु चातुर्वर्ण्यप्रभवा एव। तथाच मनुः—

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च॥
पौण्ड्रकाश्चौड्रद्रविड़ाः काम्बोजा जवनाः शकाः।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः॥
( मनु० १० म० अ० )

कुल्लूकभट्टादयस्तु—

पौण्ड्रकादीनेव ब्राह्मणादिवर्णबाह्यानाचक्षते। तन्मते मुखबाहूरुपज्जानामिति मानवश्लोकार्थस्तु ब्राह्मण-क्षत्रियवैश्यशूद्राणां क्रियालोपादिना या जातयो बाह्या जाता म्लेच्छभाषायुक्ता आर्य्यभाषोपेता वा ते दस्यवः स्मृताः इति एतन्मते सर्व्व एव मर्त्त्याः साक्षात् परम्परया वा चातुर्वर्ण्यप्रभवा एवेति तन्न सम्यक्, पूर्ववचन एव पौण्ड्रकादीनां शूद्रत्वप्राप्तिमभिधायात्र पुनस्तेषां शूद्रबाह्यत्वकथने भगवतो मनोरयुक्तवादित्वप्रसङ्गात्। चातुर्वर्ण्यञ्च ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति तत्प्रभवाः षड़नुलोमजाः षट् प्रतिलोमजाश्चेति द्वादश। तत्सङ्कराश्चासंख्याः। मूर्द्धावसिक्ताम्बष्ठ-पारशवा ब्राह्मणात् स्वभार्यासु क्षत्रियावैश्याशूद्रासु क्रमेणोत्पद्यन्ते, माहिष्योग्रौ क्षत्रियात् वैश्याशूद्रयोः, करणश्च वैश्यात् शूद्रायामित्येते षड़नुलोमजाः। सूतः क्षत्रियाद् ब्राह्मण्यां, वैदेहमागधौ वैश्याद् ब्राह्मणी—क्षत्रिययोः चाण्डालक्षत्रायोगवाश्च शूद्राद् ब्राह्मणी—क्षत्रियावैश्यासु जायन्त इत्येते षट् प्रतिलोमजाः। तदाह याज्ञवल्क्यः—

विप्रान्मूर्द्धावसिक्तो हि क्षत्रियाण्यां विशः स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥
( म० १ अ० ९१।९२ )

विन्नासु स्वस्वपरिणीतासु।

मनुरपि—

क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ॥
शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो नृणाम्।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः॥
( म० १० अ० ११।१२ )

इति।

परपरिणीतासु स्वतन्त्रासु वा क्षत्रियावैश्याशूद्रासु ब्राह्मणाद्युत्पन्नानामनुलोमजानामपि न मूर्द्धावसिक्तत्वादिकमपि शूद्रतुल्यत्वमेवेति । अत्र—

"द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवावट इति ख्यातः शूद्रधर्म्मा स जातितः ॥
व्रतहीना न संस्कार्याः स्वतन्त्रास्वपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इव वहिष्कृताः ।"

इति कुल्लूकभट्टादिधृतदेवलवचनं कैमुतिकन्याययश्चादरणीयः । वैश्यायां विप्रतश्चौर्याज्जापितो नाम जायत इत्याद्यौशनसवचनमपि द्रष्टव्यम् । ननु कोऽयं ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा ? इति चेत् श्रूयतां "ब्राह्मणोऽस्य मुखमासीद् वाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत इति श्रुतिः ।
लोकानान्तु विवृध्द्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयदिति च स्मृतिः ।
( मनु० १ म० अ० ३१ श )

सवर्णेभ्यः सवर्णासु जायन्ते वै सजातयः ।
इति याज्ञवल्क्यः ।
सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥
इति च मनुः ( १० म० अ० ५ श्लो० )

अस्यार्थः—ब्राह्मणादिषु वर्णेषु चतुर्ष्वपि समानजातीयासु यथाशास्त्रं परिणीतासु अक्षतयोनिषु आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायामित्यनेनानुक्रमेण ये जातास्ते मातापित्रोर्ज्जात्या युक्तास्तज्जातीया एव ज्ञातव्याः । तथाच द्वेधा खलु चातुर्वर्ण्यमाद्यमर्वाचीनञ्च । तत्राद्यं सङ्कल्पजमितरत् सजातीयासु परिणीतासु भार्यासु सवर्णेनोत्पादितमित्येतयोराद्यमत्रानुपयोगादसंग्राह्यं, इतरत्तु लक्षितमेव । ननु सर्व एव ब्राह्मणा मरीच्याद्यन्यतमवंश्यत्वेन प्रसिद्धाः । मरीच्यादयस्तु स्वायम्भुवमनुना सृष्टा इति मनुरेवाह । तथाहि—

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन् प्रजानामसृजं महर्षीनादितो दश ॥
मरीचिमत्र्यंगिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्राचेतसं वसिष्ठञ्च भृगुं नारदमेव चेति ॥
( मनु० १ म० अ० ३४।३५ )

तद् ब्राह्मणस्य ब्रह्ममुखसम्भूतत्वं श्रुतिस्मृतिसम्मतमपि कथङ्कारमुपपद्यते ? नच तद् ब्राह्मणान्तरमनुपलम्भादविशेषेण मन्वादीनां ब्राह्मणमात्रस्य ब्रह्ममुखप्रभवत्वकथनं तावतापि दुरुपपादं स्यात् । अत्रोच्यते, आदितः आदिमारभ्य स्थितान् दश महर्षीन् प्रजापतीन् असृजं, ये तावत् ब्रह्ममुखोद्गता दश महर्षय आसन् तान् स्वतपः प्रभावेण प्रजापतीन् अकार्षमित्येव मनुवचन तात्पर्यम् । अन्यथा मरीच्यादीन् महर्षीन् ब्रह्मपुत्रत्वेन कीर्त्तयद्भिर्बहुशास्त्रैर्विरोधः प्रसज्येत यदि तु मनोस्तपोलब्धब्रह्मभावतया तत् सृष्टानां ब्रह्मसृष्टत्वोक्तिरित्यप्यभ्युपगमेन विरोधपरिहारः क्रियते तदा ब्रूमहे, ब्राह्मणोऽस्य मुखमासीदित्यादिश्रुत्या लोकानान्तु विवृध्द्यर्थमित्यादिस्मृत्या च यथोत्पन्ना ब्राह्मणादयो वर्णमूर्त्तेर्ब्रह्मणो मुखाद्यवयवरूपत्वेन निर्दिष्टाः स एष निर्देशो लोकाभ्युदयहेतुरित्येव प्रतिपाद्यते अत एव श्रुतौ ब्राह्मणोऽस्य मुखमिति समाना विभक्तिर्न तु ब्राह्मणोऽस्य मुखादिति विषमा । पद्भ्यां शूद्र इत्यत्र तु विषमापि प्रक्रमसामर्थ्यादभेदार्था तृतीया । स्मृतौ ब्रह्ममुखप्रभवत्वाद्युक्तिश्च गौणी । यद्वा ब्राह्मणत्वं नाम विलक्षणसत्वभूमा क्षत्रियत्वं विलक्षण रजोभूमा, वैश्यत्वं विलक्षण रजस्तमोभूमा शूद्रत्वं च विलक्षणतमोभूमा इति तानि स्वरूपाणि, कार्य्याणि वा मुखादीनि च कारणानि, कार्यकारणवाचकयोः समानविभक्तिकत्वमिति वृक्षो नौका भवतीत्यादिवत् ।

तत्राद्या ब्राह्मणामरीच्यादयः ।

सत्वादयः स्वस्वनामप्रसिद्धा गुणभेदा

इति साङ्ख्यादयः।

अदृष्टविशेषरूपा इति नैयायिकादयः।

तेषाञ्च ब्रह्मण्यधिष्ठातृत्वं सम्बन्धः।

तथाविधादृष्टविशेषप्रयोज्यत्वं

यत्र शरीरे तत्र ब्राह्मणत्वादिसामान्यं इति ध्येयम्।

सत्वादि गत वैलक्षण्यं सर्वज्ञैकगोचर-

मस्मादृशाञ्चानुमेयं तत्र हेतुर्जन्मविशेषो व्यक्तः।

कथमेवमिति चेत् श्रूयतां, ब्राह्मण्यादिकं हि

स्थूल देह वृत्तितया लोकवेदप्रसिद्धम्।

तथाहि व्यवह्रियते ब्राह्मणं पश्येति

श्रूयते च यो ब्राह्मणायावगुरेदित्यादि।

धर्म्मिणः स्थूलदेहस्य मातापितृनिमित्तकत्वेन धर्म्मस्य ब्राह्मण्यादेर्मातापितृनिमित्तकत्वं युक्तमत एवोक्तं सवर्णेभ्यः सवर्णासु जायन्ते वै सजायतः इत्यादि।

ननु महाभारतं नाम पञ्चमो वेदस्तद्विरुद्धं मतमिदं प्रायिकतया कथञ्चित् सङ्गमनीयमपि न सिद्धान्तपदवीमधिरोढुमर्हति यथा—वनपर्वणि १८० अध्याये 'ब्राह्मणः को भवेदिति नहुषाजगरप्रश्ने यौधिष्ठिरवचनं—

"सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः॥

तत्राजगरवाक्यं—

"चातुर्वर्ण्यं प्रमाणञ्च सत्यञ्च ब्रह्मचैव हि।
शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव च॥
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर॥

अस्यार्थः— सत्यं ब्रह्म च वेदमूलकाचारविशेषश्च चातुर्वर्ण्यं प्रमाणं च न केवलं ब्राह्मण्यप्रमाणं तथा च मनुः—"अहिंसा सत्यमस्तेयं शौचमिन्द्रिय निग्रहः। एतत् सामासिकं धर्म्मं चातुर्वर्ण्येऽब्रवीन्मनुरिति। एवञ्च प्रागुक्तानां सत्यादीनां प्रत्येकं न ब्राह्मण्यलिङ्गं व्यभिचारादपि तु समुदाय इति चेत्तथापि व्यभिचारो दुर्वारः। यतः शूद्रेष्वपि कदाचित् सत्यादयः समुदिता गुणास्तिष्ठन्तीति।

अत्र युधिष्ठिर उवाच—

"शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।
न वै शूद्रो भवेच्छूद्रो वाह्मणो न च ब्राह्मणः।
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः॥

अथ सर्प उवाच—

यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः।
वृथा जातिस्तदायुष्मन् कृतिर्यावन्न विद्यते॥

कृतिः अनृतनिवृत्त्यात्मकसत्यादिरूपा ब्राह्मणेष्वाधीयमानः प्रयत्नो वा। तदा जातिर्वृथा यावत् सत्यादिरूपा कृतिर्नभवति, सत्यामपि जातौ ब्राह्मणजन्मनि यदि ब्राह्मणेष्वाधीयमानो वा यत्नस्तत्र नास्ति यावत् यतः इत्यर्थः।

तत्र युधिष्ठिरवाक्यम्—

जातिरत्र महासर्प मनुष्यत्वे महामते।
सङ्करात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः॥
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः।
वाङ्मैथुनमथो जन्म मरणञ्च समं नृणाम्॥
इदमार्षं प्रमाणञ्च ये यजामह इत्यपि।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्वदर्शिनः॥

इति वागादीनि सर्वमानवसामान्यानीत्युक्तं प्रागिति।

आर्षं प्रमाणं श्रुतिः।

"ये यजामहे इत्यनेन न चैतद्विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वा ये वयं स्मो ब्राह्मणा अन्ये वा ते वयं यजामहे 'य एवास्मि स सन् यजे इत्यादि श्रुतिसूचितं ब्राह्मण्यानवधारणमाविष्कृतम्।

तथा शान्तिपर्वणि १८८ तमे अध्याये भृगुवचनम्—

ब्राह्मणानां सितो वर्णः क्षत्रियाणान्तु लोहितः।
वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा॥

तत्र भरद्वाज उवाच—

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ॥
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभिद्यते ॥
स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥

अथ भृगुरुवाच—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्म्मभिर्वर्णतां गतम् ॥
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्म्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥
हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभात्वज्ञानतां गताः ॥

इति चतुरश्चत्वारः ।

पुनरनन्तराध्याये भृगुवचनं—

जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्म्मस्ववस्थितः ॥
शौचाचारे स्थितः सम्यग् विघसासी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥
सत्यं दान मथाऽद्रोह आनृशंस्यं त्रपा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥
क्षत्रजं सेवते कर्म वेदाध्ययनसङ्गतः ।
दानाऽऽदानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥
वाणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः ।
वेदाध्ययन सम्पन्नः स वैश्य इति संज्ञितः ।
सर्वभक्ष्यरतिर्नित्यं सर्वकर्म्मकरोऽशुचिः ॥
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ।

मनुरपि—

अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ।
व्यञ्जयन्तीह पुरुषं लोके कलुषयोनिजमिति ॥

तस्मात् गुणकर्मभेद एव ब्राह्मण्यादिलिङ्गं न तु जन्मेत्यत्रोच्यते—द्विधापुनर्ब्राह्मण्यादिकं शरीरमात्मगतञ्च तत्र शरीरं सामान्यरूपं जन्मलिङ्गं, आत्मगतञ्च अदृष्टविशेषरूपं गुणकर्मभेदलिङ्गं यत्र द्विविधमेव ब्राह्मण्यं वर्त्तते स एव मुख्यो ब्राह्मणः । तदुक्तं महाभारतेऽनुशासनपर्वणि १२१ माध्याये—

"तपः श्रुतञ्च योनिश्चाप्येतद् ब्राह्मण्यकारणम्
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान् भुजगोत्तम"

इत्येतेन संस्कृतं संस्कारोपेतं गर्भजातकर्मचौलोपनयनादिसंस्कारः सत्यादिरूपं वृत्तञ्च यत्रास्ति स एव ब्राह्मण इत्येव मदुक्तेस्तात्पर्यम् इत्यर्थकेनाजागरपर्वाध्यायीय :यौधिष्ठिरवाक्यशेषेण तथैव प्रतिपादनात् । न च यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः इति प्रागुक्त्या ब्राह्मण्यव्याप्यतथावृत्तमात्रस्यबोधनेनेदं विरुध्यत इति वाच्यम् तत्रात्मगतब्राह्मण्य व्याप्यतया मुख्य ब्राह्मण्य सामानाधिकरण्येन वा वृत्तमात्रस्य बोधनादिति ध्येयम् । ब्राह्मण्यादे र्द्वैविध्यासत्वे तु शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव चेति वनपर्वीयाजगरवाक्ये शूद्रपदस्य शूद्रे तु यद्भवेल्लक्ष्मेत्यादि यौधिष्ठिरप्रतिवचने च शूद्रब्राह्मणपदानां नञर्थानुयोगि प्रतियोगि वाचकानां व्यवहारोऽनुपपन्नः स्यात् । प्रागुक्ते शान्ति पर्वीय सन्दर्भे च ब्राह्मण्यादि द्वैविध्यबोधनाय शुभ्रा रक्ताः पीताः कृष्णा इति शरीरवैलक्षण्यमपि दर्शितम् । तथाचादौ शारीरब्राह्मण्यादिकं शुक्लादि रूपभेदमपेक्ष्य ब्रह्मणैव विहितम्, तदानीं जन्मनस्तौल्यात । अधस्तात्तु जन्मभेदादिति विशेषः । अतएव—

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ।

सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ॥

इति भरद्वाज प्रश्नस्य ।

इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वमित्येतावता ब्रह्मणो वर्णभेद-सर्गावसर एव शुक्लादिवर्णभेदग्रहणमिति भृगुणोक्तमुत्तरम् ।—

अत्रिरपि—

देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः ।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः॥

संध्यां स्नानं जपं होमं देवतानित्यपूजनम् ।
अतिथिं वैश्वदेवञ्च देवब्राह्मण उच्यते ॥

वैश्वदेवञ्चेत्यनन्तरं कुर्वन्निति पूरणीयम् ।

शाके पत्रे फले मूले वनवासे सदा रतः ।
नियतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥

वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत् ।
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥

अस्त्राहताश्च धन्वानः संग्रामे सर्वसम्मुखे ।
प्रारम्भे निर्जिता येन स विप्रः क्षत्र उच्यते ॥

कृषिकर्म्मरतो यश्च गवाञ्च प्रतिपालकः ।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ॥

लाक्षा लवण सम्मिश्र कुसुम्भक्षीर सर्पिषाम् ।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥

चौरश्च तस्करश्चैव सूचको दंशकस्तथा ।
मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते ॥

ब्रह्मतत्वं न जानाति ब्रह्मसूत्रेण गर्वितः ।
तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥

वापीकूपतड़ागानामारामस्य सरःसु च ।
निःशङ्कं रोधकश्चैव स विप्रो म्लेच्छ उच्यते ॥

क्रियाहीनश्च मूर्खश्च सर्वधर्म्मविवर्ज्जितः ।
निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते ॥

( ३६४—७४ श्लोक )

जातिब्राह्मणा दशविधा भवन्ति देवब्राह्मणादि-भेदादात्मगतदेवभावोपेता जातिब्राह्मणा देवब्राह्मणा भवन्ति, तथाविधदेवभावश्च व्यवहर्तृभिराचार-विशेषादनुमेयः । एवं मुनिब्राह्मणादयो मन्तव्या इत्य-त्रिवचनानां तात्पर्यम् । एतेन क्षत्रियादयः शूद्रान्ता व्याख्याताः । दशविधत्वन्तु अवान्तरभेदाविवक्षया दिङ्मात्रप्रदर्शनार्थमुक्तम् । देवत्वमुनित्वादिसङ्करेण तदानन्त्यसम्भवादिति तत्वम् । यत्र चैकविधब्राह्म-ण्यं स गौणो ब्राह्मणस्तत्र जन्मलिङ्गकब्राह्मण्याद्यु-पेतस्यैव मन्त्रवत् संस्काराधिकारः जातमात्रस्य शिशोर्वा गुणलिङ्गकब्राह्मण्याद्यवधारणासम्भवात् । ब्राह्मण्यादीत्यादिपदं क्षत्रियत्ववैश्यत्वयोः संग्रहाय । आत्मगतब्राह्मण्योपेतशूद्रस्य पुत्रादेर्मन्त्रवत् संस्कारा-धिकारस्वीकारे तु जन्मब्राह्मण्य पक्ष एव विजयते । तस्मात् संस्कारादिबोधकशास्त्रं जन्मलिङ्गकब्राह्म-ण्याद्युपेतमधिकृत्यैव प्रवर्त्तते तदिहेतरापेक्षया तस्य वेदाधिकारित्वेन प्राधान्यम् । अमुत्रतु केवलशरीर-ब्राह्मण्योपेतस्य श्रेयोधिकारित्वेन प्राधान्यम् । अमुत्र प्राधान्यमभिसन्धायैव युधिष्ठिरेणोक्तं यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः इति । भृगुणाप्युक्तं सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृत इति । जन्मब्राह्मण्यं महाभारते बहुधोक्तं तत्रैकमनुशासनपर्वणि ४७ शततमाध्याये युधिष्ठिरवाक्ये—

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः (२८श्लोकः) इति । यजमानस्य ब्राह्मण्यानवधारण-प्रमाणभूता श्रुतिरपि मुख्यब्राह्मण्यानवधारणमेव सूच-यति । जातकर्म्मादिसंस्कारवत् प्रवरणमपि मुख्य-ब्राह्मण्यहेतुभूतमदृष्टमुत्पादयतीति । एवं क्षात्रादिकम-

प्युन्नेयम्। अनार्यता निष्ठुरतेत्यादिवचनेन मनुना यत् कलुषयोनित्वव्यञ्जकमभिहितं तज्जातिब्राह्मणत्वेन यथाधिकारं ……………… गर्भादिसंस्कारपरिशोधितानामप्यनार्यतेत्यादिलिङ्गसद्भावे सङ्गमनीयं व्यक्तमिदं महाभारते वनपर्वणि अजगरपर्वाध्याये युधिष्ठिरवाक्ये-

कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते।—

सङ्करस्तत्र नागेन्द्र बलवान् प्रसमीक्षितः।

कृतकृत्या यथाधिकारं यथाविधि कृतसंस्काराः॥

तथापि यदि वृत्तं सत्यादिकं न विद्यते, तैर्न लभ्यते तेषु न भवति वा। तत्र बलवान् संस्कारानपनेयः सङ्करदोषो निश्चित इत्यर्थः। सङ्करस्त्वत्रेति पाठे अत्र एषु संस्कारोपेतेष्वपि वृत्तहीनेष्वित्यर्थः। तुकारो नञो ऽनुवृत्तिव्यवच्छेदार्थः। वृत्तं वैदिकसंस्कारो यदि न विद्यते तर्हि सर्वाः प्रजाः कृतकृत्याः शूद्रतुल्या इति नीलकण्ठव्याख्यानन्त्वनुपादेयं यत्रैतल्लक्ष्यते सर्प वृत्तमित्यादिप्रागुक्तवृत्तपदस्य सत्यादिपरत्वं सिद्धम्। अत्रापि तत्परत्वसम्भवे वैदिकसंस्काररूपकाल्पनिकार्थपरत्वाभिधानस्यान्याय्यत्वात् लुप्तकृत्यानां प्रजानां कृतकृत्यत्वोक्तेरत्यन्तासङ्गतत्वात् तव्द्याख्यासङ्गत्यै व्यक्तार्थकपूर्वपदानामपि क्लिष्टार्थकत्वकल्पनदोषस्य जागरूकत्वाच्च।

एवञ्च जन्मब्राह्मणादिप्रभवास्तत्तज्जातय इति सिद्धम्। चातुर्वर्ण्यं तु ब्राह्मणप्रभवमेवेति प्रागुक्तम्। सङ्कीर्णा जातयश्च म्लेच्छादयस्तव्द्यतिरिक्ता यथाह महाभारते शान्ति पर्वणि १८८ मेऽध्याये ब्रह्मतन्त्रचातुर्वर्ण्यसृष्टिमभिधाय "ब्रह्म चैव परं सृष्टं ये न जानन्ति तेऽद्विजाः। तेषां बहुविधास्त्वन्यास्तत्रतत्रहि जातयः॥ पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातय इति। अर्थस्तु—वेदमेव परं सृष्टं न जानन्ति ते अद्विजाः द्विजविरोधिनः, असुरवत् तेषां बहुविधा जातयः, अन्याश्चातुर्वर्ण्यतत्प्रभवव्यतिरिक्ताः तत्र तत्र देशविशेषेषु वर्त्तन्त इति शेषः। के त इत्याह पिशाचादयस्तत्सदृशामानवभेदाः म्लेच्छाः साहचर्यात्। तत्र तत्र योनिषु जातयो जन्मानीति नीलकण्ठव्याख्यादरेऽपि अन्या इति मूलपदस्य चातुर्वर्ण्यं तत्प्रभवजन्मतो भिन्ना इत्यर्थः। अतएव मनुना दस्युत्वेनोक्ताः। एतेषु मर्त्त्येषु मध्ये ये स्वतःसिद्धहितवन्तः तव्द्यावर्त्तनाय संसारासक्तेति मर्त्त्यविशेषणम्। तथाच येषां हितवदहितमपि भवितुमर्हति तेषां मर्त्त्यानामत्राधिकारः॥

इत्यधिकारिविवेकः।





# धर्म-सिद्धान्तः।

## अथ लोकद्वय विवेकः।

किं तावत् लोकद्वयमत्रोच्यते—अयं लोकः परलोकश्चेति। तत्रायं लोको हि वर्त्तमानभोगारम्भकं जन्म। परलोकश्च जन्मान्तरम्। लोकशब्दस्य जन्मार्थकत्वं असुर्या नामेत्यादि तृतीयमन्त्र व्याख्यायामीशोपनिषद्भाष्ये श्रीशंकराचार्यपादैरुक्तम्। तथाहि—लोकाः कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानीति। प्रेत्यामुत्र प्रेत्यभावादीनि परलोकवचनानि। सूत्रितं हि भगवद्भिः पुनरुत्पत्तिः प्रेत्यभाव इति। (न्यायदर्शनं १ म० अ०, १ म आ०) वर्त्तमानभोगस्थानमयं लोकः, मरणोत्तरभोगस्थानञ्च परलोक इति वा। अयं लोको नास्ति पर इति कठोपनिषद्द्वितीयवल्लीषष्ठमंत्रव्याख्यायामयमेव लोको दृश्यमानः स्त्र्यन्नपानादिविशिष्ट इत्यादि सन्दर्भेण स्थानविशेषस्यापि लोकशब्दार्थतया श्रीशंकराचार्यपादैरनुभावितत्वात्।

पक्षद्वय एव वर्त्तमानत्वजन्मभोगमरणादयो निष्कृष्टलक्षणे चैत्रमैत्रादिव्यक्तिभेदगर्भो निवेशनीयास्तेन चैत्रशरीरावच्छिन्नस्यायं लोको मैत्रशरीरावच्छिन्नस्यात्मनः परलोको भवन्नपि नान्योऽन्यं संकीर्यते। परलोकस्त्रिविधः उत्तममध्यमाधमभेदात् तद्विवरणमग्रे भविष्यति। तत्रायं लोकः प्रत्यक्षादिसिद्धः परलोकप्रमाणन्तु श्रुतिःस्मृतयोऽनुमानञ्च।

तत्र श्रुतयः—अयं पन्था अनुवित्तः पुराण इत्यादयो वामदेवस्य जन्मान्तरसंवादिन ऋग्वेदतृतीयाष्टक पञ्चमाध्यायस्थ पञ्चविंशवर्गीया मन्त्राः, दुर्निर्गमेणाशुचिना प्रसवद्वारेण मातृगर्भान्निर्गन्तुमनिच्छन्तं वामदेवं प्रति इन्द्रस्य तेनैव पथा निर्गन्तुमुपदेशस्ततो गर्भस्थस्यैव वामदेवस्य तम्प्रति स्वीयजन्मान्तरचरितवर्णनमित्यादिस्तेषां मन्त्राणां पिण्डितार्थः। इदं त एकं पर उत एकमित्यादयो बृहदुक्थपुत्रस्य परमधामप्राप्तिप्रार्थनामया ऋग्वेदाष्टमाष्टकप्रथमाध्यायस्थाष्टादशवर्गीया मन्त्राः। एषु हि बृहदुक्थो नाम वामदेवपुत्र आङ्गिरसः. मृतपुत्रस्य सुकृतिमनुसृत्योत्कृष्टस्वर्गतिं सुकृतिलभ्यां प्रार्थयमानः परलोकतदुत्कर्षापकर्षतल्लाभसाधनमावेदयतीति।

यत्ते यमं वैवस्वतं मनो जगाम दूरकम्।
तत्र आवर्त्तयामसीह क्षयाय॥ १॥
यत्ते दिवं यत्पृथिवीं मनो जगाम दूरकम्।
तत्र आवर्त्तयामसीह क्षयाय॥ २॥
यत्ते भूमिं चतुर्भृष्टिं (३) यत्ते चतस्रः प्रदिशः (४)
यत्तेसमुद्रमर्णवम् (५) यत्ते मरीचीः प्रवतः (६)
यत्ते अपोषदोषधीः (७) यत्ते सूर्यं यदुषसम् (८)

इत्यादयो गौपायनार्षा मृतभ्रातुः पुनर्ज्जीवनार्था ऋग्वेदाष्टमाष्टकप्रथमाह्निकविंशवर्गीया मन्त्राः। आवर्त्तयामसि—आवर्त्तयामः। इह क्षयाय वासाय। असमातिर्नामैक्ष्वाको राजा तस्य वन्धुः सुवन्धुः श्रुतबन्धुर्विप्रबन्धुश्चेति चत्वारः पुरोहिता आसन्। ते च गौपायनानामाङ्गिरसाः। स तु राजा तांस्त्यक्त्वा अन्यौ मायाविनावृषी पुरोदधे। ततो वन्ध्वादयः क्रुद्धास्तं राजानमभिचरितवन्तः। एतज् ज्ञात्वा मायाविनौ पुरोहितौ तेषामन्यतमं सुबन्धुं प्रमादप्रसुप्तं प्राणैर्वियोजितवन्तौ शिष्टास्तद्भ्रातरश्चाविनाशप्राप्तिहेतुभूतान् मन्त्रा

निमान् दृष्ट्वा जपन्ति स्म । तत्र मृतभ्रातुर्मनो यमसमीप-द्युलोक-पृथिवी-दिक्-समुद्र-मरीचिमाला-जलौषधि-सूर्यादिषु प्रसक्तं तत्र तत्र जन्मलिङ्गं-सम्भाव्य तच्छरीर एव तदावर्त्तनं पुनर्ज्जीवनहेतुभूतमाशंसन्तस्तद्भ्रातरो विज्ञायन्ते ।

"उच्चा दिवि दक्षिणावन्तो अस्थुर्ये
अश्वदाः सहते सूर्येण ।
हिरण्यदा अमृतत्वं भजन्त" ।

इत्यादि ऋग्वेदाष्टमाष्टकषष्ठाध्यायस्थस्तृतीयवर्गीयो दक्षिणाविशेषदानादुत्तमलोकप्राप्तिप्रतिपादको मन्त्रः । दक्षिणादातारो दिवमधितिष्ठन्ति तत्राश्वदाः सूर्यलोकं हिरण्यदा अमृतत्वमित्यादिर्विशेष इति तदर्थः ।

अपश्यं गोपामनिपद्यमानमा च
परा च पथिभिश्चरन्तम् ।

स सध्रीचीः सविषूचीर्वसान आवरीवर्त्ति भुवनेष्वित्यादिर्जीवस्य नानाजन्मलिङ्गमृग्वेदस्य द्वितीयाष्टकतृतीयाध्यायस्थो विंशवर्गीयोऽष्टमाष्टकाष्टमाध्यायस्थः पञ्चत्रिंशवर्गीयो वा मन्त्रः । अस्यार्थः—गोपां शरीरपालकं जीवम् । अनिपद्यमानं चिरस्थिरम् । पथिभिः धूमादिमार्गैः । पितृयाणेनेति यावत् । आचरन्तम् आगच्छन्तं पराचरन्तं परागच्छन्तं कदाचिदिहागतं कदाचित् पितृयाणस्थम् । सध्रीचीः पुनर्ज्जन्मसदृशीरवस्था विषूचीः विसदृशीश्च वसानः उत्तमाधममध्यमजन्मानि लभमानः भुवनेषु पुनः पुनरावर्त्तते यस्तमपश्यमिति । एतेन जीवस्य नानाजन्मपरिग्रह उक्तः । गोपाम् प्राणम्, पथिभिर्नाडीभिरिति सायनाचार्याः ।

पापसत्त्वे स्वर्गगमनं तत्र पित्रादिसङ्गतिश्च न भवितुमर्हतीति प्रतिपादकः—संगच्छस्व पितृभिः संयमेनेष्टापूर्त्तेन परमे व्योमन् । हित्वा यावद्यमित्यादि ऋग्वेदाष्टमाष्टके षष्ठाध्यायस्थः पञ्चदश वर्गीयो मन्त्रः । हे मदीयपितः, परमे व्योम्नि स्वर्गे इष्टापूर्त्तेन स्वभूतैः पितृभिः यमेन च संगच्छस्व अवद्यं पापं हित्वा त्यक्त्वा इत्यर्थः ।

असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महन इति आत्मघातिनामसुर्यलोकगतिलक्षणपरलोकज्ञापको यजुर्वेदमाध्यन्दिनशाखाचरमाध्यायस्थ औपनिषदो मन्त्रः ।

तद् य इत्थं विदुः ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाण पक्षाद् यान् षडुदङ्ङेति मासांस्तान् । मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति । अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षात् यान् षड दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति । मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति । धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति । तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा य इह कपूयाचरणा अभ्याशो यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा । अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वैतत् तृतीयस्थानमिति छान्दोग्योपनिषदां पञ्चमाध्यायस्थदशमखण्डीयब्राह्मणम् ।

अस्यार्थः—य इत्थं विदुः—ये पञ्चाग्निविदो गृहस्थाः । ये चेमेऽरण्ये । अरण्य शब्दोऽत्र वानप्रस्थपरिव्राज्या—नैष्ठिक ब्रह्मचर्यपरः । तेन वानप्रस्थाः परिव्राजका नैष्ठिकब्रह्मचारिणश्च । श्रद्धातप इत्युपासते—

श्रद्धधानास्तपस्विनश्च। अर्चिरभिमानिनीं देवताम् अभिसंभवन्ति प्रतिपद्यन्ते। अहरादिपदमहराद्यभिमानिदेवतापरम्। आपूर्यमाणपक्षः शुक्लपक्षः, उदङ् उदीचीम्। एतीत्यस्य सवितेति शेषः। यान् षण्मासान् सविता उदीचीं दिशमेति तान् तदात्मकोत्तरायणाभिमानिनीर्देवता अभिसंभवन्तीत्यन्वयः। अमानवः मानव्यां सृष्टौ समुत्पन्नो मानवः स न भवतीत्यमानवः। ग्राम इति गार्हस्थ्यपरम्। इष्टापूर्त्ते दत्तमितीति—इष्टापूर्त्तादिकमुपासते आचरन्ति—ये गृहस्था इष्टापूर्त्तदानादिकार्यपराः ते धूमं धूमाभिमानिनीं देवताम्। अन्यदुक्तक्रमेण बोध्यम्। दक्षिणा दक्षिणां दिशम्। भक्षयन्ति उपभुञ्जते। सोमं प्रतिपन्नान् खलु देवाः पशुभृत्यादिवत् उपभुञ्जते। अभ्रं जलधरमात्रं न तु सेचनसामर्थ्यं तस्यास्ति। मेघस्तु सेचनसमर्थो वर्षुक इत्यभ्रमेघयो रवान्तरभेदः। प्रवर्षतीति। वर्षधारारूपेण पतति। रसशोषणप्रणाल्या व्रीहियवादिमध्यगतास्तद्भावमापद्यन्ते। दुर्निष्प्रपतरं दुर्निष्प्रपततरम्। दुर्निष्प्रपतं दुर्निर्गमम्। व्रीहियवादिभिः सम्मेलनदशापेक्षयाऽतिशयेन दुर्निष्प्रत मन्नभावेन भोक्तृशरीर सम्मेलनम्। यतो भोक्ता रेतः—सिङ् न भवति चेत् रेतः सिग् वयदाऽलब्धपात्रो, लब्धपात्रोऽपि वा यदि सामग्रीविरहादनाहितगर्भस्तत्तावदसौ जीवः पुनर्व्रीह्यादिभावेनावर्त्तेत इति दुर्निर्गमत्वातिशयः रेतोद्वारा गर्भप्रवेशे तु रेतःसिगाकृतिरुत्पद्यते देहीत्याह भूय इति। तथा हि पुरुषात् पुरुषो जायते गोर्गवाकृतिरेव न जात्यन्तराकृति स्तस्माद् युक्तं तद्भूय एव भवतीति। ये तु पापीयांसः चन्द्रमण्डलमनारुह्यैव पापकर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यन्ते ततः क्रमेण मनुष्यादिभावं तेषान्तु नैतद्दुर्निष्प्रपतम्। कस्मात् कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति तदुपभोक्तृनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथाकर्मार्जितं देहान्तरं नवं नवं जलौकावत् संक्रमन्ते सविज्ञाना एव। चन्द्रमण्डलादवरोहन्तस्तु सुप्तवन्नसविज्ञाना भवन्ति। तदानीमपि तेषां सविज्ञानत्वे त्विष्टापूर्त्तादिकारिणां घोरो नरकानुभवश्चन्द्रमण्डलादवरोहणादारभ्य प्राप्तो यावद् ब्राह्मणादि जन्म। तथा च सत्यनर्थायैवेष्टापूर्त्ताद्युपासनं विहितं स्यात्। एवं च कर्मविशेषवशोद्बुद्धसंस्कारेण चन्द्रमण्डलमारोहन्तः सविज्ञानास्तस्मादवरोहन्तश्च निर्विज्ञानाः पापीयांसस्तु संसरणसमयेऽपि सविज्ञाना इत्युक्तम्। 'इह रमणीयं चरणाः' अभ्याशो ह क्षिप्रमेव। कपूयचरणा जुगुप्सितस्वभावाः ये तावदस्मिन् लोके चन्द्रमण्डलप्राप्तेः प्रागवस्थायाम्—रमणीयं विशुद्धं चरणमाचरणं येषां तथाविधाः। क्रौर्यादिरहिता इति यावत्—तेन च विशुद्धभावेनानुमितं सञ्चितशुभादृष्टं तेषामस्तीति रमणीयचरणास्ते। इह लोके क्रौर्यादिमत्त्वेनानुमिताशुभादृष्टाः कपूयचरणाः। अथैतयोरिति। येषां देवयानपितृयानयोरेकतरेणापि न प्रयाणं ते खलु क्षुद्रभूतभावेनासकृदावर्त्तनलक्षणं नरकं प्रतिपद्यन्ते। इदं लक्षणं लिङ्गं स्वरूपञ्च तेन रौरवादिनरकाणां क्षुद्रभूतभावप्राप्त्यनुमितानामपि संग्रहः। भूतानां क्षुद्रत्वञ्चाकृत्या वा प्रकृत्या वा तदुभयेन वेति। तच्च नरकं जायस्व म्रियस्वेति संज्ञान्तरेणाख्यातं तृतीय स्थानम्। जननं मरणं मरणतुल्य दुःखानुभवश्च इत्येवं नारकिणां कालयापना रौरवाद्युत्तीर्णानामपि इहापि दंशमशकादिरूपेण जननम् मरणञ्च नत्वत्र वैधक्रियासुखभोगाश्च भवन्ति। जायस्व म्रियस्वेति परमेश्वरप्रेरणम्। तन्निमित्तेयं कारकसंज्ञा। जनन मरणयो रान्तरालिकदुःखं मरणदुःखसदृशं,नच तदानीं तत्प्रतिकारः शक्यते कर्त्तुं न च तेषां मरणोत्तरमर्चिरादयो वा धूमादयो वा प्रतिपत्तव्याः। जन्मैव नारकं आप्रतिपत्तव्यमिति युक्तं जायस्व म्रियस्वेत्यभिधानम्। आचार्यपादास्तु क्षुद्रजन्तवो हि दंशमशकादिविशेषा जायस्व म्रियस्वेति स्थानभागिनः। तेषामान्तरालिकक्रिया वा भोगो वा नास्ति। जननमरण-क्षणेनैव कालयापना।

तदेतेषा मसकृदावर्त्तनं नरकसंज्ञयाभिहितमिति सिद्धान्तयन्ति । तेषामाशयस्तु इह तथाविधासकृदावर्त्तनरूपनरकभोगहेतुभूतं रौरवादिकमपि जायस्व म्रियस्वेति संज्ञायोग्यं हेतुहेतुमतोरुपचरणात् । तथाविधासकृदावर्त्तनमात्रस्य नरकत्वे मन्वाद्युक्तरौरवादीनामपरिग्रहप्रसङ्गात् । संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् । "स्मरन्ति च" "अपि च सप्तेति" वेदान्तदर्शनीयतृतीयाध्यायप्रथमसूत्रभाष्ये तैरेव तथा प्रतिपादनाच्च ।

इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरञ्चविशन्ति।

इत्याथर्वणमुण्डकोपनिषदां प्रथम मुण्डक द्वितीय खण्डीय दशममन्त्रः ।

कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र इति मुण्डकोपनिषत्तृतीयमुण्डकद्वितीयखण्डीयद्वितीयमन्त्रांशः । कामभिः कामैः । एवमन्याश्रपि श्रुतयस्तत्र तत्र द्रष्टव्याः ।

( शिष्टमग्रे )

---




[ निव०—गीर्वाणवाग्वर्धिनी सभा मन्त्री । ]

श्रूयते 'शास्त्रं शब्दाडम्बरसम्भिन्नमिति' शास्त्रहृदयतोदावहं भर्त्सनवचनं सहृदयमानिनां नव्यशिक्षितानाम् ।

अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ।

इतिन्यायानुसारिणी सैषाऽऽक्षेपसरणिः । यद्यपि "शास्त्रं शास्त्र मिति" सर्वमपि शास्त्रजातमास्कन्दन्ती, साङ्गुलिनिर्देशं न्यायशास्त्रमेव विशेषतः समाक्रामतीति न प्रच्छन्नं स्वच्छमतिषु । श्रूयन्त एव हि ज्ञानलवदुर्विदग्धानामेषां शास्त्रोपरि सर्वथा मात्सर्योत्सारितधिक्कारदग्धफूत्कारा "अविच्छिन्नावच्छेदकतासरणिरविच्छिन्नावच्छेदकतासरणिरिति सन्ततमासमन्तात् । दृष्टमेव हि नः सकलमपि जीवितकालं आंग्लशिक्षार्जने बद्धदीक्षानां कदाचिद्विश्रमावसरे वृत्तान्तपत्रैरभ्यनुज्ञाते काले वराकाणि शास्त्रपत्राणि स्वकरालभ्रुकुटिप्रेषणेन भीषयतां तत्र तत्र कानिचित्स्वेच्छाचारसाधकभ्रमजनकानि द्वित्राणि पद्यानि दृष्ट्वा जग्ध्वा निर्दयं तान्युपघातयतां कलिकालरक्षसां कुक्कुटपादमिश्रायितत्वम् । एतादृशानेवाधिकृत्य कवयः क्रान्तदर्शिनो वदन्तिः—

अधीत्य पातञ्जलमेकरात्रम्
वेदान्तशास्त्राणि दिनत्रयं च ।
मूहूर्तमाघ्राय च जैमिनीयं
समागताः कुक्कुटपादमिश्राः ॥ इति ॥

हन्त ! पण्डितम्मन्यैरेतैर्नव्यशिक्षितैर्मुनित्रयवाणीमकृत्रिमवाणीं वा प्रमाणशिरोमणिं मन्यमानेषु केषु वा शास्त्रेषु स्वनिरङ्कुशाहङ्कारो नोट्टङ्कितः । किंवा धर्मशास्त्रं नान्यथयितम् । का वा श्रुतिर्नान्यथा ख्यापिता । किन्तु शपे विद्वद्भ्यो भवद्भ्यः, अप्येकोपि कोऽपि बभूव भवति वा एतेषु दुर्मतिषु यो हि अविच्छिन्नावच्छेदकतासरणीं स्वहस्तमाक्षिपेत् । कः करं प्रसारयेत् पन्नगरत्नसूचये ? सेयमविच्छिन्नावच्छेदकतासरणीदूरभिन्ना तन्मतीनाम्।

अत्र कुण्ठिता तेषां मतिर्न प्रवेशायापि पारयते । सैषाऽविच्छिन्नावच्छेदकतासरणिर्दृष्टस्योपरि दृढं निबद्धा शब्दमात्रप्रमाणकान्यन्यानि शास्त्राणीव न लेशमपि क्लेशमन्तरा केवलेन अश्रद्धामहिम्नैव परिस्पन्दयितुमपि न प्रभूयते । यद्यपि न्यायशास्त्रस्यापि मान्यं शास्त्रमन्यच्छास्त्रमेव तथापि कथमन्यच्छास्त्रं श्रुतिशिरोभूतमपि मान्यशास्त्रं भवेत् अन्यायशास्त्रस्य शास्त्राण्यधिजिगांसोः। अत एवेदं शास्त्रं शास्त्रान्तराभ्यसनयोग्यतया युनक्तीति प्रस्तूयते जरन्नैयायिकैः । हन्त जितमेवेदं पण्डितमण्डलं प्रतिनिविष्टमूर्खदुर्मुखैरेतैस्तदियदेव तावदवधेयम्।

क्रूराःकृतोऽञ्जलिरयं बलिरेष दत्तः
कायो मया प्रहरतात्र यथाभिलाषम् ।
अभ्यर्थये वितथवाङ्मयपांसुवर्षैः
मा माविलीकुरुत कीर्तिनदीः परेषाम् ॥

अस्तु, प्रकृतमनुसरामः । शासनाच्छास्त्रमिति त्रयी व्यवह्रियते ' तत्र शब्दाडम्बरो ऽदृष्टस्वर्गादेरसत्वाक्षेपकः—

अग्निहोत्रं त्रयो वेदास्त्रिदण्ड् भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

इत्यादिनोद्भावितः । एवं अभानाद्याक्षेपकोप्यन्यत्र । आन्वीक्षिकीप्रभृतिष्वपि शास्त्रमिति गौणो व्यवहारः । कस्यापि वस्तुनः उद्देश्यलक्षणपरीक्षालक्षणस्वरूपप्रामाण्यादिप्रतिपादकः शब्दः शास्त्रमिति व्यवह्रियते । तत्र नीरसत्वनिस्सारत्वादिः शब्दाडम्बर इत्याक्षिप्यते । तदेष श्लोकः—

अतिविरसमसारं मानवार्ताविहीनम्
प्रविततबहुवेलप्रक्रियाजालदुःस्थम् ।
उदधिसममतन्त्रं तन्त्रमेतद्वदन्ति
प्रखलजडधियो ये तेऽनुकम्प्यन्त एते ॥इति॥

व्यवहार प्रसिद्धैरेव शब्दैः प्रतिपादयितुं शक्यं वस्तु अवच्छेदकावच्छिन्नादि शब्दबहुलैर्दुर्बोधलम्बायमानवाक्यैः प्रतिपाद्य प्रपञ्चवञ्चनार्थं रचिता काचन माया शास्त्रेष्वाडम्बर इति तत्र कुण्ठितमतयो नव्यशिक्षिताः । तदेवं बहुमुख एष आक्षेपो जनान् शास्त्रान्निवर्तयितुं तत्राविश्वासमुत्पादयितुं तेन स्वालस्याज्ञानादिदोषान् निगूह्य स्वाग्रहं स्वप्रतिष्ठां साधयितुं मूर्खैरुपक्षिप्यमाणो शास्त्रेषु यो यः प्रवर्तनोपयोगी गुणस्तं तमपलपतीतिप्राप्तम् । तत्रायं विवेकः—

यदि आक्षेपकस्य केनाप्यप्रधृष्यो विश्वासः शास्त्रे शब्दाडम्बर एवेति तर्हि दूरे वयं तस्माद्वर्तामहे । जितं तेन भुवनत्रयं विना प्रयत्नम् । अथ चेन्नैवं तर्हितन्मैवम् । शास्त्रे सारं, रसम्, अन्यदपि यच्च किंचिच्छास्त्रमाहात्म्यं सचे त्साक्षादनुबुभूषति तदोच्यते—सखे ! शास्त्रतत्वजिज्ञासया प्रयत्नात्तदधीष्व समाहितस्तदुक्तमनुतिष्ठ च । नहि स्वेन नानुभूयत इत्येतावतैव परैरनुभूयमानं किंचिदपलापमर्हति । प्रवर्तस्व तदध्ययने महाजनप्रवृत्त्या तन्महत्वं तत्सारवत्वं चानुमाय। यदि च विदितवेदितव्यानां शब्दे श्रद्धत्से तर्हीत्थं शास्त्रमाहात्म्यं प्रतिपादितमभियुक्तैः । तथा हि—

य एते घोषयन्ति शास्त्रे शब्दाडम्बरमात्रमिति तेषामेव प्रखलजडधियामनुकम्पार्थं शास्त्राणि प्रथन्ते । तत्र विवेचितं वस्तुजातं तत्रोद्दिष्टं स्वर्गादिप्रयोजनं च न गगनकुसुमायमानम् । प्रामाणिकानां भाति तत्समस्तं तस्मादस्ति तत्समस्तम् । नन्दन्ति च तत्र विद्वांसः ।

ते खलु विद्वांसः साक्षात्कृतधर्माणो ऽशेषविशेषरूपेण याथार्थ्येन वस्तुतत्वं विविच्य निर्धारितवन्तस्तत्कदापि मदमोहहर्षशोकादिमानसैर्दोषैर्न वञ्च्यन्ते तेभ्यः सदाऽऽत्मानं रक्षन्ति । न ते क्व चिन्मुह्यन्ति । न माद्यन्ति हर्षेषु । नसीदन्ति शोकेषु । एत एव हि मा नसा दोषा अशास्त्रं प्राकृतं जनं प्रच्यावयन्ति सुकृतात् । एत एव वस्तुतो वञ्चका लोके । परस्य परो वञ्चक इति प्रवादमात्रम् । एतैरेव मदमोहाद्यैः—मदेन नहुषः मोहेनामृतमथने दानवाः, हर्षेण वातापिः, कामेन पौलस्त्यः लोभेन कौरवः, एवमादयो लयं प्रापिताः । तन्माऽहमे-

तैर्वञ्चितोभूयासमिति अशेषविशेषरूपेण याथार्थ्येन वस्तुतत्त्वं प्रमित्सतो जनस्य किमन्यच्छरणं विना शास्त्रात्। शास्त्रमन्तरा केनोपायेन शक्येयं प्रमितिः, नहि खलु चर्मचक्षुषा कथञ्चन कस्यापि वस्तुनो देशान्तरकालान्तरव्यवच्छिन्नमशेषविशेषं साक्षात्कर्तुं वर्षसहस्रेणापि शक्येत। अथ का कथा वस्तुनो न्यूनातिरिक्तव्यवच्छेदस्य।

दूरापास्तं चानुमानम्। को वा पुनरनुमाने हेतुः? कदाचित् तथा प्रयतमानोऽपि प्राकृतः परस्परं संकलितेऽस्मिन्प्रपञ्चे तत्तद्वस्तुस्वरूपं लक्षणमन्तरा कथं वा विवेचयेत्। कथञ्चिद्विवेकेऽपि सधर्माणो विधर्माणश्च पदार्थान् कथमवधारयेत्?

शास्त्रं हि उद्देशलक्षणपरीक्षाग्रन्थाद्यात्मकम्, उद्देशग्रन्थो न्यूनातिरिक्तव्यच्छेदपूर्वकम् पक्षं सम्बोध्य तन्त्रे अतन्त्रताधियं, लक्षणं वस्तुतत्वं विविच्य बोधयत् मोहमदादिकम्, परीक्षा च सधर्मविधर्मनिर्धारणेऽपाटवं चापाकरोति। कथमन्यथा पुरुषः कर्तव्ये प्रवर्ततां, निवर्ततां चाकर्तव्यात्। कथं वा दमयतां हर्षाद्युद्रेकं, कथं च शोकातिरेकेऽपि प्रोत्सहताम्। नहि शोकेन सीदतः हर्षाद्यैरुन्माद्यतः स्वकर्तव्येऽप्रवर्तमानस्याकर्तव्यादनिवर्तमानस्य दृश्यते क्वचिच्छ्रेयःप्राप्तिः, यद्यपि सर्वस्य न सर्वपदार्थानामशेषविशेषरूपेण ज्ञानमावश्यकम्, तथापि संसारे यो हि स्वसारवत्वमपेक्षते यश्चोपेक्षते तयोरुभयोस्तदावश्यकता। कथं वैराज्यम् वैराग्यं वा यथार्थतोऽविदिताशेषविशेषवस्तुतत्वस्य सम्भाव्येत। अतएव तत्वज्ञानान्निःश्रेयसाधिगम इत्युक्तम्। तस्माच्छास्त्रं श्रेयसे प्रेयसे च अवश्यमपरिहार्यं साधनम्।

शास्त्रेषु दोषमपि विवक्षता यदुद्भावितं क्लेशसाध्यं तदिति सत्यमेवैतत्। तद्धि भूषणं शास्त्रस्य येन शास्त्रज्ञा असाधारणा भवन्ति। क्लेशसाध्यस्य सिद्धिर्हि लोके पुरुषं निर्माति। अवोधकशब्दैर्वचनमिति हन्त! किमिदमपलपितम्। यत्र तथावचनं निग्रहस्थानमित्यङ्गीकृतं तत्र कथमेतत्सम्भावनापि? तस्मिन् दुर्बोधे वस्तुस्वाभाव्ये किमराद्धं पण्डितमण्डनैः। तेऽपि खलु विद्वांसो महता क्लेशेन शास्त्राणि दृष्टवन्तः। उच्यते हि:—

ब्रह्मादयो ब्रह्महिताय तप्त्वा परः सहस्रं शरदां तपांसि।

एतान्यदर्शन् गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि।

निरुपाधिभिरस्मासु केवलमनुजिघृक्षया प्रेम्णा न्यासीकृते सर्वोत्कर्षप्रापके शास्त्रवर्ग श्रद्धया व्यसनीभवितव्ये तन्निन्दायां जिह्वा प्रह्वा दुरभिमानिनामेषां नूतनानां भवतीति हा! शोचनीयम् इति।

---

## हा हन्त! हन्त! महान् वज्रपातः।

द्वारवङ्गाधिपति ब्राह्मणकुलतिलक सनातनधर्मधुरन्धर भारतधर्मदिवाकर महाराजाधिराज श्रीरमेश्वरसिंह बहादुर महोदयानां स्वर्गवासः।

अयि पाठकाः! अद्य श्रीमहाराजाधिराजानां भारतधर्मदिवाकरश्रीरमेश्वरसिंहबहादुरद्वारवङ्गाधिपतीनां स्वर्गगमनवार्तां श्रुत्वा सर्वेषामेव धर्मप्राणानामास्तिकजनानां यादृशी व्यथा समुत्पन्ना तां वर्णयितुं लेखनी कुण्ठिता भवति। सत्यमद्य भारतं वर्षं पुरुषधौरेयेण सनातनधर्मधुरन्धरेण रहितं कां दशामुपयास्यति न वयमनुमातुं शक्नुमः। पृथिव्यां सम्प्रत्यपि विद्यन्तेऽनेके राजानः परमस्माकं श्रोत्रियकुलतिलकस्य श्रीद्वारवङ्गाधिपतेस्तुलामधिरोढुं समर्थो नाभवत् कोपि पृथ्वीपालः। अयं हि महाराजः प्रख्यातयशसां स्वनामधन्यानां भगीरथठक्कुराणां वंशे जन्म गृहीत्वा स्वकीयानितरसाधारणगुणगणैर्वंशं गौरवितं चकार। अनेन महात्मना यानि यानि लोकोपकारकराणि कार्याणि कृतानि तदर्थं भारतं वर्षं सर्वदा कृतज्ञमेव स्थास्यति।

तत्रापि ब्राह्मणमहासम्मेलनं कृतज्ञतापाशेन सर्वदा बद्धमेव स्थास्यति। एतस्य महाराजस्यान्तिमं कार्यं ब्राह्मणमहासम्मेलनसभापतित्वमेव बभूव, तस्मिन्नपि समये शरीरे दौर्बल्यमसाधारणमेवासीत्। परन्तु धर्मविषये श्रद्धया जराजर्जरिततनुरपि दौर्बल्यादिकमविगणय्य महतोत्साहेन दरभङ्गाराजधानीत आयुष्मद्भ्यां कुमाराभ्यां राज्ञीभिः परिजनैश्च विभवानुरूपैरनेकैर्धर्मप्राणैर्विद्वद्भिश्च साकं स्वतन्त्र ( स्पेशलट्रेन ) धूमशकटद्वारा काशीम्प्राप्तवान्। धूमशकटादवतीर्य यदासौ धूमशकटावतरणस्थानएवासनपरिग्रहं विधायासङ्ख्यैर्ब्राह्मणपण्डितैः स्वागताभिनन्दनपरायणैः सोत्साहं सविशेषं माल्यादिपरिधापनेन पूजितस्तदा यान् शब्दानुच्चारयामास सकरुणं, ते शब्दा इदानीमस्माकं मनांसि रोदयन्ति, एतानि तदीयानि वाक्यानि-अहो ब्राह्मणपण्डिता भूदेवाः! काशीस्था विद्वांसः! मयाऽसकृदेव श्रीमतां पुरस्तादनेकधा निवेदनानि कृतानि। शीघ्रं श्रीमद्भिः सर्वैः सङ्घटनं विधाय सनातनधर्मस्योपरिजायमानानाक्षेपानाघातांश्च निराकृत्य स्वीया प्रतिष्ठा रक्षणीयेति, परन्तु श्रीमद्भिः सर्वैर्मदीयानि वाक्यानि समवधानपूर्वकं न श्रुतानि। भवतु नाम इदानीमपि यच्छ्रीमन्तः सर्वेपि प्रबुद्धा ब्राह्मणमहासम्मेलननामकं बृहदनुष्ठानं कर्तुं सन्नद्धास्तेन नितरामहमिदानीं सन्तोषमनुभवामि। यदि नामेतः पञ्चषवत्सरेभ्यः पूर्वमेव श्रीमन्तः प्रबुद्धा अभविष्यन्नेदृशीं दुर्दशामन्वभविष्यन्। अस्तुनाम, श्रीजगदीश्वरानुग्रहेणेदानीमपि श्रीमद्भिः सर्वैरपि सम्भूय सनातनधर्मस्य रक्षणाय ब्राह्मणानां ब्राह्मण्यस्य च रक्षणाय यदि प्रयतिष्यतेऽवश्यमेव सिद्धिर्भविष्यति। अहमपि यावच्छक्ति श्रीमतामाज्ञानुसारं कार्यं कर्तुं सन्नद्धोऽस्मि इत्युक्त्वाऽऽनन्दाश्रुभिः पूरितनेत्रः किमपि व्याहर्तुं नाशक्नोत्। तदानीं सर्वेपि समुपस्थिता ब्राह्मणपण्डितास्तदीयां सनातनधर्मश्रद्धां प्रत्यक्षीकृत्य विस्मिताः सन्त एतादृशस्य सभापतेर्लाभेन कृतकृत्यानात्मनो मेनिरे। असमर्थोऽप्यशक्तोपि सर्वेषामस्माकं सन्तोषवर्द्धनाय प्रोत्साहनाय चास्मदीयामर्थनां स्वीकृत्य वृत्तायां शोभायात्रायां यत्र हि सर्वे धर्माचार्या महत्याऽऽरभट्या परिजनादिभिः स्वैः स्वैश्चिन्हैः समलङ्कृता निरगमन् मोटरयानमधिरुह्य धर्मप्राणो महाराजोपि निर्गम्य तां शोभायात्रामलङ्कृतवान्। कीदृशी चाऽस्य धर्मप्राणताऽऽसीदनेनैव सहृदयैरनुमीयताम्। दिनद्वयं सम्मेलनेपि सभापतिपदमङ्गीकृत्य कार्यं सर्वं सम्यक्सम्पादयितुं न कथमपि कुण्ठितोऽभवत् इति महदाश्चर्यम्। सभायामेव परिश्रमविशेषेण जनानामसङ्ख्यानां संमर्देन चातपाधिक्येन च तदानीं छर्दनादिकमपि सञ्जातं तथापि तान्क्लेशानविगणय्यैव सम्मेलनकार्यकर्तॄणां तादृशोत्साहस्याभावेपि स्वयमेव महाराजेन वृथाऽकिञ्चित्करा भूयांसः प्रस्तावाः किमर्थं क्रियन्ते मुख्योऽत्यन्तमुपयुक्तोऽखिलभारतवर्षीयसंस्कृतविश्वविद्यालयप्रस्तावः किमर्थं न क्रियते? प्रथमतस्तस्य प्रस्तावः क्रियताम् पश्चादन्यविषस्य।

संस्कृतविश्वविद्यालयस्य कृते पञ्चाशल्लक्षपरिमिता मुद्रा अपेक्ष्यन्ते। तत्राप्यहमेव शुभकार्यस्यास्य स्वस्तिवाचनिकं संविधातुं प्रागेव पञ्चलक्षमितानि रूप्यकाणि दातुं प्रतिजानानो भवतोऽपि समभ्यर्थये—भवन्तः सर्वे सन्नद्धाः सन्तोऽवशिष्टं चतुष्पञ्चाशल्लक्षपरिमितं धनं प्राणानपि पणीकृत्य संग्रहीतुं प्रयतन्ताम् इति। अहो महदाश्चर्यकरमेतद् यदेतान्यक्षराण्युच्चारयत एवास्य महाभागस्य महासम्मेलने समुपस्थिता अन्येऽपि उदारमतयो धर्माचार्याः प्रस्तावमेनं सहर्षं स्वीकृतवन्तः प्रतिज्ञातवन्तश्च विशिष्टं साहाय्यं विधातुम्। इत्थमेव संस्कृतविश्वविद्यालयस्य भित्तिस्थापनं जातम्। यदि कदापि प्रस्तुतोऽयं विश्वविद्यालयः सुदृढभित्तिकः स्वात्मलाभमधिगच्छेत् तदा सर्वमेवैतत्कर्मफलं तस्मिन्नेव महापुरुषधौरेये पर्यवस्येदिति निःसंशयमुद्घोषयामः। वयमत्र तत्रभवतो मैथिलस्य राजर्षेर्जीवनवृत्तं संक्षेपतः किञ्चिन्निवेद्य प्रबन्धमेनमुपसंहरिष्यामः।

१८६० तमेशवीयवर्षे जनवरीमासस्य षोडशदिवसे शुभमुहूर्तेऽगणितशुभकर्मणामनुष्ठाता श्रीमान् द्वारवंगेश्वरोऽस्माकं रमेश्वरः सकलगुणाकरस्य पितुर्महेश्वरस्य जनन्याश्चापरिमितं मुदमुद्वहन् तदानीं झन्झारपुरस्थितं राजकुलं समुज्वलयन् जन्म लेभे। जीवत्येव जनके महाराजे महेश्वरे ज्यायान् पुत्रः स्वर्गमारुरोह। सुविदितयशाः सतामग्रणीर्मध्यमो महाराजः श्रीमान् लक्ष्मीश्वरसिंहमहोदयः कनिष्ठश्चायमस्माकं रमेश्वरः शैशव एव पितृहीनोऽभवत्। अकाण्ड एव पितर्युपरते द्वारवंगराज्यं राजकीयशासनाधीनं ( कोर्ट् अव् वार्ड) जातम्। तदधीनावेव भ्रातरावेतौ शैशवमत्यत्राह्यताम्। सुविदितमेतद्यत् पितृहीनानां बालकानां विशेषतो राजवंशोत्पन्नानां समयो वृथैव व्यत्येति, परमेतौ भ्रातरौ महताऽध्यवसायेन स्वल्पमपि समयं निरर्थकं नात्यक्रामयताम्।

महाराजयोरनयोरध्ययनं दरभङ्गानगरे मुजफ्फरपुरे वाराणस्यां राजकीयविद्यालये च निरवर्तिष्ट। वयसा कनीयसोऽप्यस्य महाराजरमेश्वरस्य तादृशः कश्चनान्यविलक्षणः प्राक्तनः संस्कार आसीत् येनायं द्वादश एव वर्षे कलिकाताविश्वविद्यालयीयप्रवेशिकापरीक्षामुदतरत्। संस्कृतभाषायामत्रभवतः परं प्रावीण्यमासीत्। विद्वत्सु च महती श्रद्धा व्यलसत्।

एवं गच्छता कालेन यदा मध्यमो महाराजः श्रीमान् लक्ष्मीश्वरः प्राप्तवयाः सिंहासनमारुरोह तदाऽस्माकं रमेश्वरः प्राचां नियमानुसारेण 'वछौर' प्रदेशस्य प्रभुरभवत्। तस्मिन्नेव समयेऽनेन सुप्रसिद्धे राजनगरे विभवानुरूपः प्रासादो निरमायि, यदेव राजनगरमधुना समृद्धिमहती द्वारवंगराजधानी समपद्यत।

१८७७ ईशवीयवर्षे राजप्रतिनिधिना लर्डलिटन महोदयेन राजकीयशासनविभागे मण्डलशासकपदे ( मजिष्ट्रेट ) नियुक्तोऽयं क्रमेण दरभंगा छपरा भागलपुरेषु सहकारिमण्डलशासकोऽभवत्। अत्रभवतः सर्वजनहितकारिण्या देशसेवया अनन्यसाधारणयोग्यतया च मुग्धान्तःकरणेन राजप्रतिनिधिना वंगीयव्यवस्थापकसभायाः सदस्यत्वेन परिगृहीतोऽयं तथा तत्कार्यं निरवाहयद् यथा १८८६ ईश्वीयवर्षे राजाबहादुरेत्युपाधिना सम्राट्प्रदत्तेन समलंकृतोऽभवत्। इतोऽनन्तरञ्च बहुभिः कार्यैः स्वयोग्यतायाः परिचयः प्रदत्तोऽनेन। शारदसुधाकरस्य कौमुदीव समन्तादस्य कीर्त्तिः प्रसारिताऽभवत्। १८९८ तमेशवीयवर्षे ज्येष्ठस्य भ्रातुर्महाराजस्य लक्ष्मीश्वरसिंहमहोदयस्य परलोकप्राप्त्या महाराजोऽयं रमेश्वरः सिंहासनमधिरुह्य न्यायेन धर्मेण दक्षतया च राज्यं प्रजाश्च पर्यपालयत्। वंगीयव्यवस्थापकसभासदस्यै रत्रभवान् पञ्चशः प्रधानरिषपदि ( सुप्रीम कौन्सिल् ) सदस्यत्वेन प्रेषितः सप्तकृत्वश्च ब्रिटिश इण्डियन एसोसियेशन् सभायाः सभापतिपदमध्यतिष्ठत्। १९०० ई० वर्षे भारतशासकैः "कैसरई हिन्द" नामकं स्वर्णपदकमस्मै प्रदत्तम्। १९०२ ई० वर्षे शासनपरिषदः ( पुलिस कमिशन ) सदस्यो भूत्वा भारतवर्षस्य प्रति नगरं परिभ्रमन् तत्परिषदो विवरणं निर्भीकतया स्वातन्त्र्येणच प्राकाशयत्। तस्मिन्नेव वर्षे महाराजोयं "के. सी. आई. ई." इत्युपाधिविभूषितोऽभवत्। १९०७ ई० वर्षे महाराजबहादुरेति वंशपराम्परागतमुपाधिं, १९१५ वर्षे च "जी. सी. आई. ई. त्युपाधिमध्यगच्छत्। तदनीन्तनेषु भारतीयेष्वयमेव तावत् प्रथमः सदस्यः प्रान्तीयराज्यशासकानां कार्यकारिसमितेः। १९१८ ई० वर्षे के. पी. त्युपाधिना १९२० वर्षे च वंशपराम्परागतेन महाराजाधिराजेत्युपाधिना सम्मानितोऽसौ महाराजः शासनसंस्कारव्यवस्थानुसारेण १९२० वर्षे तथा १९२५ ई० वर्षे च राजकीयप्रधानपरिषदः सदस्योऽभवत्।

शिक्षोन्नतिविषयेऽत्रभवतो यावानुद्योग उत्साहश्च स तु नान्यस्याऽवलोकितः। संस्कृतशिक्षायाः कृते बहु

प्रयतितमनेन। दरभंगानगरे श्रीरमेश्वरलतानाम्नी पाठशाला, दरभंगामण्डलान्तर्गते लोहानानामक-स्थाने च श्रीमहेश्वरलतानाम्नी पाठशाला महाराजस्य संस्कृतशिक्षाया मनुरागस्य परिचायिका। एतदतिरिक्ता भारतवर्षस्य विभिन्नप्रदेशेष्वपि बहवो विद्यालया अनेन संस्थापिताः। वाराणसीहिन्दूविश्व-विद्यालयोऽपि तत्रभवतः शिक्षानुरागस्य परं निदर्शनम्। हिन्दूविश्वविद्यालयस्य संस्थापनेऽचिन्तितपूर्वः परिश्र-मोऽङ्गीकृतो महाराजेनेति कस्याविदितमेतत्? यद्ययं महाराजः भिक्षापात्रं समादाय प्रतिनगरं प्रतिग्रामं भिक्षां नाकरिष्यन्नैवायंविश्वविद्यालयः सर्वेषां पुरतः प्रतिष्ठितोऽभविष्यत्। विहारोत्कल संस्कृतसमितेः सभापतिपदमनेनैव समलंकृतम्। हरिद्वारे प्रतिष्ठितमृषिकुलमेतस्यैव महापुरुषस्य साहा-य्येन प्रचलति। लाहोरस्थसनातनधर्मकालेजप्रति-ष्ठायां महाराजेन ७५०००) पञ्चसप्ततिसहस्रं रूप्य-काणां प्रदत्तम्। कलिकाता नगरे वर्त्तमानाया महा-कालीपाठशालायाः संस्थापकोऽयमेव। तत्रैव निर्म्मितो 'दरभङ्गा बिलिडंग्' नामा महान् सौध आप्र-लयं महाराजस्य शिक्षोन्नतौ दानमाहात्म्यं प्रचारयिष्यति पंचलक्षव्ययेन दरभङ्गानगरे चिकित्साविद्यालयः (मेडिकल स्कूल) संस्थापितः कतिपये उच्चाङ्गलविद्या-लयाः स्वराज्ये संस्थापिताः, मातृभाषाशिक्षार्थञ्च "वर्नाकुलर स्कूल" संज्ञिकाः पाठशाला अन्तरान्तरा निवेशिताः सनातनधर्मरक्षायै महाराजेन न खलु स्वल्पोऽप्युपायोऽवशेषितः। सनातनधर्मावलम्बिनां गौरवस्थानं श्रीभारतधर्ममहामण्डलम्। तस्यापि कर्ण-धारो महाराज एव। अखिलभारतवर्षीयब्राह्मण-महासम्मेलनस्य, मैथिलीमहासभाया भारतीयसंगीत समाजस्य, अखिलभारतवर्षीयमठाधीशसम्मेलनस्य, शिमलासनातनधर्मसभायाश्च सभापतिधुरमेकएव महाराजोऽधारयत्। भारते वर्त्तमानानां बह्वीनां गोशा-लानां संरक्षकेण महाराजेन भूकम्पादिना पतितानां जीर्णानां वा बहूनां देवमन्दिराणां बहुलक्षव्ययेन संस्का-रो विहितः, बहुषु तीर्थेषु बहुषु नगरेषु च बहूनि मन्दि-राणि निर्माय संस्थापितानि। अद्य यावदनेन महाराजेन सार्द्धकोटिपरिमिता मुद्राधर्मरक्षार्थं व्ययीकृताः। महापुरुषमेनं विहाय कोऽन्यः कराले कलिकाले धर्मरक्षार्थं चेष्टमानआसीत्। एतादृशस्य वदान्य-श्रेष्ठस्य सनातनधर्मरक्षैकदीक्षितस्य महाराजस्य परलो-कगमनेन कस्य नाम धर्मप्राणस्य सचेततो मानसं दुःखेन न परिभूयेत। तथापि किं करणीयम्। नहीदं स्व-वशम्। नियतिर्हि बलीयसी। कोहि नाम तामन्यथयेत्। सर्वथापि नाथं शोच्योमहाराजः। परलोके विशिष्टमेव स्थानमनेनाधिकृतमित्यत्र नास्तिसन्देहः। केवलमुत्तरा-धिकारी श्रीमान् श्रीकामेश्वरसिंहमहाराजःसम्बोद्ध्यते यदितः परमनुशोचनया नास्ति प्रयोजनम्। पित्रेवभवताऽपि धर्मेण न्यायेन च प्रजा परिपाल्याः। पितुः प्राणादपिप्रेयान् सनातनोधर्मोरक्षणीयः। एवं प्राचीनमर्यादायांरक्षितायां भवन्तमवश्यमेव परमेश्वरोरक्षिष्यतीतिकिमधिकेन।



# सनातनधर्मानुयायिभिरवश्यं धर्मरक्षणार्थं प्रयतितव्यम्

सम्प्रति भारतवर्षीयाः प्रायोऽस्मदीया एव ब्राह्मणक्षत्रियवैश्यशूद्रप्रभृतयः परदेशीयशिक्षया कलुषितान्तरङ्गाः स्वधर्मं सकलश्रेयोनिदानमपि नाधुनातनपरिस्थित्यनुसारेण समीहितसाधनमिति मन्यमानाः पशुप्रायैर्मनुजापसदैरनाघ्रातवेदशास्त्रगन्धैः परदेशीयैरुद्भावितं सर्वथा बलवदनिष्टसाधनमधर्मं स्वाभिलषितप्राप्तिकरं मत्वा पूर्वाचार्यपरम्परया परिप्राप्तां धर्ममर्यादामुल्लङ्घ्य स्वैरं विहरन्तः सनातनं धर्मं विलोपयितुमिच्छन्तः सदाचारपरायणानास्तिकानवलोक्योपहसन्ति तदीयधर्माचरणे विघ्नानप्युत्पादयन्ति । एवंविधानामेव मुष्टिमेयानामपि सतां विनयादिशून्यानामकाण्डताण्डवं धाष्टर्यं साहसञ्च विलोक्य विस्मिता भीताश्च सनातनधर्मीयाः केचन स्वयं धर्मप्रचारायाऽप्रयतमानाः सनातनधर्मरक्षायै प्रयतमानानित्थमुपदिशन्ति—"अहो ! किमर्थं भवद्भिरित्थं प्रयत्यते, नानेन प्रयत्नेन किमपि फलं भवितुमर्हति, भगवता व्यासेनैव भागवतादिग्रन्थेषु पूर्वतएव निरूपितं वर्तते यत्कलियुगे एवंविधा दुराचाराः कलिपुरुषा उत्पद्य सनातनं धर्मं विनाशयिष्यन्ति, शिश्नोदरपरायणाः सर्वे स्वपूर्वजान्विनिन्दन्तो न भगवतः सनातनधर्ममूलस्यवेदस्य प्रामाण्यं कथमप्यूरीकरिष्यन्ति, कुतस्तरां स्मृतीतिहासपुराणादिप्रामाण्यम् । यदीश्वरेच्छयैव सनातनधर्मस्य विनाशोऽवश्यम्भावी, तर्हि सनातनधर्मीयाणां भवतां प्रयत्नेन किम्फलं भविष्यति । त्यज्यतां वृथाश्रमः । यद्यद्भविष्यति तत्तदवलोक्यताम्, ग्रीष्मर्तौ तपति भास्वति को नाम तत्तापेन तप्तो न स्यात् । यदि नाम कश्चित्तदानीं सूर्यकिरणानां प्रखरतां शमयितुं चेष्टेत नूनं स लोकैरुपहास्यएव भवेत्, देशं कालमवस्थां च परिज्ञायैव समीहितं सिषाधयिषता साधनान्यनुष्ठेयानि, इतरथा वालुकातस्तैलनिस्सारणार्थं प्रयतमानस्येव गतिर्भवे" दिति सनातनधर्मीयाएव केचनालस्योपहता आत्मनो दोषं निगूहितुमित्थमुद्गिरन्ति। तान्प्रति ब्रूमः । अयि भोः ! सत्यमिदमुच्यते भवद्भिर्यद्ग्रीष्मर्तौ सूर्यकिरणानां प्रखरतां शमयितुं न कस्यापि सामर्थ्यम् । परं तत्तापतः स्वात्मनोरक्षणमसम्भावितमिति तु वयं न मृष्यामहे । अवधारयन्तु श्रीमन्तः काश्यादिप्रदेशेषु ग्रीष्मर्तौ तपनाधिक्ये सति तत्रत्या जनाः किमाचरन्ति—स्वात्मानं गोपायितुं सर्वेपि यथाशक्ति चेष्टन्तएव । ये नाम धनिकास्ते ग्रीष्मागमनं विलोक्यैव तं सहस्रभानुभानुसन्तप्तं प्रदेशं सहसा परित्यज्य हिमालयादिप्रदेशं गत्वा यत्र लेशतोपि न घर्मबाधा, प्रत्युत शैत्यस्यैवाधिक्यं तादृशं देशं समाश्रित्य स्वात्मानं रक्षन्ति । ये चैतावन्तं धनव्ययं कर्तुमसमर्थास्ते ततोऽपि सन्निकृष्टप्रदेशमल्पधनव्ययेनैवावस्थानयोग्यमन्विष्य तत्रैव गत्वा सुखेन कालं यापयित्वा व्यतीते ग्रीष्मर्तावुद्भूते च वर्षर्तौ पुनः स्वकीयं देशम्प्राप्नुवन्ति । ये च पुनरेतावद्व्ययं कर्तुमसमर्थास्ते तु स्वकीय एव प्रदेशेऽवस्थायोशीरादिनिर्मिताः स्थूला जवनिका विनिर्माय तास्वनवरतं वारिधाराप्रवर्षणार्थं तालवृन्तादिव्यजनैर्वीजयितुं च भृत्यं विनियोज्य कथञ्चिदातपतः

स्वात्मानं गोपायन्ति । येषां पुनर्नैतावदपि सामर्थ्यं ते गृहस्य प्रथमे तलएव वसन्तः सूर्यरश्मिसम्पर्कशून्य तया तत्स्थलस्य न तापं लभन्ते । येषां नैवंविधगृहलाभस्तेपि कथञ्चिदनातपप्रदेशेऽवस्थायरक्षन्त्यात्मानम् । अन्ततो वृक्षच्छायां पर्णकुटीं तृणकुटीं मातपत्रच्छायां वा समाश्रित्य तापबाधातोऽवन्त्येवात्मानम् । सर्वथा तापप्रशमनाय सामग्रीविकलोपि पटेन स्वशिरः प्रच्छाद्यापि रक्षत्यात्मानम् । तद्रहितोपि हस्ताभ्यां स्वशिरः प्रच्छाद्य तापानोदनाय प्रयतत एव । यथा यथा यादृशोजनस्तन्निरासाय चेष्टते तादृशोजनस्साधनतारतम्यानुसारेण फलं लभत एव, न पुनर्वितथप्रयत्नो भवति । न वा कश्चिदित्थमपि मनुते कोहिनामैतस्मात्सन्तापान्मुच्येतेश्वरेच्छया प्रावृड्‌दासमायास्यति तदैव खलु ग्रीष्मबाधा व्यपैष्यति किमिदानीं तन्निरासप्रयासेन, त्यज्यतां परिश्रमः सन्तप्तवालुकानिकर एव गत्वाऽवस्थानं कर्तव्यमिति । नवा तन्निवारणपरायणाञ्जनानित्थमुपदिशति । किमर्थं भवद्भिः प्रयत्यते किमनेन स्यात् स्थीयतां तूष्णीमेव । यद्भावि तदवश्यमेव भविष्यति । यद्येवं कश्चिदुपदेष्टुम्प्रयतेत स एव प्रेक्षावद्भिरुपहास्यो भवेत्तथैव सम्प्रति सनातनधर्मरक्षार्थं यदि नानाविधाः समारम्भाः क्रियन्ते नैते निष्फला नवाऽनुचिताः किन्त्ववश्यकर्तव्या एव, यथा यथा साधनसामग्री सम्पूर्णा वैगुण्यरहिता च स्यात्तथा तथा फललाभोपि भविष्यत्येवावश्यम् । सर्वैस्तदर्थं चेष्टितव्यमेव भगवदिच्छया च यदा प्रावृट्कालइव सर्वात्मना सर्वथा समुचितो धर्मानुष्ठानयोग्यः कालः कश्चित्प्रादुर्भविष्यति तदाऽधर्मस्य लेशतोऽप्यवस्थानं नभवेत्सर्वत्रधर्मस्यै व साम्राज्यं भवेत् । न ह्येतावता सम्प्रति प्रयत्नेभ्योविरन्तव्यम् । यथाशक्ति सर्वैर्धर्मरक्षणार्थं चेष्टितव्यमेव, तदर्थं प्रयत्ने कृतेऽस्माकमेव रक्षणं भविष्यति न पुनः सर्वथा धर्मस्यो पर्युपकारः क्रियत इति केनापिमन्तव्यम् । धर्मे रक्षिते वयमेव रक्षिता भविष्यामः तस्मिन्विलुप्ते वयमेव विलोपं प्राप्स्यामो यथाऽऽह भगवान्मनुः—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ।

तदयं निष्कर्षः सर्वत्र नास्तिका बाहुल्येन सन्ति ते च सर्वदा बहुविधान्विघ्नानाचरन्ति । नास्माकमुपदेशं केपि शृण्वन्ति समुपहसन्ति विरुद्धं च चेष्टन्त इति मत्वा न धर्मरक्षार्थमुद्योगः परित्याज्यः, नहिभिक्षुकाः सन्तीति स्थाल्योनाधि श्रीयन्ते नहि मृगाः सन्तीति शालयोनोप्यन्तेऽपितु पाचककृषीवलादिभिरेनान्परिहृत्य यथा कामं स्वीयान्यभिमतानि साध्यन्त एव । यथाहुरभियुक्ताः—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्तिमध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति इति ।

एतदनुसारेण सर्वदा समुत्साहेन धर्मरक्षणार्थं प्रयतितव्यमेव । यदि नाम कार्यक्षेत्रेऽवतीर्य नानाविधैः साधनैः साध्यं साधयितुम्प्रयत्यापि न कार्यसिद्धिस्तदा पुनरप्यन्विष्यतां साधनोपायः, निपुणतया चान्वीक्ष्यतां किंवाऽत्रवैगुण्यं दोषो वा सम भवदिति । अतएवाहुराचार्याः 'यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोष' इति । अस्यार्थः फलप्राप्तिं समुद्दिश्य कृतेपि प्रयत्ने यदि न फललाभस्तर्हि तस्माद्व्यापारान्नविरन्तव्यतामपितुपूर्वतोपि चतुर्गुणमुत्साहमवलम्ब्य प्रयत्यताम् निपुणमन्वीक्ष्यतां चकोऽत्रदोषः सञ्जात इति । तथा चाऽस्मिंश्चरणे सञ्जात इति निपुणमन्विष्यतामिति वाक्य शेषः । तस्माद्यस्यां कस्यामप्यवस्थायां वर्तमानेन सनातनधर्मानुयायिना स्वीयधर्मसंरक्षणार्थं मवश्यम्प्रयतनीयमेव । तत्रापि ब्राह्मणेन त्ववश्यमेव प्रयतनीयम् । स हि तदर्थमेव प्रजापतिना सृष्टोऽतएव तस्येतरेभ्यः श्रैष्ठ्यम् । यदाह भगवान्मनुः—

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये' इति ॥

धर्मेरक्षिते हि सर्वं जगद्रक्षितं स्यादतो ब्राह्मणरक्षणार्थं भगवानवतरति भारते । ब्राह्मणेन स्वकीयं कर्तव्यं न परिपालित मित्यत ईदृशी दुरवस्था ऽनुभूयते साम्प्रतम् । कोहि स्वकर्तव्यपरायणं ब्राह्मणं न समाद्रियेत, योहिनिरन्तरं परहितैकपरायण स्तदर्थं क्लेशजातमनायासेन सोढुं न पश्चात्पदोभवति न स्वयमैश्वर्यलोलुपो भूत्वा व्यसनी भवति सकथमि तरैर्विमानितो भवेत् ? इति सर्वजनविदितम् । पुराहि ब्राह्मणा ऐश्वर्यं राज्यं वा वैभवं वेतरेभ्यः प्रदाय स्वयं जीर्णपर्णाशना भूत्वा वनमध्यवास्तुनिरन्तरं तपोऽनुष्ठानपरायणा आसन्नत एव तेषां यश-पटलेनाद्यापीदं भारतं वर्षं गौरवेणेतरेभ्यो देशेभ्योऽतिरिच्यते तद्गौरवं ब्राह्मणैः संरक्षणीयमिति निवेदयामः । यदीदानीं ब्राह्मणा अस्यधर्मस्य रक्षणार्थं बद्धपरिकरा न भवेयुस्तर्हि सर्वथा दोषभागिनो भूत्वाचिरायापकीर्तिं सम्पाद्य लोकस्य विनाशहेतवः स्युरतोऽवश्यमेव विधेयः प्रयत्नः, तस्य फलं सिद्ध्यतु मावा कर्मण्येवाधिकारस्ते माफलेषु कदा चनेति भगवदुक्तरीत्या कर्मणि फलाभिसन्धिरहितेन भूत्वा प्रयवितव्यं नामानुत्साहो लेशतोऽपि न कर्तव्यः, अस्मत्प्रयत्नेन प्रेरित ईश्वरोऽवश्यमेव फलम्प्रदास्यति, सहि सर्वान्तरात्मा सर्वेषां हृदयान्तर्वर्ती साधारणै दुर्विज्ञेयमपि साक्षात्करोति—किंनाम तस्याविदितमास्ते स हि भगवान्निखिलान्तर्यामी सर्वत्र व्याप्यस्थितः सन्सर्वेषां प्रवृत्ति मुद्योगञ्चावलोक्य श्रद्धानुसारं प्रयत्नानुसारं निश्चयानुसारञ्च फलं तत्तत्कर्म—कर्तृभ्यः प्रयच्छति । यथा पिता पुत्रेभ्यो, राजा प्राड्विवाकादि न्यायाधीशेभ्यो वा कर्माधिकृतेभ्यः कर्मा ऽनुरुध्य वेतन पारितोषिकादि रूपं फलं प्रददाति । भगवतैव सर्वं व्यापिना वयं ब्राह्मणा धर्मरक्षणार्थं पुरैव नियुक्ताः, अतएव—'विप्रो वृक्षस्तस्य मूलञ्च सन्ध्या, वेदाः शाखाधर्मकर्माणि पत्र' मित्यादि वचन मुदाह्रियते । यथा राज्ञा स्वकीयराज्यशासनार्थं धर्मार्थादिरक्षायै वा स्थाने स्थाने तत्तद्योग्या धिकार प्रदानेनाऽधिकारपदस्थापिता जना रात्रंदिवं 'सावधानाः सन्तः स्वं स्वं पदं रक्षितुं यतन्ते; शरीरव्ययेनापि साधयन्ति च । यदि च बलवता विघ्नेन बाधितानां यथाशक्ति यतमानानामपि तेषां कार्यं निष्फलत्वमापतेत्, तदा स्वयं राजा वाऽन्ये शक्तिमन्तः पुरुषाः सहाया जायन्ते ।

यदि तु प्रमादेन निष्फलत्वाशङ्कया विघ्नप्राचुर्यभिया वा प्रथमत एव कर्तव्याद्विरमेयुः । तान् राजा भीरून्कार्याऽसमर्थांश्चावधार्य तत्स्थानादपनीयान्यान्नियोजयति । अयं तु दृष्टान्तः ।

अत्र दार्ष्टान्ते वयं ब्राह्मणाः परमात्मना सृष्टिकालादेव धर्माधिकारिणः कृताः, ब्रह्म—विवेचने,—हितोपदेश-दाने-भक्ति-करणे, वेदादि—शास्त्राणां पात्रानुसार मध्यापने च ब्राह्मणानामधिकारोऽस्ति । अतएव 'ब्रह्मजानातीति ब्राह्मणः' इति विगृह्य 'ब्राह्मण'—संज्ञा विहिता । अतोऽस्माकं-धनं,—राज्यं,—यशः,—कृष्यादि धनोपार्जनोपायादि, अणिमादि सिध्यष्टकं वा' किं बहुना—धर्मार्थ—काम—मोक्षादिकमखिलमैश्वर्यं 'धर्मरक्षणे' पर्यवस्यति । यत्पदमीशलब्धं नस्तत्पदमस्माभिः फलाकांक्षां विहाय पालयितव्यम् । धनं नश्यतु,—शरीरं जीर्यतु, पादेषु वा निगडाः पतन्तु शिरो वा भजतां राहु—दशां, धर्म—रक्षैवाऽस्माकमीश—लब्धाधिकारलक्ष्या । स्वकर्तव्यान्न भेतव्यं नापगन्तव्यं न विरन्तव्यञ्च ।

ये साम्प्रत मस्माकं कार्ये धर्मरक्षण रूपे विघ्नं कुर्वन्ति ते तु नाऽस्मत्पदाधिकारिणः । अङ्गाङ्गि भावेन तदधिकारित्वेऽपि प्राधान्यतोऽस्माकमेव मुख्याधिकारः । अतोऽस्माभिः कदाचिदपि नस्वकर्तव्याद्विचलितव्यम् । समस्ताऽपि जनता साम्प्रतमन्यतः प्रवृत्ताऽस्ति कथमस्माकं सिद्धिः स्यादिति नोत्साहः क्षीयताम् । अवश्यं सिद्धिर्भविष्यति ।

'दोषभीतेरनाऽऽरम्भ स्तत्का पुरुषलक्षणम्-'
कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते'
भविष्याऽन्तरायाऽऽशङ्कया पूर्वमेव निरुद्योगताऽवलम्बनं दोषजनकं जायते। प्राणत्यागावधि कर्तव्यं पालनीयमिति शास्त्रसिद्धान्तः। बद्धपरिकराय निजकर्तव्ये यतमानाय श्रद्धालवे कृतसत्यनिश्चयाय परमात्माऽवश्यं फलं दास्यति। अस्मिन्विषये स्पष्टतार्थं किञ्चिदुदाह्रियते— तदित्थम्—

कदाचित्कश्चित्पोतवाहः सबाल-वनिताकं जनसमुदायम्पारेसमुद्रन्तारयितुं प्रतिज्ञाय गृहीतशल्को नाव्यारोह्य मध्येसमुद्रम्प्राप।

[क्रमशोऽग्रिमेऽङ्के]




## वाकुडा हाटग्रामे ब्राह्मणमहासम्मेलनम् ।

ज्येष्ठ कृष्णदशम्यां रविवासरे म० म० पण्डितप्रवरश्रीपञ्चाननतर्करत्नमहोदयानां सभापतित्वेन महता समारोहेण ब्राह्मणमहासम्मेलनं समभवत्। अस्मिन्हि सम्मेलने म० म० पण्डितवरवामाचरणन्यायाचार्या म० म० पण्डितलक्ष्मणशास्त्रिणोद्राविड़ाः श्रीयुत पं०श्रीजीवन्यायतीर्थाः श्रीमन्मथनाथकाव्यतीर्थाः श्रीकालीकिंकरवेदान्ततीर्था अन्ये च विशिष्टाविद्वांसः श्रीराधिकाप्रसादवेदान्तशास्त्रिप्रभृतयः नानादेशेभ्यः समागताः सभ्याः सभाशोभां समवर्द्धयन् स्वागतकारिण्याः सभायाः सभ्याः स्वयंसेवकाश्च वांकुडानामकधूमशकटाऽवतरणस्थाने समागत्य समागतानां सभ्यानां पण्डितानां समादरपूर्वकं स्वागतं विधाय (मोटर) शकटद्वारा हाटग्रामं सर्वान्समागतान् नयन्तिस्म, तत्रापि सर्वे तत्रत्याः प्रधानपुरुषाः समवेताः सम्मानपूर्वकं आवसथेष्वेतान्निवेशयामासुः। सायं पञ्चवादनसमये प्रायो दशसहस्रजनैर्विभूषितायां सभायां महत्युच्चासने उपविश्य सभापतिमहोदयैर्व्याख्यानं प्रदत्तम्। श्रीराधिकाप्रसादवेदान्तशास्त्रिणां श्रीजीवन्यायतीर्थानां श्रीकालीकिंकरस्मृतितीर्थानां श्रीलक्ष्मणशास्त्रिणां च वैदेशिकशिक्षया भारतवर्षस्य सर्वथा विनाशो जातः धार्मिकशिक्षाया आवश्यकत्वमित्यादिविषयानधिकृत्य व्याख्यानानि जातानि। सारडाविधानगौड़उत्तराधिकारविधानसहवाससम्मतिविधानादीनां च सर्वसम्मत्या विरोधप्रस्तावः परिगृहीतः। तत्प्रदेशस्थानां सर्वेषां ब्राह्मणपण्डितानां समागमेनेयं सभाऽत्यन्तमेव प्रभावसम्पन्ना सफला समजायत। द्वितीयदिने च वांकुड़ानगरे भक्तवरश्रीजयदयालगोएनकामहोदयानुरोधेनैका सभा समपद्यत। तत्रापि पू० तर्करत्नमहोदयैरेव सभापतिपदमलङ्कृतमासीत्। श्रीराधिकाप्रसादवेदान्तशास्त्रिणां म० म० द्राविड़लक्ष्मणशास्त्रिणां अखिलभारतवर्षीय ब्राह्मणमहासम्मेलने सर्वेषां सम्मत्या चिकीर्षितस्य संस्कृतविश्वविद्यालयस्य कृते सर्वैः साहाय्यं कर्तव्यमिति विषयमधिकृत्य भावयुक्तिपरिपूर्णं सहृदयहृदयाल्हादकं व्याख्यानं समभवत्। सर्वैरेव तत्रत्यैर्महता समुत्साहेन तदर्थं साहाय्यं विधास्यते इति प्रतिज्ञातम्। अनन्तरं सभापतिमहोदयेभ्यो धन्यवादप्रदानपूर्वकं सभायां समापितायां श्रीभक्तवरजयदयालगोएनकामहाशयेन निरतिशयश्रद्धाभक्तिपुरस्सरं समुपस्थितानां विद्वद्वराणां पूजासत्कारप्रदानपूर्वकं फलाहारादिकार्यं सुसम्पादितम्। सर्वेच विद्वां-

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये' इति ॥

धर्मेरक्षिते हि सर्वं जगद्रक्षितं स्यादतो ब्राह्मणरक्षणार्थं भगवानवतरति भारते । ब्राह्मणेन स्वकीयं कर्तव्यं न परिपालित मित्यत ईदृशी दुरवस्था ऽनुभूयते साम्प्रतम् । कोहि स्वकर्तव्यपरायणं ब्राह्मणं न समाद्रियेत, योहिनिरन्तरं परहितैकपरायण स्तदर्थं क्लेशजातमनायासेन सोढुं न पश्चात्पदोभवति न स्वयमैश्वर्यलोलुपो भूत्वा व्यसनी भवति सकथमि तरैर्विमानितो भवेत् ? इति सर्वजनविदितम् । पुराहि ब्राह्मणा ऐश्वर्यं राज्यं वा वैभवं वेतरेभ्यः प्रदाय स्वयं जीर्णपर्णाशना भूत्वा वनमध्यवास्तुर्निरन्तरं तपोऽनुष्ठानपरायणा आसन्नत एव तेषां यशःपटलेनाद्यापीदं भारतं वर्षं गौरवेणेतरेभ्यो देशेभ्योऽतिरिच्यते तद्गौरवं ब्राह्मणैः संरक्षणीयमिति निवेदयामः । यदीदानीं ब्राह्मणा अस्यधर्मस्य रक्षणार्थं बद्धपरिकरा न भवेयुस्तर्हि सर्वथा दोषभागिनो भूत्वाचिरायापकीर्तिं सम्पाद्य लोकस्य विनाशहेतवः स्युरतोऽवश्यमेव विधेयः प्रयत्नः, तस्य फलं सिद्ध्यतु मावा कर्मण्येवाधिकारस्ते माफलेषु कदाचनेति भगवदुक्तरीत्या कर्मणि फलाभिसन्धिरहितेनभूत्वा प्रयतितव्यं नामानुत्साहो लेशतोऽपि न कर्तव्यः, अस्मत्प्रयत्नेन प्रेरित ईश्वरोऽवश्यमेव फलम्प्रदास्यति, सहि सर्वान्तरात्मा सर्वेषां हृदयान्तर्वर्ती साधारणै र्दुर्विज्ञेयमपि साक्षात्करोति–किंनाम तस्याविदितमास्ते स हि भगवान्निखिलान्तर्यामी सर्वत्र व्याप्यस्थितः सन्सर्वेषां प्रवृत्ति मुद्योगञ्चावलोक्य श्रद्धानुसारं प्रयत्नानुसारं निश्चयानुसारञ्च फलं तत्तत्कर्म–कर्तृभ्यः प्रयच्छति । यथा पिता पुत्रेभ्यो, राजा प्राड्विवाकादि न्यायाधीशेभ्यो वा कर्माधिकृतेभ्यः कर्मा ऽनुरुध्य वेतन पारितोषिकादि रूपं फलं प्रददाति । भगवतैव सर्वव्यापिना वयं ब्राह्मणा धर्मरक्षणार्थं पुरैव नियुक्ताः, अतएव—'विप्रो वृक्षस्तस्य मूलञ्च सन्ध्या, वेदाः शाखाधर्मकर्माणि पत्र' मित्यादि वचन मुदाह्रियते । यथा राज्ञा स्वकीयराज्यशासनार्थं धर्मार्थादिरक्षायै वा स्थाने स्थाने तत्तद्योग्या धिकार प्रदानेनाऽधिकारपदस्थापिता जना रात्रंदिवं 'सावधानाः सन्तः स्वं स्वं पदं रक्षितुं यतन्ते; शरीरव्ययेनापि साधयन्ति च । यदि च बलवता विघ्नेन बाधितानां यथाशक्ति यतमानानामपि तेषां कार्ये निष्फलत्वमापतेत्, तदा स्वयं राजा वाऽन्ये शक्तिमन्तः पुरुषाः सहाया जायन्ते ।

यदि तु प्रमादेन निष्फलत्वाशङ्कया विघ्नप्राचुर्यभिया वा प्रथमत एव कर्तव्याद्विरमेयुः । तान् राजा भीरून्कार्याऽसमर्थांश्चावधार्य तत्स्थानादपनीयान्यान्नियोजयति । अयं तु दृष्टान्तः ।

अत्र दार्ष्टान्ते वयं ब्राह्मणाः परमात्मना सृष्टिकालादेव धर्माधिकारिणः कृताः, ब्रह्म–विवेचने,–हितोपदेश-दाने-भक्ति-करणे, वेदादि–शास्त्राणां पात्रानुसार मध्यापने च ब्राह्मणानामधिकारोऽस्ति । अतएव 'ब्रह्मजानातीति ब्राह्मणः' इति विगृह्य 'ब्राह्मण'–संज्ञा विहिता । अतोऽस्माकं-धनं,–राज्यं,–यशः,–कृष्यादि धनोपार्जनोपायादि, अणिमादि सिध्यष्टकं वा' किं बहुना–धर्मार्थ—काम–मोक्षादिकमखिलमैश्वर्यं 'धर्मरक्षणे' पर्यवस्यति । यत्पदमीशलब्धं नस्तत्पदमस्माभिः फलाकांक्षां विहाय पालयितव्यम् । धनं नश्यतु,–शरीरं जीर्यतु, पादेषु वा निगडाः पतन्तु शिरो वा भजतां राहु–दशां, धर्म–रक्षैवाऽस्माकमीश–लब्धाधिकारलक्ष्या । स्वकर्तव्यान्न भेतव्यं नापगन्तव्यं न विरन्तव्यञ्च ।

ये साम्प्रत मस्माकं कार्ये धर्मरक्षण रूपे विघ्नं कुर्वन्ति ते तु नाऽस्मत्पदाधिकारिणः । अङ्गाङ्गि भावेन तदधिकारित्वेऽपि प्राधान्यतोऽस्माकमेव मुख्याधिकारः । अतोऽस्माभिः कदाचिदपि नस्वकर्तव्याद्विचलितव्यम् । समस्ताऽपि जनता साम्प्रतमन्यतः प्रवृत्ताऽस्ति कथमस्माकं सिद्धिः स्यादिति नोत्साहः क्षीयताम् । अवश्यं सिद्धिर्भविष्यति ।

'दोषभीतेरनाऽऽरम्भ स्तत्का पुरुषलक्षणम्-'
कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते'

भविष्याऽन्तरायाऽऽशङ्कया पूर्वमेव निरुद्योगताऽवलम्बनं द्वोषजनकं जायते । प्राणत्यागावधि कर्तव्यं पालनीयमिति शास्त्रसिद्धान्तः । वद्धपरिकराय निजकर्तव्ये यतमानाय श्रद्धालवे कृतसत्यनिश्चयाय परमात्माऽवश्यं फलं दास्यति । अस्मिन्विषये स्पष्टतार्थं किञ्चिदुदाह्रियते— तदित्थम्—

कदाचित्कश्चित्पोतवाहः सबाल-वनिताकं जनसमुदायम्पारेसमुद्रन्तारयितुं प्रतिज्ञाय गृहीतशुल्को नाव्यारोह्य मध्येसमुद्रम्प्राप।

[ क्रमशोऽग्रिमेऽङ्के ]




## वाकुडा हाटग्रामे ब्राह्मणमहासम्मेलनम् ।

ज्येष्ठ कृष्णदशम्यां रविवासरे म० म० पण्डितप्रवरश्रीपञ्चाननतर्करत्नमहोदयानां सभापतित्वेन महता समारोहेण ब्राह्मणमहासम्मेलनं समभवत् । अस्मिन्हि सम्मेलने म० म० पण्डितवरवामाचरणन्यायाचार्या म० म० पण्डितलक्ष्मणशास्त्रिणोद्राविड़ाः श्रीयुत पं०श्रीजीवन्यायतीर्थाः श्रीमन्मथनाथकाव्यतीर्थाः श्रीकालीकिंकरवेदान्ततीर्था अन्ये च विशिष्टाविद्वांसः श्रीराधिकाप्रसादवेदान्तशास्त्रिप्रभृतयः नानादेशेभ्यः समागताः सभ्याः सभाशोभां समवर्द्धयन् स्वागतकारिण्याः सभायाः सभ्याः स्वयंसेवकाश्च वांकुडानामकधूमशकटाऽवतरणस्थाने समागत्य समागतानां सभ्यानां पण्डितानां समादरपूर्वकं स्वागतं विधाय (मोटर) शकटद्वारा हाटग्रामं सर्वान्समागतान् नयन्तिस्म, तत्रापि सर्वे तत्रत्याः प्रधानपुरुषाः समत्रेताः सम्मानपूर्वकं आवसथेष्वेतान्निवेशयामासुः । सायं पञ्चवादनसमये प्रायो दशसहस्रजनैर्विभूषितायां सभायां महत्युच्चासने उपविश्य सभापतिमहोदयैर्व्याख्यानं 'प्रदत्तम् । श्रीराधिकाप्रसादवेदान्तशास्त्रिणां श्रीजीवन्यायतीर्थानां श्रीकालीकिंकरस्मृतितीर्थानां श्रीलक्ष्मणशास्त्रिणां च वैदेशिकशिक्षया भारतवर्षस्य सर्वथा विनाशो जातः धार्मिकशिक्षाया आवश्यकत्वमित्यादिविषयानधिकृत्य व्याख्यानानि जातानि । सारडाविधानगौड़उत्तराधिकारविधानसहवाससम्मतिविधानादीनां च सर्वसम्मत्या विरोधप्रस्तावः परिगृहीतः । तत्प्रदेशस्थानां सर्वेषां ब्राह्मणपण्डितानां समागमेनेयं सभाऽत्यन्तमेव प्रभावसम्पन्ना सफला समजायत । द्वितीयदिने च वांकुड़ानगरे भक्तवरश्रीजयदयालगोएनकामहोदयानुरोधेनैका सभा समपद्यत । तत्रापि पू० तर्करत्नमहोदयैरेव सभापतिपदमलङ्कृतमासीत् । श्रीराधिकाप्रसादवेदान्तशास्त्रिणां म० म० द्राविड़लक्ष्मणशास्त्रिणां अखिलभारतवर्षीय ब्राह्मणमहासम्मेलने सर्वेषां सम्मत्या चिकीर्षितस्य संस्कृतविश्वविद्यालयस्य कृते सर्वैः साहाय्यं कर्तव्यमिति विषयमधिकृत्य भावयुक्तिपरिपूर्णं सहृदयहृदयाल्हादकं व्याख्यानं समभवत् । सर्वैरेव तत्रत्यैर्महता समुत्साहेन तदर्थं साहाय्यं विधास्यते इति प्रतिज्ञातम् । अनन्तरं सभापतिमहोदयेभ्यो धन्यवादप्रदानपूर्वकं सभायां समापितायां श्रीभक्तवरजयदयालगोएनकामहाशयेन निरतिशयश्रद्धाभक्तिपुरस्सरं समुपस्थितानां विद्वद्वराणां पूजासत्कारप्रदानपूर्वकं फलाहारादिकार्यं सुसम्पादितम् । सर्वे च विद्वां-

सो गोएनकामहोदयस्य श्रद्धाभक्तिविनयादिगुणगणान् प्रशंसन्तस्तदीयसत्कारं समादाय धूमयानमधिरुह्य कलिकातानगरीम्प्रस्थिताः ।

## श्रीकाशीसंस्कृतविश्वविद्यालयस्य विशेषाधिवेशनम् ।

कलिकाताराजकीयसंस्कृतमहाविद्यालये श्रीकाशीसंस्कृतविश्वविद्यालयप्रतिष्ठापनविषये विद्यालयाध्यक्षश्रीआदित्यनाथमुखोपाध्यायमहाशयानामनुरोधेन भूतपूर्वकलिकाता ( हाई कोर्ट ) विचारालयप्रधानविचारपतिश्रीयुक्तसर् नलिनीरञ्जनचट्टोपाध्यायमहोदयानां सभापतित्वे महती सभा समभवत् । अत्रहि सर् विचारपतिजस्टिस् मन्मथनाथमुखर्जि महोदयो नसीपुरमहाराजः सुप्रसिद्धव्यवहाराजीवी श्रीव्रजलालचक्रवर्तीमहोदयो भूतपूर्वसंस्कृतकालेजाध्यक्षः, म० म० श्रीआशुतोषशास्त्री,म० म० भागवतकुमारशास्त्री,म०म० फणिभूषणतर्कवागीशः,म०म०पं० पञ्चाननतर्करत्नमहोदयः म० म० पं० वामाचरणन्यायाचार्यः म० म० पं० लक्ष्मणशास्त्री द्राविडः, म० म० गुरुचरणदर्शनतीर्थः, म०म० दुर्गाचरणसाङ्ख्यवेदान्ततीर्थः, कविराज श्रीश्यामादासवाचस्पतिमहोदयः, रायसाहेब-रामदेवचौखनीरामरत्तपालजनाथपोद्दारप्रभृतयो वैश्यवर्गाः, श्री पं० मुरारिलालप्रभृतयोऽन्ये च श्रेष्ठपुरुषाः सभायां सम्मिलिताः । प्रथमं श्रीजीवन्यायतीर्थमहोदयः काशी संस्कृतविश्वविद्यालयस्योद्देश्यं प्रयोजनं तत्साधनानि च न्यरूपयत् । यस्य विवरणं म०म० श्रीलक्ष्मणशास्त्रिद्रविडमहोदयेन हृदयग्राहिण्या भाषया कृतम् । अनन्तरं श्रीआशुतोषशास्त्रिणां श्रीव्रजलालचक्रवर्तिमहोदयानां च संस्कृतविश्वविद्यालयस्याऽऽवश्यकत्वं सम्प्रति वर्तत इति व्याख्यानं संवृत्तम् । सभापतिमहोदयैरपि स्वीयव्याख्याने विश्वविद्यालयस्य धनसङ्ग्रहार्थं समितिरेका स्थापनीयेति समुद्घोषितम् । सर्वैश्च सभ्यैस्तदङ्गी कृतम् । सर्वसम्मत्येदमपि निर्णीतं—वङ्गभाषया संस्कृतविश्वविद्यालयस्य समुद्देशप्रयोजनविवरणादिबोधकमनुष्ठानपत्रं सम्मुद्रय सर्वत्र वितरणीयम् । सर्वे च साहाय्यप्रदानार्थं स्वस्वोत्साहम्प्रदर्शयामासुः । अस्याः सभायाः प्रभावः कलिकातानगर्यां सर्वत्राधिकतया प्रसृतोऽभवत् ।

## वर्द्धमाननगरे सभा ।

वर्द्धमाननगरेसुप्रसिद्धव्यवहाराजीविनां श्रीमन्तं श्रीहर्षमुखोपाध्यायमहाशयानामाध्यक्ष्येण टाऊनहालनामकस्थाने विश्वविद्यालयार्थं समभवदेका विशिष्टविद्वज्जनपरिवृढधनिनिकरपरिपूर्णा सभा । यत्र म० म० पू० पञ्चाननतर्करत्नमहोदयप्रभृतीनां व्याख्यानानि सम्पन्नानि । सर्वैश्च महताऽऽदरेण व्याख्यानानि श्रुत्वा साहाय्यं वितरिष्यत इति प्रतिज्ञातम् ।

## गौरीपुर मैनसिंह नेत्रकोणा यशोदलप्रभृतिनां ।

नानास्थानेषु म० म० पं० श्रीवामाचरणन्यायाचार्याः म० म० श्रीलक्ष्मणशास्त्रिणः श्रीजीवन्यायतीर्थाः श्रीशरच्चन्द्रसाङ्ख्यतीर्थः श्रीमान् पं० केदारनाथसाङ्ख्यतीर्थ महाशयश्च तथाऽन्येपि विद्वांसो विश्वविद्यालयस्य धनसङ्ग्रहार्थं परिश्रमणं कुर्वन्तः स्वीयव्याख्यानैर्जनानां मानसान्यानन्दयन्तिस्म । सुप्रसिद्धवदान्यश्रेष्ठभूम्यधिकारिश्रीव्रजेन्द्रकिशोररायमहोदयैरेकलक्षं विश्वविद्यालयार्थं देयत्वेन प्रतिज्ञातम् । तथाऽन्येप्यधिकारिणः श्रीयुतसुरेन्द्रप्रसाद लाहिड़ीमहोदयप्रभृतयोऽर्थसाहाय्यं कर्तुं प्रतिज्ञातवन्तः । अनेन परिमाणेन धर्मस्य महान् प्रचारः समभवदिति प्रमोदस्थानम् ।



ग्राहक महोदयानां सविधे,

सादरमभ्यर्थनम् ।

बहुविधविघ्नपरम्पराभिः पत्रस्यास्य प्रकाशने विलम्बो जातस्ततोऽनुग्रह-बुद्ध्या ग्राहकमहोदयैः क्षमा विधेया। द्वितीयवर्षे पत्रस्याकारवृद्धिः संजातेति प्रत्यक्षमेव। पत्रस्य वार्षिकं मूल्यं संग्रहीतुं तृतीयसंख्या वी० पी० पोष्टद्वारा प्रेषयिष्यते। पत्रमिदमात्मीयबुद्ध्या प्रतिपालनीयं भवद्भिः। अत आशास्महे पत्रमिदं भवत्करतलगतं व्यर्थं न परावर्त्तितं भविष्यतीति। येषां महानुभावानां पत्रस्य जिघृक्षा न भवेत् तैस्तु कृपया एतत्संख्याप्राप्ति समनन्तरमेव वयं विज्ञापनीयाः। अन्यथा निरर्थकार्थहानिर्भविष्यति।



विनीतो निवेदकः—

कार्याध्यक्षः।

शुभ सन्देश ।

धार्मिक जगत् में नवजीवन लानेवाला

# हिन्दी साप्ताहिक पत्र ।

समस्त सनातनधर्म प्रेमियों को यह जानकर प्रसन्नता होगी कि, वर्त्तमान समय में सनातनधर्म के ऊपर अनेक प्रकार के आक्रमण हो रहे हैं और दिनों दिन सर्वसाधारण जनता में सनातनधर्म के प्रति अश्रद्धा उत्पन्न की जा रही है। इसलिए सनातनधर्म के वास्तविकरूप, तथा उसके महत्त्व के प्रचारार्थ, अखिल भारतवर्षीय ब्राह्मणमहासम्मेलन के कर्णधारों ने "ब्राह्मणमहासम्मेलन" नाम का एक उत्तम कोटि का हिन्दी साप्ताहिक पत्र प्रकाशित किया है और इस पत्र के सम्पादक सुयोग्य पण्डित श्रीविश्वनाथशास्त्री द्राविड हैं। अन्यान्य पत्र से इसकी विशेषता यह है कि, यह पत्र सनातनधर्म का कट्टर पक्षपाती और सनातनधर्म के विरोधियों को युक्तिपूर्ण प्रत्युत्तर देने को सदा तैयार रहेगा। इसलिए हम समस्त सनातनधर्मावलम्बी जनता, विद्वानों, राजा महाराजाओं, सेठ साहूकारों, धनी मानी सज्जनों से सादर सानुरोध निवेदन करते हैं कि, आप इस साप्ताहिक पत्र को अपनाकर और अपने इष्टमित्रों में प्रचार करके सनातनधर्म की रक्षा में सहाय हों। आशा है कि, आप हमारी प्रार्थना पर अवश्य ध्यान देंगे और इसकी ग्राहक संख्या की वृद्धि में सहायक बनेंगे।

इसका वार्षिक मूल्य २) रु० है और स्थानीय ग्राहकों के लिये १॥) रु० और विद्यार्थियों के लिये १) रु० तथा बाहरी विद्यार्थियों के लिए १॥) रुपया है।

ब्राह्मणमहासम्मेलन कार्यालय,
साङ्गवेदविद्यालय प्रेस, रामघाट,
बनारस सिटी।

विनीत निवेदकः—
व्यवस्थापक
"ब्राह्मणमहासम्मेलन"



# अमर-भारती





* संस्कृतमासिकपत्रिका *

सङ्कलयिता (EDITOR)--S. R. शास्त्री ।
* रा. ब. गागरमलविद्यालयोपाध्यायः *
सहकारी—श्रीकृष्णशास्त्री
-पंचाप-स. ध. प्रतिनिधिसभाया उपदेशकमण्डलस्य
मन्त्री ॥

वार्षिकं मूल्यं रु० २)
द्वीपान्तरेषु रु० ५)

छात्राणां कृते रु. १॥)
एकाङ्कस्य =)॥ आ०

## —: अमरभारत्या नियमाः :—

(१) अमरभारती प्रतिमासं मासान्ते प्रकाशिता द्वितियमासारम्भ एव सहृदयानां सेवायां मुपस्थास्यते ।

(२) अस्या ग्राहका वार्षिकं रूप्यकद्वयं वर्षारम्भ एव दद्युः ।

(३) छात्रा अन्ये च विद्यानुरागिणोऽकिञ्चना अर्द्धचतुर्थरुप्यकं दद्युः ।

(४) पञ्चावरं पञ्चाशत्परं दत्त्वा सहाया भवेयुः ॥

(५) पञ्चाशदवरं पञ्चशतपरं वार्षिकं दत्वा संरक्षका भवेयुः ।

(६) अमरभारत्यां मुद्रणार्थं निबन्धारो निबन्धान् सङ्कलयितुः समीपे प्रेषयेयुः ।

(७) सङ्कलयिता परप्रहितप्रबन्धानां मुद्रणे यथार्हं तेषां न्यूनाधिक्यकरणे च स्वयमधिक्रियते ।

(८) ग्राहकैः स्वनाम धाम च स्पष्टं विलेखनीयम् । ग्राहका यं कञ्चिदङ्कं समयेऽलभमाना ग्राहकसंख्यानिर्देशपूर्वकममरभारत्या अक्षपटलाध्यक्षं ( कार्यालयाध्यक्षं ) सूचयेयुः ।

(९) विज्ञापनादिमुद्रणार्थं शुल्कादिविषये जिज्ञासवोऽमरभारत्याः सङ्कलयितुसकाशाज्जानीयुः ।

(१०) राजविरुद्धाश्च लेखा न प्रकाश्येरन् ।

## विषयसूची

अनिर्दिष्टनामविशेषा लेखाः सङ्कलयितुरवगन्तव्याः ॥



**अमरभारत्या अक्षपटलम् (Office) रा० ब० गागरमल्ल विद्यालय**

अमृतसर ( पंजाब )




# अमर-भारती

संस्कृतमासिकपत्रिका

प्रथमवर्षे | फाल्गुन मासे १९८५ विक्रमाब्दे फर्वरी १९२९. | १ अङ्कः

## —: सारस्वत-गीतम् :—

( मेरे शंभू बुलाले कैलास मुझे )

॥ इतिवद् गीयते ॥

देवी वाचामजस्यावरोधवधूः ।
जीयादानननिर्जितपूर्णविधुः ॥
यद्दग्यजु र्मध्यं तदस्या ।
नाभिमोङ्कारः श्रितः ॥
सब्राह्मणोपनिषत्समस्ता ।
मूर्धदेशमुपाश्रिता ॥१॥
यस्याः साम समेति वक्षोजयुगम् ॥१॥
× × ×

करपल्लवैश्च चतुष्टयं पद ।
जातमस्याः संमितम् ॥
यदङ्गुलीश्च सुकोमला- ।
दशरूपकं समुपाश्रितम् ॥ २ ॥
यस्याः साहित्यमेति नितम्बयुगम् ॥२॥
× × ×

पुराणपुण्यकथेतिहासाः ।
सन्ति चाङ्गोपाङ्गयोः ॥
प्रियचाटुवक्रसरोषसाकूतो- ।
क्तयो यदपाङ्गयोः ॥३॥
यस्याः काव्यमुपैति तथोरुतटम् ॥३॥
× × ×

प्रसादमाधुर्यौजस- ।
स्तस्यास्त एवावस्थिताः ।
सालङ्कृति ग्रींवा च तिस्रो ॥
वृत्तयस्त्रिवली मता ॥४॥
यस्या रस उपयात्यधरोष्ठपुटम् ॥४॥
× × ×

## उद्योतः

हृदयं हृदयङ्गमः प्रमुष्णन् ।
सुधियां यन्मम संनिवेश एषः ।
तदयं सदयं विमुच्य रागं ।
विदुषा दत्तदृशा कृतार्थनीयः ॥१॥

आसीत् प्रथममेतन्महद्धर्षास्पदं यत्किल लाभपुरादुद्योतो नाम संस्कृतमासिकपत्रं संस्कृतसाहित्याभिवृद्धयै प्रकाशयिष्यते। एतस्य सङ्कलनं प्राच्यविद्यालयोपाध्यायेनतत्रभवता कवितार्किकदर्शनाचार्य्येण नृसिंहदेवशास्त्रिणा सम्पादयिष्यत इति च।

परमिदानीं यावन्तोऽङ्काः प्रकाशिताः तैः सर्वार्थगोचरापीयं संस्कृतभाषा असदृशीभिः पदवाक्ययोजनाभि र्विडम्ब्यमाना-दूरे समुन्नतिः। स्थितादप्यङ्ग सौष्ठवाद्धीयमाना दृढं नश्चेत उद्वेजयति। तथाहि-

येऽस्मिन्नवसरे व्यवहारं गतास्ते तेऽर्थाः संस्कृतभाषाया अगोचरीभूताः ( Deputy Commissioner ) डिप्टीकमिश्नर, ( Court ) कोर्ट, ( Motor Car ) मोटर कार, प्रभृतयः तेषां व्यवहारार्थो अभिरूपा योगतो व्यावहारिकाः शब्दास्तत्तदर्थविषयकै र्निबन्धैरुद्भाव्य प्रकाशनीया इति संस्कृतभाषाया व्यवहारं स्थापयितुमासीदयमुद्योत उद्द्योतितः। तत्र तत्रभवान् सङ्कलयिता (सम्पादकमहोदयः)शब्ददरिद्र इव केवलं स्वरवर्णसाम्यानुवासितै र्नामकरणैस्तांस्तानर्थान् निबन्धेषु निबध्य न्यंगामिव विकलामिव चामरभारतीं विख्यापयति। नूनमन्वर्थैर्व्युत्पन्नैः शब्दैर्निरन्तरा संस्कृतभाषेदानीमपार्थकै र्व्युत्पत्तिरहितैः केवलं स्वरवर्णसाम्यविगाहिभि र्नाम पदैः सन्दृभ्यमाणा कौशेयमिव शणवल्केन सङ्घटितं बाढं न शोभते।

श्रूयते कश्चन पाश्चात्यपण्डितः स्वरवर्णसाम्येन नामकरणं कुर्वतः पौरस्त्यान् [किंचैवमुपजहास। यथा (डिप्टीकमिश्नर=दीप्तिकामेश्वरः। मोटरकार=मूत्रकारः ) इति।

प्रायो हि सर्वासु भाषास्वन्वर्था व्युत्पन्नाश्च शब्दा जातिगुणक्रियासंज्ञाभि र्व्यपदेशं[२] लभन्ते। इयं नाम शब्ददरिद्रता। यत्र सर्वाणि नामान्याख्यातजानीत्यास्थिताः सर्वे नैरुक्ता वैयाकरणाश्च। यद-

(टि० १) नागरीप्रचारिण्यां............तमेऽङ्के कर्मचन्द्रवंशोत्कीर्तनकं नाम काव्यमधिकृत्य विस्तीर्णः कश्चित्प्रबन्धो मुद्रितः। तत्रेदं विस्पष्टं विलिखितम्। वंशोत्कीर्तनकं काव्यमेतज्जयसोमेन लाहौरनगरे निर्मितमिति। अमुमेवार्थं समर्थयितुं तत एव काव्यात् केचिच्छ्लोकाः समुद्धृत्य तत्रोदाहृताः। तत्र च लाभपुरमिति लाहौर नगरस्य व्यपदेशः संस्कृते दृश्यते।
यथा-नृपविक्रमतः खभूतरसशशिमिते वर्षे। ५२८
लाभपुरनगरे प्रमोदमाणिक्यगणिशिष्यैः ।५२९।
श्रीजयसोमै र्विहिता धीसखवंश्यावली गुरो र्वचसा५३०
युक्तश्चैतत् -प्रायो भाषाविपरिणामेषु भकारस्य हकारात्मना विपरिणामो भाषायां दृष्टः तल्लाभपुरस्य लाहौर इति परिणामोऽनुरूपो नतु लवपुरस्य। 'खघथधभांहः'। प्रा.सू. २७। इति भस्य हविधानात्।

टि० (२) एतदुदाहरणं हिन्द्यादिषु भाषासु स्वयमूहनीयम्। सुलभत्वान्तोदाहृतम्।

र्थानि च निरुक्तव्याकरणाद्यङ्गानि। सैव संस्कृत भाषा प्राकृतभाषेवापार्थकैः केवलं स्वरवर्णसाम्यानुवासितैः पदै र्व्यवहारं लम्भ्यमाना परं वैरूप्यमुपागतेव।

प्रायोऽर्थशास्त्रेषु कौटल्यकामन्दक्यादिषु शासनाङ्गभूतानां तत्तदधिकरणानां तत्तदधिकरणस्थानाञ्च नामानि यौगिकानि योगरूढानि वा यथायथं प्रयुज्यमानानि समवलोक्यन्ते। पाश्चात्य भाषायामपि प्रायः सर्वाणि नामानि यौगिकानि योगरूढानि वा भवन्ति। यथा ( कलेक्टर, कमिश्नर, गवर्नर, ) इत्यादीनि। संस्कृतेऽपि तत्समानार्थानि यौगिकान्येव पदान्यर्थशास्त्रेषु प्रयुज्यमानानि दृष्टानि। यथा—समाहर्त्ता, सन्निधाता, इत्यादीनि।

तत्र समाहर्त्तेति नामपदमेतत् कलेक्टर पदेन समानार्थं समानयोगञ्च। यथा (one who collects is collector) एवं यः समाहरति स समाहर्त्ता इति। एवमन्यान्यपि नामपदानि अध्यक्षः, उतराध्यक्षः प्रदेष्टा, धर्मस्थः इत्यादीनि -(इन्सपैक्टर, सुपरिन्टेन्डेन्ट, ओवरसियर, मजिस्ट्रेट, जज) इत्यादिभिः प्रायः समानार्थानि समानयोगानि च।

यथा हि शासनसौकर्यार्थं पाश्चात्यैः (प्रेजीडेन्सी, कमिशन, डिस्ट्रिक्ट, ताल्लुका) इत्यादिना देशं विभज्य तानि तान्यधिकरणानि ते ते च तत्तदधिकारिणस्तैर्यौगिकै र्नामभि र्व्यपदिश्यन्ते। एवमार्यशासनेऽपि शासनसौकर्यार्थं देशस्य स्थानीय—द्रोणमुख—खार्वटिक—संग्रहणाद्या अधिकरणानां तत्तदधिकारिणाञ्च—समाहर्त्ता, प्रदेष्टा, धर्मस्थः इत्यादयो विभागेनान्वर्था यौगिका वाचकशब्दाः शास्त्रेषु प्रयुज्यमानाः समवलोक्यन्ते। तद्रमणीयं स्याद्यदि तथाविधैरेव शब्दैस्ते तेऽर्थाः प्रतिपाद्येरन्॥

अथ चेदभिमानः— लाहौर" 'नागौर" "जालौर" 'चित्तौड़" इत्यादयो भाषिकाः शब्दा वर्णागमलोपविकारै र्यथा संस्कृते विपरिवर्त्य प्रयुज्यन्ते 'लाभपुरम्" 'नागपुरम्" "जावालपुरम्" 'चित्रकूट" इत्यादि। एवं युज्यत एव ( डिप्टीकमिश्नर ) आदि शब्दानामपि वर्णागमलोपविकारैः संस्कृते विपरिवर्त्य प्रयोगः। 'दीप्तिकामेश्वरः' इत्यादि। इति। परमेष मिथ्यैवाभिमानः।

यावता युक्तं 'लाहौर" 'नागौर" चित्तौड़' आदिशब्दानां संस्कृते विपरिवर्त्य प्रयोगः। संस्कृतप्रकृतयो हि प्राकृतशब्दाः सस्कृते निविशमानाः प्रकृतिं प्रत्यापद्यन्ते इति। संस्कृतशब्दा एव हि लाभपुरादयो वक्तुरसामर्थ्याज्ञानोपेक्षादिभिः आहारविहारवशात् शिक्षाभ्यासमान्द्याद्वा अयथास्थानकरणप्रयत्नमुच्चार्यमाणा विकृत्य लोके इदंभपरं रूपान्तरं प्रतिपन्नाः। इति युक्तैव तेषां संस्कृते निविशमानानां प्रकृत्याःमतापरिणतिः। न युक्तः पुनः ( डिप्टीकमिश्नर मोटर कार ) प्रभृतीनां पाश्चात्यशब्दानां (दीप्तिकामेश्वर। इत्यादिना संस्कृते विपरिवर्त्य प्रयोगः। न ह्येते संस्कृतप्रकृतयः। न च 'दीप्तिकामेश्वर '' 'मूत्रकारः" इत्याद्याः संस्कृत शब्दाः 'लामपुर" चित्रकूटा"-दय इव व्यवहार वशात् कालेन विकृत्य इदमीदृशं रूपान्तरं प्रतिपन्नाः ( डिप्टीकमिश्नर मोटर कार ' इत्यादि "लाहौर" 'चित्तौड़" इत्यादिवत्। इति मतिमता

शक्यमवसातुम् ॥

अपि च यत्रार्थे "चित्तौड़" आदयः शब्दा व्यवह्रियन्ते, तत्रैव चित्रकूटादयः शब्दाः संस्कृते लब्धव्यवहारा दृष्टा इति स्वरवर्णसाम्यात्तेषां तत्प्रकृतित्वं शक्यं कल्पयितुम्। न चैव ( डिप्टीकमिश्नर ) आद्यर्थे लब्धव्यवहारा दीतिकामेश्वरादयः शब्दाः संस्कृते दृश्यन्ते। दृश्यन्ते चान्य एव 'समाहर्त्ता' 'स्थानिक' इत्यादयस्तत्समानार्थास्तत्समानयोगाश्च। न च ते समानार्थसमानाक्षरवर्णविन्यास निवन्धनं वर्णागमलोपविकारविशेषलभ्यं प्रकृतिभावमर्हन्ति। यथा चित्रकूटनागपुरादयः शब्दाः। समानार्थाःसमानाक्षरवर्णविन्यासा लेशतो वर्णागमलोपविकारेण प्रकृतिभावं भजमाना दृश्यन्ते। इति।

अत्र कश्चित् विशेषज्ञ एवं व्यवतिष्ठते। ये पुनरिमेऽभिनवाः पदार्थाः शिल्पविज्ञानवैभवाविष्कृताः परःसहस्राः प्रत्यहं लोकयात्रार्थं व्यवहारं प्राप्ताः प्राप्नुवन्तश्च दृश्यन्ते। तेषां संस्कृते व्यवहारस्तत्तद्देशभाषानामभिरेव सम्पादनीयः। भवति च भाषान्तरेषु भषान्तरगतानां शब्दानां भूयसा प्रयोगः। केवलं विभाक्तिप्रत्यययोजना विशिष्यते। यथा पाश्चात्यभाषायां 'हिंदू, घी' इत्यादयः शब्दा यथायथं विभाक्तियोजनया व्यवह्रियमाणा दृश्यन्ते यथा (Hindu's ghee=हिन्दूस्, घी) इत्यादि। एवं हिन्दीभाषायां पाश्चात्यशब्दाः केवलं विभाक्ति प्रत्ययविपरिवृत्या प्रयुज्यमानाः समवलोक्यन्ते। यथा– कोट के खिसे में सिगरेट की डब्बी है)

अत्र ( कोट सिगरेट ) आदयः पाश्चात्य शब्दाः केवलं ( के ) ( की ) इति कारकविपरिवृत्या प्रयुक्ताः। एवं संस्कृतेऽपि चिरात् भाषान्तरगताः ( यूनानी, पारसी, इत्यादि ) शब्दाः प्रयुज्यमाना दृश्यन्ते। यथा-"सुरङ्गा, होरा, तबुरि दीनार" इत्यादयः। एवमिदानीमन्येषामपि पदार्थानां-ये संस्कृतस्य अगोचरा नवीना नवीनैः शिल्पविज्ञानविशारदैः राविष्कृताः–तत्तद्भाषा गतैरेव निरूढै र्नामभिः संस्कृते व्यवहार उचित एवेति। यथा–( मोटरमारुह्य गतः। बाईसिकिलमारुह्य गतः ) इत्यादि। इति।

जाने चिरं चिन्ताशीलेन मृदुरेष उपायश्चिन्तितः। परमेष महाननर्थः। यतः परःसहस्रा नवनवाः पदार्थाः–येषु शय्यासनाहारविहारवेषभूषा केशसन्निवेशान्ताः सर्वे व्यवहारा लोकस्यायत्ताः प्रत्यहं नवनवैः शिल्पविज्ञानवेदिभि र्निर्मीयमाणा लोके व्यवहारार्थमुपादीयमानाश्च समवलोक्यन्ते। ये च प्राञ्चः संस्कृते लब्धव्यवहारा लोकव्यवहारार्थाः पदार्थास्ते नवनवैः हृदयग्राहिभिरुज्ज्वलैः पदार्थै र्लोके मन्दप्रयोजनतामापाद्यमाना विरला भवन्ति।

तदेवं बहुलेषु नवनवेषु पदार्थेषु कालेन–न न। इदानीमेव चेत् सव ते संस्कृते वैदेशिकै र्नामपदै र्व्यवह्रियेरन्, तदा नूनं प्रायः सर्वेषु नव्यव्यावहारिकनिबन्धेषु वर्जयित्वा केवलं शास्त्रगोचरान् निबन्धान् सर्वे वैदेशिकाः शब्दाः श्रूयेरन्। परःसहस्रा हि पदार्था नवनवा नव्यैः शिल्पविज्ञानवेदिभिरुद्भाविता अगोचराः संस्कृतस्य प्रत्यहं गृहेषु गृहस्थानां व्यवहाराय कल्पन्ते॥ नूनमेवं परःसहस्रेषु नवनवेषु वैदेशिकशब्देषु प्रत्यहं संस्कृते निविश

मानेषु कालेन सुरभारती समग्राऽसुरभारती स्यात्। नूनमिदं मार्जारभीत्या सर्पबिलं प्रविष्टस्य मूषकस्य कथामनुकरोति। व्यवहारात्प्रच्युतस्य संस्कृतस्य पुनर्व्यवहारस्थापनार्थेन अनेनोपायेन नूनं संस्कृतस्यैव लोके समूलोन्मूलनं कृतं स्यात्। तस्मात् भाषान्तरशब्दानां संस्कृते समावेशोऽनुपपन्नः ॥

यत्पुनरुच्यते सुरङ्गादयो वैदेशिकशब्दाः चिरात्संस्कृते प्रयुज्यामाना दृश्यन्त इति। न तच्छक्यं सहसा निर्धारयितुम्। किं ( सीरियङ्स् ) इति यवनशब्द एव व्यवहारार्थं संस्कृते प्रयुज्यमानः ( सुरङ्गा ) इति रूपं भेजे। आहो सुरङ्गाशब्द एव व्यवहारार्थं यवनै रुपादीयमानः ( सीरियङ्स् ) इति रूपान्तरं प्रतिपन्न इति। दृश्यन्ते हि बहवो वैदेशिकाः शब्दाः संस्कृतप्रकृतयः। यथा–(मदर, फ़ादर) इत्यादि। न खलु इमे ( मदर, फ़ादर ) आदयः शब्दा एव संस्कृते निविशमाना 'मातृ-पितृ' आदि रूपं प्रतिपन्ना इति शक्यं कल्पयितुम् ॥

अथवा सन्तु सुरङ्गादयः शब्दा वैदेशिका एव। तथापि सर्वेषामेव नवाविष्कृतानामर्थानां तत्तद्भाषागतैरेव नामपदैः संस्कृते व्यवहार इति न युक्तम्। यतः सर्व एव नवाविष्कारः पदार्थास्तत्तद्देशभाषसु प्रथमं लब्धव्यहाराः पश्चादेव संस्कृतस्य गोचरा भवन्ति। एवं तर्हि तत्तत् पदार्थानां तत्तद्देशभाषागतैरेव नामभि र्व्यवहारे क्रियमाणे न जाने संस्कृतनिबन्धेषु-'विभक्तीः, अस्ति, नास्ति' इत्याद्याख्यातञ्च वर्जयित्वा अपरः कश्चित् संस्कृतशब्दः श्रूयेत। नवा श्रूयेत। तन्न युक्तं संस्कृतेऽविकृतानामेव वैदेशिकशब्दानां प्रयोग इति ॥

युज्यते पुनः भाषान्तरेषु (हिन्द्यादिषु) भाषान्तरगतानां ( इङ्गलिश-संस्कृतादिगतानां ) शब्दानामविकृतानामेव प्रयोगः। प्रायशो हि लोकभाषा व्युत्पत्तिरहिताः। तत्सहिता वा तत्तदर्थाना मन्वर्थनामव्युत्पत्त्यनर्हाः। इति युज्यते तासु भाषान्तरगतानां शब्दानां प्रयोगः। न हि पाश्चात्यभाषायां हिन्दीभाषायां वा ( हिन्दू, घी ) प्रभृतीनां (कोट, सिगरेट) प्रभृतीनां वा व्युत्पत्तिः शक्या कल्पयितुम्। येषां पुनरर्थानां भाषासु व्युत्पत्तिः सुलभा तेषां यथायथं व्युत्पन्नाः शब्दा व्यवह्रियमाणा दृश्यन्ते। यथा (पैरगाडी=साईकिल, आगबोट, हवाई जहाज़ ) इत्यादि ॥

किञ्च ये द्रव्यवचनाः संज्ञाशब्दाः "यज्ञदत्त, देवदत्त" (थामस, जोन्स) प्रभृतयस्तेऽवि-

टि० (१) यद्यपि संस्कृते भाषान्तरेषु च भाषान्तरगताः संज्ञाशब्दाः विकार्य प्रयुज्यमाना दृश्यन्ते। यथा संस्कृतशब्दाः 'पाटलिपुत्र" चन्द्रगुप्त' प्रभृतयो यवनैः (पालिबोथ्रा, सेण्ड्रकोटस) इति विकार्य प्रयुज्यन्ते। एवं पाश्चात्यशब्दाः (मिनेण्डर, स्काण्डनेव्हा) प्रभृतयः संस्कृते 'मिलिन्द" 'स्कन्दनाम" इत्यादिना विकार्य प्रयुज्यन्ते। तत्रापि क्वचिद् व्याख्यानादिना क्वचित् स्वरवर्णसाम्येन तद्विकारानुमानाच्च तैस्तैस्तत्तदर्थबोधः। नामान्तरवत् स्त्रीबालालापवच्च। इति।

कृता एव प्रयुज्यमानाः स्वार्थं बोधयितुमीशते । न खल्विमे देवदत्तादयः शब्दाः 'देवदिएा' अथवा 'डेवडट्' 'तामस' आदि शब्दैः विकृत्य पदार्थान्तरेणानूद्य वा प्रयुज्यमानाः स्वार्थं बोधयितुमर्हन्ति । तद्युक्त एव 'हिन्दू' प्रभृतीनां संज्ञासब्दानां भाषान्तरगतानामविकृतानामेव भाषान्तरेषु प्रयोगः ॥

इदं नामायुक्तमननुरूपञ्च । यत्र संस्कृते 'सर्वाणि नामान्याख्यातजानि' इत्यातिष्ठन्ते सर्वे नैरुक्ता वैयाकरणाश्च । यदर्थानि च निगमनिरुक्तव्याकरणाद्यङ्गानि । तत्रैवेमेऽभिनवा अभिनवैः शिल्पविज्ञानवैभवैराविष्कृताः पदार्था भाषान्तरगतैर्लौकिकैरेव शब्दै र्व्यवह्रियन्त इति । तस्मात् यथा भाषान्तरेषु तत्तदर्थानां तत्तदर्थानुगतानि नामपदानि व्युत्पाद्य व्याह्रियन्ते । यथा-( मोटर, बाईसिकिल इन्सपैक्टर) प्रभृतीनि । एवं संस्कृतेऽपि तत्तदर्थानामन्वर्थानि नामपदानि व्युत्पाद्य व्यवहार उचितोऽनुरूपश्च स्यात् । भाषान्तरेषु खल्वपि अभिनवानामर्थानामभिनवा एव वाचकशब्दा अन्वर्था योगतः कल्प्यन्ते । न च तेषु सन्ति निरूढा वाचकशब्दाः क्लृप्ताः । तत्कथं संस्कृतेऽव्युत्पन्नेष्विव प्राकृतेषु अविकृतानामेव लौकिकशब्दानां व्यवहार उपपद्येत ॥

किञ्च ये येऽभिनवा पदार्था येषु देशेषु लब्धात्मानः प्रथमं व्यवहारपदे पदं प्रयच्छन्ति । ते सर्व एव तद्देशवासिभिः स्वभाषया केनचिदन्वर्थेन योगेन लब्धव्युत्पत्तिभि र्नामपदैः र्व्यपदिश्यन्ते । एवं चेत् संस्कृतेऽपि अभिनवाः पदार्थाः प्रथमं व्यवहारपदवीमुपगच्छन्तः केनचिदन्वर्थेन योगेन व्यपदिश्येरन् तत् शोभनमनुरूपञ्च संस्कृतस्य भवेत् । भाषान्तरेषु व्युत्पन्नाः पदार्थाः संस्कृते प्राकृतवत् केवलमनुकरणै र्व्यवह्रियन्त इति महदेतल्लाघवकारणं सस्कृतस्य । तन्नयुक्तं संस्कृतेऽविकृतानामेव वैदेशिकशब्दानां प्रयोग इति ॥

यदपि प्रवदन्ति–येऽमी भाषान्तरेषु अभिनवानामर्थानां निरूढा वाचकशब्दास्त एव. लेशतः स्वरवर्णविपर्यासेन तत्सदृशा वा संस्कृते व्युत्पाद्य व्यवहारार्थं कल्पनीया इति । अथ च ( ओरियण्टल कालेज़=Oriental college,) मोटर=Motor, दर्जी=Tailor,) प्रभृतीनां भाषिकशब्दानां "आर्यान्तलकालेज" "मृत्तर" "दरयोजी" इत्यादितत्सदृशविपरिणामत -द्व्युत्पादनप्रयासश्च

तत्रैवं सति न शक्यते सहसा निर्धारयितुं-किमिमे मिलिन्दस्कन्दनाभादयः शब्दा आहारविहारवशात् देशसात्म्येन च अयथास्थानकरणमुच्चार्यमाणा व्यवहारवशात् कालेन विकृत्य इदमीदृशं रुपान्तरं प्रतिपन्नाः ? सर्व एव संस्कृतशब्दाः कालवशात् विकृत्य लोके प्राकृतभावमुपगता इति हि तद्विदां प्रवादः । भूयांसश्च पाश्चात्यभाषासु संस्कृतविकाराः प्राकृत इव लिङ्गतोऽभिज्ञायमाना अवलोक्यन्ते । आहोस्वित् (मिनेएडर, स्काएडनेव्झा) इत्यादयो वैदेशिकशब्दा एव संस्कृते व्यवहारार्थमुपादीयमानाः स्वभावसुलभेन ईदृशेन स्वरवर्णविकारेण समयुज्यन्त ? इति ॥

वहन्ति । एतदपि तादृशमेव ॥

प्रथमं येषामर्थानां संस्कृते वाचकशब्दा निरूढास्तेषां व्यवहारार्थं भाषिकशब्दानां तत्सदृशविपरिणामतद्व्युत्पादनादिक्लेशो व्यर्थः । अपरं येषामपि वाचकशब्दाः संस्कृते नोपलभ्यन्ते । तेषां व्यवहारार्थं भाषिकशब्दानां तत्सदृशविपरिणामप्रयासो निरर्थक एव । यथा ह्यन्यासु भाषासु नवनवाः पदार्थाः स्वातन्त्र्येण केनचिदनुरूपेण योगेन वाचकशब्दान् प्रकल्प्य व्यवह्रियन्ते । एवं संस्कृतेऽपि युक्तः स्वातन्त्र्येणैवाभिरूपेण योगेन वाचकशब्दान् प्रकल्प्य व्यवहारः । तत् किमिति मुधा-म्लेच्छवाचां सदृशविपरिणामकलङ्कपङ्केन कलुषीक्रियतेऽमृतवाहिनीयममरभारती ॥

भाषान्तरेषु भाषान्तरगताः शब्दा अविकृता एव प्रयुज्यन्त इत्येतदनुदाहरणम् । यतोऽव्युत्पन्नाः प्रायो देशभाषाः । व्युत्पन्ना अपि काश्चन न सर्वेषां पदार्थानामन्वर्थां व्युत्पत्तिं निर्वोढुमर्हन्ति । इति युक्तस्तासु अविकृतानां लोकस्वभावसुलभेन स्वरवर्णविपर्य्यासेन लेशतो विकृतानां वा प्रयोगः। न हि सन्ति ( हिन्दू, घी ) प्रभृतयो भाषायां शब्दा व्युत्पन्नाः । नवाऽस्ति पाश्चात्यभाषायामेवमादीनां योगतः समुचिता व्युत्पत्तिरिति

एवं (कोट, सिगरेट) प्रभृतयः पाश्चात्यशब्दा अव्युत्पन्नाः । व्युत्पन्ना अपि केचन हिन्द्यां समुचितव्युत्पत्त्यनर्हा इति युक्तस्तेषामविकृतानामेव प्रयोगः । संस्कृते पुनः सर्वमेव नामजातं केनचिदन्वर्थेन योगेन जातिगुणक्रियाभि र्व्यपदिश्यमानमात्मानं लभते । प्रायो देशभाषास्वपि नवनवाः पदार्था नवनवैरेवान्वर्थैं र्योगतः कल्पितै र्नामपदै र्व्यपदिश्यन्ते । तद्यदि यथा भाषान्तरेषु नवनवाः पदार्थाः प्रथमं व्यवहारपदे पदं निदधाना योगतो व्युत्पन्नै र्नामपदैराख्यायन्ते । एवं संस्कृतेऽपि तज्ज्ञैस्ते तेऽर्थाः प्रथमं व्यवहारपदव्यामवतरन्तो योगतोऽर्थतश्च व्युत्पन्नै र्नामपदैर्व्यपदिश्येरन् । चेत् तच्छोभनमनुरूपञ्च भवेत् । नन्वेव प्राकृतवत् संस्कृते भाषान्तरशब्दानामविकृतानामेव प्रयोग उचितोऽभिरूपो वा । कथमिव देशभाषासु व्युत्पन्नै र्योगतः कल्पितै र्नामपदै र्व्यवह्रियमाणाः पदार्थाः संस्कृते प्राकृतवत्तैरेव लौकिकै र्नामपदै रलब्धव्युत्पत्तिभिरनुकरणभूतै र्व्यवहरिष्यन्ते ? कथमिव च तत्रभवती भगवती सुपर्वसरस्वती स्वतन्त्रा म्लेच्छभाषासदृशविपरिणामपारतन्त्र्यपाशीकरणेन दुर्वहमभूतपूर्वं बन्धनदुःखमनुभाविष्यते ? व्योमयानादयश्च संस्कृते शतशस्ततदर्थानामन्वर्था वाचकशब्दाः योगतः क्लृप्ताः । यथा चैवं तथा निदर्शितं पुरस्तात् ॥

एवं तर्हि नवाविष्काराणामपि अर्थानां स्वातन्त्र्येणैव केनचिदन्वर्थेन योगेन व्युत्पाद्य नामकरणं शोभते घटते च ॥

सत्सु च ( ओरयण्टल, दरजी ) प्रभृतीनामर्थानां "प्राच्य" "तुन्नवाय" प्रभृतिषु निरूढेषु वाचकशब्देषु "आर्य्यान्तल" "दरयोजी" इत्यादिसदृशविपरिणामप्रयासः केवलं व्याकरणविज्ञानवैदग्ध्यप्रदर्शनम् । उत वा परिहासः । नह्यनया कल्पनया (ओरयण्टल, दर्जी) शब्दौ व्युत्पादितौ भवतः । अन्यो हि अस्वररेफमध्यः (दर्जी

शब्दः। अन्यश्च सस्वररेफयकारोभयमध्यो "दरयोजी" शब्दः। यदि च पृषोदरादिषु पाठः। यदि वा 'उणादयो बहुलम्' इति उणादिषु प्रकृतिप्रत्यय व्युत्पत्तिकल्पना। अलमिदानीं संस्कृतासंस्कृतविकल्पेन। कृतश्चेदानीं महताऽनेन व्याकरणमहोदधिना। एकेनैव पृषोदरादिसूत्रेण सर्वे शब्दाः सर्वदा सर्वासु भाषासु सर्वावस्थाः संगृहीता भविष्यन्ति।

तदेवममर्य्यादे मर्य्यादायां कल्पनीयायां

"नैगमरूढिभवं हि सुसाधु।"

इति वार्त्तिककारोक्तदिशा पृषोदरादीनां विषयविशेषव्यवस्था समाश्रयणीयैवेति "दरजी" आदि पदानां व्युत्पतिप्रकारः केवलं प्रहेलिकावद् व्याकरणे मन्दव्युत्पत्तीनां चित्तचमत्कारः॥

तस्मात् नवनवानामर्थानामन्वर्थैः श्रव्यैः स्वरवर्णसन्धिसौष्ठवोपचितै र्व्युत्पन्नै र्नवनवैरेव नामपदैः स्वातन्त्र्येण संस्कृते व्यवहारः सहृदयानां हृदयङ्गमो भवितुमर्हतीति॥

अपि चेदानीं यथा हिन्दीविदः कथेतिहासवार्त्तिकपत्रादिभि र्निबन्धै र्नवै र्नवैरभिनवां वृद्धिं हिन्दीभाषाया वितन्वानाः प्रायः सर्व एव पाश्चात्यभाषाभ्याससातत्यात्तद्वासनावासितमतयो हिन्दीमपि प्रायस्तत्पदवाक्यरचनासाम्यानुवासितामेव लिखन्ति व्यवहरन्ति च॥

यथा, प्रकाशक—

**मङ्गलदत्त बहुगुणा,**

अध्यक्ष बहुगुण-भैषज्य भण्डार,

कनखल, हरिद्वार, यू० पी०॥ इति।

इयं वाक्ययोजना सर्वथा पाश्चात्यभाषावाक्यरचनासाम्यानुवासिता। पाश्चात्यभाषाभ्याससातत्याच्च तद्वासनावासितमतयः पाश्चात्यभाषायामधीतिनः सर्व एव तद्रचनासाम्यानुविद्धामेव भाषां प्रयुञ्जते। अपरे च तदभ्यासवशात् तथाविधामेव भाषां व्यवहरन्ति। निरुक्ते च वाक्ये मुख्यविशेष्यं प्रथममुल्लिखितम्। ततश्च विशेषणानि। एषा शैली पाश्चात्यभाषायाः। यथा-(The Examination of the University of the Punjab.) इत्यादि॥

भाषायां तु पूर्वं विशेषणं पश्चाच्च विशेष्यमिति व्यवस्थिता प्रयोगशैली। यथा-(पञ्जाबके विश्वविद्यालय की परीक्षा) इत्येव व्यवस्थितं प्रयुज्यते। न कदाचिदपि (परीक्षा विश्वविद्यालय की पञ्जाब के) इति प्रयुज्यते। तत्समानयोगक्षेमतया निरुक्तवाक्येऽपि (हरिद्वार कनखल के बहुगुण भैषज्य भण्डार का अध्यक्ष बहुगुण पं० मङ्गलदत्त) इत्येव प्रयोक्तव्यम्।

एवं प्रायः संस्कृते पदपदार्थाभिज्ञाः संस्कृतभाषामर्मानभिज्ञास्तत्पदपदार्थयोजनास्वकृतपरिचया अप्याधुनिका हिन्दीविदस्तद् व्यवहारसातत्यात् तत्पदपदार्थयोजनानुशीलितमतयस्तथैव संस्कृतेऽपि हिन्दीसाम्यानुवासिताभिरेव पदपदार्थयोजनाभि र्निबन्धान् निबध्नन्ति। प्रायो हिन्दीविदः संस्कृतस्यानभिज्ञास्तद्गन्धमाघ्रायैव संस्कृतमर्मविज्ञानगर्वदुर्ललिताः संस्कृत समारोपितगारवाः

टि० (१) एतदुदाहरणानि अस्मदविरचितेऽभिनवरूपके द्रष्टव्यानि। एतच्च अचिरादेवास्याममरभारत्यां प्रकाशयिष्यते।

परुषमहाप्राणवर्णभूयिष्ठान् गम्भीरार्थाकृतीन् महार्थानिवापार्थान् अस्थानेऽयोग्यान् शब्दान् निरन्तरं लिखन्ति ॥

नूनं तत्रभवतः सङ्कलयितुर—( सम्पादकमहोदयस्य पि हिन्दीवासनाकृष्टमतेस्तत्साम्यानु वासितान् अस्थानेऽयोग्याननेकानपशब्दान् प्रयुञ्जानस्य हस्ते पतिता सम्प्रति सुपर्ववाणी कर्पटखण्डशतपरिस्यूतेव कन्था सहृदयानामुद्वेजनीया संवृत्ता ।

प्रथमं तत्रभवता समुल्लिखितः "अहो काशीस्थपण्डितानां दुरभिनिवेशः" इति शीर्षको निबन्ध उदाहरणार्थं सहृदयनां समक्षमुपस्थाप्यते ।

नात्र मम मनागप्याग्रहः--उद्योते दोषानुद्भाव्य तस्य तत्सङ्कलनकर्त्तु र्वा लोकेऽनादरं ग्राहयितुम् । स्वस्य वा तद्दोषोद्भावनेन दोषज्ञतां विख्यापयितुम् । केवलममरभारतीगौरवाकृष्टहृदयेन तस्या अभूतपूर्वमिममीदृशमपचारमसहमानेन मयैतव्द्यवसितम् । तदर्हन्ति सहृदयाः सुरभारतीगौरवेण रागद्वेषौ विमुच्य विवेकविशदां दृष्टिमास्मिन्नसारेऽपि प्रबन्धे पातायितुम् । अनुग्रहीतुञ्च स्वाभिप्रायप्रकाशनेन । इति ॥

( क्रमशः ) ।



टि० (१) एतदुदाहरणं साविस्तरमस्माद्धिन्दीव्याकरणभूमिकायां द्रष्टव्यम् ॥

## ॥ गजान्योक्तयः ॥

स्वहस्तसंवाहनमानयोग्यः
पृथुश्रियां यः पृथिवीश्वराणाम् ॥
करीन्द्रशावः खरवद्धताद्य
विक्रीयते जीर्णवणिक्पथेषु ॥ १ ॥

न भारवाही करभः खरो वा
न वैप तुङ्गश्चटुलस्तुरङ्गः ॥
श्रिया विशालाविव केलिशैलौ
कुम्भौ शुभौ यस्य स कुम्भिशावः ॥ २ ॥

दन्तीन्द्रो मदकल एव मानवेन्द्र
द्वारार्हो विसरति यस्य गण्डसक्तः ॥
नृत्यन्त्या मणिभवनेपु राजलक्ष्म्या
मञ्जीरध्वनिरिव मञ्जुलाळिघोषः ॥ ३ ॥

## संस्कृतविद्याऽवनतेः किंकारणम्?

यद्यपि एषु दिनेषु संस्कृतविद्याभिवृद्धयर्थं प्रायः बहवः प्रयतमानाः समुपलभ्यन्ते । यतस्ततः तापसाः सन्यासिनो विरक्ताः साधवश्च परोपकारार्थं नाम शरीरं धारयमाणाः पाठशाला विद्यालयान् महाविद्यालयान् ब्रह्मचर्याश्रमान् गुरुकुलं ऋषिकुलाम याद्या बह्वी र्बहुविधाश्च संस्थाः संस्थापयन्ति । अपि चेदानीं देशे देशे नगरे नगरे नानाविधाः समितय समायोजिता. । यत्र विरुदार्थिन, उपाधिख्यातिलुब्धा अल्पव्ययेन अल्पायासेन च समीहितं गौरवाचितञ्च विरुदं लभन्ते । एवं स्थूलदृष्टया विचार्यमाणे संस्कृतसाहित्याभिवृद्धयै त-

त्प्रचाराय च बहूनि साधनानि समुपलभ्यन्ते । एवं तत्प्रचारार्थं बहुधा प्रयत्ने क्रियमाणेऽपि संस्कृतविद्याया अहरहः कृष्णपक्षशशिकलाया इव क्षयो न सहृदयानां परोक्षः । तत्किं कारणम् ?

महता कारणेनात्र भवितव्यम् । यदिदं भक्तवस्त्रैः शुल्कपारितोषिकादिभिरुपचर्य्यमाणा अपि संस्कृतविद्यां नाद्रियन्ते । महत्यापि प्रेरणया परिमितमेव परीक्षायाः पारगमनयोग्यं ज्ञानमासाद्य तावतैव उपरता भवन्ति । न पुन र्भयादिव परावृत्य द्रष्टुमप्युत्सहन्ते । तद्विपरीतञ्च पाश्चात्यभाषामप्रेरिता एव दरिडता अपि दुरुक्ता अपि मात्रयापि विद्याशालानियमान् अनतिचरन्तोऽहमहमिकया अधीयते । तत्र किं कारणम् ?

सर्वस्यास्य कारणं मतिमतां सुविदितमेव । यद्धि लोके आदरास्पदं तत्र सर्वोऽप्रेरित एव प्रवर्त्तते । महाफलञ्च कर्म आदरास्पदं भवति । तत्र च सर्वे बद्धोत्साहा भवन्ति ॥

अफलेऽल्पफले वा कर्मणि प्रेर्यमाणोऽपि कश्चिदेव प्रवर्त्तते । प्रवर्त्तमानोऽपि कश्चिदेव हृदयेन तत्साधयितुमिच्छति । तत्र किं नाम समुद्दिश्य क्लेशसाध्यां व्युत्पत्तिं निर्वोढुं धृतोत्साहा भवेयुः । सेयं दशा सम्प्रति संस्कृतपाश्चात्यभाषयोः समं समुपस्थिता । अल्पफलं अफलं वा प्रत्यक्षेण संस्कृतभाषाऽध्ययनम् । महाफलञ्च पाश्चात्यभाषाऽध्ययनम् । पाश्चात्यभाषामधीत्य जनो लोकानां प्रशास्ता धनी मानी च भवति । संस्कृते पुनरनुत्तमां परीक्षां पारयित्वा प्रौढाञ्च व्युत्पत्तिमासाद्यापि यन्महत्वं यच्च पदं प्राप्नोति तत्सर्वेषां प्रत्यक्षम् । इदानीं पुनर्ये संज्ञार्थं परिडताः परीक्षोत्तीर्णास्तेऽपि वृत्त्यर्थं सीदन्ति । तत्र किं नाम समुद्दिश्य क्लेशसाध्यां व्युत्पत्तिं निर्वोढुं धृतोत्साहा भवेयुः ।

उभये हि संस्कृतविद्याया वृत्तिभागिनः । विद्यार्थिनो विद्वांसश्च । अध्ययनमध्यापनं याजनं कथा उपदेशः ज्यौतिषं वैद्यकमितीमे विद्याजीविनां वृत्तिमार्गाः । तत्र चाध्यापनमेव विदुषां वैदुष्यरक्षणाय प्रभवति । परीक्षणाय च । पौराणिकोपदेशकावपि संस्कृतविद्याश्रयेणैव जीवतः । तेषामेषां सर्वेषां नूनं पूर्वोक्ता एव संस्थाः समाश्रयः ।

परमेतेष्वहस्सु तास्ताः सर्वा एव संस्थाः कुहकैश्चटुलमतिभिः परार्थाभिनयनिपुणैः स्वार्थपरायणैः समाक्रान्ताः संस्कृतविद्याया महतेऽनर्थाय परिणमन्ति । यास्ता ब्रह्मचर्य्याश्रमाद्याः संस्थाः संस्कृतजीविनां समाश्रयभूताः प्रायस्तत्स्वामिनः सन्यासिनः साधवो विरक्ताश्च नाम भूत्वा स्वधर्मरक्षार्थं स्वधर्मैकसमाश्रयभूतायाः संस्कृतविद्यायाश्च प्रचारार्थं लोकान् तद्वेषभाषाविमुग्धमतीन् संस्कृतस्य स्वधर्मस्य च महात्म्यमुत्कीर्तयन्तः पञ्चषान् प्रलम्बचूडशेषं मुण्डितमस्तकान् पीतरक्ताः शाटीः परिधाप्य ग्रामे ग्रामे नगरे नगरे परिभ्रामयन्तस्तत्र तत्र जनसमाजेषु समाहूय सभां प्रबन्धप्रसङ्गे व्याख्याने समुद्घोषयन्ति—यदिमे ब्रह्मचारिणोऽह्नस्त्रिः सन्ध्यामुपासते । अग्निहोत्रं जुह्वति । स्वाध्यायमधीयते । ब्रह्मचर्यं धारयन्ति । एष नः सनातनः सदाचार एतदेकसमाश्रयः समेधते । तदिदानीं प्रलुप्ते धर्मे स्वाध्यायस्य ब्रह्मचर्यस्य च वार्ताप्य-

मपि श्रवणागोचरायां सोऽयं सनातनो धर्मः संपूत्यै तदेकसमाश्रयो भारतभुवो गौरवं वर्द्धयति। एभिरेव च प्रदत्तै र्हविर्भिः परितुष्टो भगवान् मरुत्वान् भुवं वृष्ट्याऽभिनन्दति। इत्यादिना ऋजुमतीन् संस्कृतविद्यापदेशेन वशीकृत्य द्रव्यमर्जयन्ति। उद्घोषयन्ति च सभासु जनसमाजेषु च-एषां सायम्प्रातः पयः पानार्थं प्रदीयते। अह्नः द्विःसोपस्करं सव्यञ्जनं सोपदंशं स्निग्धमुष्णञ्च भक्तम्। ग्रीष्महेमन्तयो र्घनं सूक्ष्ममिति समयानुकूलमाच्छादनम्। वेदवेदाङ्गानां पृथक्पृथगध्यापनार्थं तत्तद्विद्यापारङ्गताः पण्डिता नियुक्ताः। इत्यादि बहुप्रकारेण जनपदग्रामनगरनिवासिनो जनान् धर्माचरणापदेशेनातिसन्धाय प्रभूतं द्रव्यमर्जयन्ति। स्थूलमसारञ्चैभ्यो ब्रह्मचारि (विद्यार्थी) व्यपदेशभ्यः प्रदाय स्थिरं सारं प्रभूतं स्वयमुपांशु भुञ्जते किं बहुना। एवं वाक्कौशलेन द्रव्यमर्जयित्वाऽपूर्णं लघुकौमुदीकमगृहीतसप्तविभक्तिप्रभेदमेकमुत द्वौ पण्डितवर्यौ उपाध्यायपदे नियुज्य स्वबाह्याडम्बरेण तद्वेषभाषाडम्बराकृष्टमतिभ्यो दारकान् स्वाश्रमं नीत्वा ब्रह्मचर्यं नाम ग्राहयित्वा वेदवेदाङ्गाध्यापनव्याजेन स्वधर्मानुष्ठापनव्यपदेशेन चैषां चिरमायु र्वृथैव क्षपयन्ति। स्वयञ्चैतान् द्वारीकृत्य प्रभूतं द्रव्यमर्जयित्वा पश्चात् त्यक्तसर्वकार्याः स्वकार्यपरा भवन्ति। प्रायोऽन्यासामपि एवम्भूतानां संस्थानामेवैव दशा। एतच्च परस्तात् सविस्तरं वर्णयिष्यते॥

याः पुनरेताः पाठशाला विद्यालया वा आढ्यैः करणपूर्वं निसृष्टस्वाःता अपि कालवशात् नष्टसर्वस्वानां तत्सन्ततीनां तदधिकृतानामेव वा शरीरयात्रार्थं परिणमन्त्यो नामशेषतां भजमाना दृश्यन्ते।

याः पुनरपरा जनसमाजसंस्थापिताः सनातनपक्षपतिताः समाजपक्षपतिता वा ऋषिकुलगुरुकुलाद्या उपदेशकसभाद्याश्च संस्कृतसमाश्रयाः संस्थाः ता अपि सर्वतो निरुक्तस्वतन्त्रलोकसंस्थाभिः समानयोगक्षेमाः। एष परममीषां विशेषः। यदमी उभयेऽपि सनातना आर्य्याश्च समाजा इमामेव चतुर्दशविद्यास्थानभेदभिन्नाममरभारतीं तदर्थञ्च धर्मं पुरस्कृत्य देशे देशे नगरे नगरे सभाः समवायांश्च संस्थाप्य विद्याजीविनां वृत्तिं पणयमिवैकमुखीकृत्य (१) विद्याबुद्धिवाचोयुक्तिनयनैपुण्यगाम्भीर्यादीन् पण्डितोचितान् गुणानगणयन्तो विद्वद्भ्यो विद्यावृत्तिमाच्छिद्य अपव्ययन्ते अवस्रावयन्ति(२) वा। एवं लोकधनसंरचिताभि र्महतीभि र्लोकसंस्थाभिः स्वायत्तीकृतवृत्तयो यथार्हमनाद्रियमाणा मानधना मन्ये विद्वांसोऽद्य वृत्तिकर्शिताः कमिव क्लेशं सहन्ते। एवमन्या अपि प्रायः लोकसमवायसंस्थापिताः संस्कृतविद्यार्थाः संस्थाः प्रायो निपुणमतीनां नवव्यवहारिणां जीवनाय द्वारभूताः संवर्तन्ते। विद्याजीविनो विद्वांसो विद्यार्थिनश्च केवलमेभि र्द्रव्यार्जनाय द्वारीकृताः कर्षकाणां घासोदकस्येव बलीवर्दाः स्थूलस्यासारस्य च भागिनः कृताःकष्टेन वर्तयन्ति।

अपरश्चैते नवशिक्षिताः सनातना नाम संस्कृतविद्यां पुरस्कृत्य धनमर्जयन्ति। अथ च चातुर्य्येण

(१) ठेका=Having contracted, इति भाषायाम्।

(२) अपवाहयन्ति।

पाश्चात्यभाषाशिक्षार्थं विद्यालयेषु ( स्कूल ) महाविद्यालयेषु ( कालेज ) च व्ययन्ते । तदन्तर्भूता संज्ञार्थं संस्कृतपाठशाला काचित् संस्थाप्यते । कश्चित्, एको द्वौ वा पण्डितवेषौ, अध्यापकौ । पञ्चषाश्च छात्रास्तावत् यावत्पुण्याहेषु समाजोत्सवदिनेषु, आढ्यानां धर्मात्मनाञ्च संदर्शनेषु धर्मानुष्ठानं विद्याप्रचारञ्च स्वस्तिवाचनाद्यैर्घोषयितुं पर्याप्ता भवेयुः ।

इदानीं परं संस्कृतस्य समादरस्तत्प्रचारप्रयत्नश्च बहुप्रकारेण विजृम्भित समवलोक्यते । यतः चिरादिमे सङ्घाः सनातना आर्याश्च तथा विरक्ताः साधवो ब्रह्मचारिण इति लब्धसमाह्वयाः स्वधर्मस्य तत्प्रतिपादकस्य च संस्कृतस्य गौरवं लोके समुद्घोष्य तत्–( संस्कृत ) प्रचारार्थास्ता स्ताः संस्थाः संस्थापयन्तस्तेन व्यवहरान्तिस्म । इदानीं पुनः अन्येऽपि गृहीतैद्व्यवहारसारा इममेव संस्कृतविद्याप्रचारं पुरस्कृत्य विसृज्य स्वं पाण्यव्यवहारं परोपकारी देशहितैषी इति चात्मानमभिनयन्तः संस्कृतार्थाभिरन्याभिश्च धर्मार्थाभिः संस्थाभिर्व्यवहर्तुं प्रवृत्ताः । कस्मै नामायं व्यवहारो न रोचेत । कश्चवैनं न बहुमन्येत । येनायत्नमेव धन्यो मान्यः स्तव्यः स्तुत्यश्च भवति सर्वस्य लोकस्य । एतच्चाग्रे, एकैकशः सोदाहरणं सोपपत्तिकं वर्णयिष्यामः । प्रस्तुतञ्चामृतसरनगरम् यत्र सतीष्वपि बह्वीषु पाठशालासत्राद्यासु संस्कृतहितार्थासु संस्थासु केवलं मिताश्छात्राः समेत्य भक्तार्थं सीदन्ति ।।

तस्मात् सर्वमेतत् संस्कृतार्थानां संस्थानामव्यवस्थाविजृम्भितम् । तदधिकारिणाञ्चानवधानानिबन्धनमिति च धीमतां सुप्रकाशमेव ॥

एवं सर्वत एव संस्कृतार्था लोकसंस्था जीर्णप्रायाः संस्कृताध्ययने विद्याजीविनामुत्साहं वर्धयितुं मनागपि न प्रभवन्ति । याश्च पुनः राजकीयसंस्थाः पाश्चात्यभाषायाः विद्यालयाः महाविद्यालया वा । तत्र विद्यालयाः कृशवृत्तितयाऽनियमाच्च संस्कृतस्य नातीव श्रद्धामुत्पादयितु प्रकल्पन्ते । महाविद्यालयाश्च पाश्चात्यभाषासव्यपेक्षतया प्रौढिविशेषानपेक्षणाच्च संस्कृते विद्याजीविनामुत्साहं वर्धयितुं नार्हन्ति ॥

पुरा किल स्वतन्त्रा लोकसम्मानास्तथाभूताश्च संस्थाः संस्कृतविद्यायां विदुषामुत्साहं वर्धयन्ति स्म । इदानीं पुनस्तां दशां गतासु तासु तासु लोकसंस्थासु राजकीयसंस्थासु च वृत्तिकर्शिता भगवती सुरसरस्वती भारतं निरहय्य सुरलोकं यियासातीव । तन्नचिरादेवैनामभ्युपपत्या आदरेण चोपगृह्य सान्त्वयित्वा पुनर्भारते प्रेम्णा पदं कारायितुं क्षणं कृतक्षणाः भवन्तु मे प्रिया भारती प्रिया भारतीयाः । वृत्तिकर्शितो हि लोको जन्मभूमिमपि परित्यज्य परदेशे लब्धादरो जीवितुं समीहते तत्को नाम मनीषी विदेशे कृशवृत्तिः विगलितादरश्च जीवितुमुत्सहेत । तद्यदि सुरसरस्वती वृत्तिकर्शिता विगलितादरा च सुरलोकं यियासति किमत्र चित्रम् ॥

सेयममरभारती नाम नः सर्वेषां भारतीयानामधिकारभ्रंशैश्वर्यापहारापमानजनितवेदनया प्रश्यतो हृदयस्यैकावलम्बनम् । निरवलम्बतया वि-

गलतो धैर्य्यस्य प्रत्यवस्थापनम् ॥

तदस्या यथापूर्वं भारते प्रतिष्ठां प्रचारसमृद्धिञ्च सम्पादयितुं तदर्थाः ( संस्कृतार्थाः ) तास्ताः स्वतन्त्राः समवायसमित्यादिपरतन्त्राश्च संस्थाः—याः सम्प्रति केवलं निपुणमतीनां सुखेन शरीरयात्रार्थं क्लृप्ताः संस्कृतविद्याव्यपदेशं वहन्त्योऽपि मनागपि तां नोपकुर्वते-तासां सुव्यवस्थार्थं प्रथमं किञ्चिद्विधानमनुचिन्तनीयम् ॥

तदर्थं विद्याजीविनां ( विद्यार्थिनां विदुषाञ्च) एकां परिषदं कल्पयेयुः। तद्द्वारा च तास्ताः स्वतन्त्राः समवायपरतन्त्रा वा संस्कृतहितार्थाः संस्थाः परिषन्नियुक्तानां संस्थादर्शकानां द्वाराऽवेक्षितुं तासाञ्च व्ययं समुदयं प्रबन्धञ्च निरूपयितुं राज्याधिकरणेभ्योऽधिकारञ्च प्राप्नुयुः। तत्र च संस्थादर्शकपदेषु तांस्तान् विदग्धान् अलुब्धान् विदुषो विद्यार्थिनो वा यथोचितं परिषन्नियुञ्जीत। तत्र चैवं न सहसैव निपुणमतयः संस्कृतव्यपदेशमाश्रित्य विद्याजीविनां वृत्तिमाच्छिद्य भोक्तुं लप्स्यन्ते। विद्याजीविनां वृत्तिरपि संपत्स्यते ॥

एतदर्थञ्च प्रथमं सर्वतः प्रख्याततमान् पण्डितानन्यांश्च विद्याजीविनो विदुषो विद्यार्थिनश्च समाहूय सभामाबद्ध्य निरुक्तमर्थमन्यांश्च संस्कृतस्य तत्सेविनाञ्च हितानर्थान् प्रस्तूय सर्वमतेन निर्धारयेयु । निर्धार्य च तं सर्वमर्थं राज्याधिकारिणोऽन्यांश्च विद्यानुरागिणो निवेदयेयुः। परतश्च यथावसरं यथोचितञ्च कार्यं कुर्युः ॥

किञ्चैवं ग्रामे ग्रामे नगरे नगरे समर्थानां सोत्साहानाञ्च छात्राणामेकं सङ्घं सुविहितनेपथ्यं सुनिरूपितकार्यं सुविदग्धैकनायकमनेकनायकं वा गृहीतसमयोचितसेवापाटवं महावीरदलवत् सुरसरस्वत्याः सेवार्थं भारतीसङ्घञ्च(१) कल्पयेयुः ॥

ततश्च तद्भारतीसङ्घः परिषत्प्रमाणः परिषन्नियुक्तनायकाधीनः परिषन्निदर्शितेषु कार्येषु च वर्तमानः सुरसरस्वत्या अनर्घं सेवाधर्ममासादयेत् ॥ इति ॥

क्रमशः।



## समस्यापूर्तयः

१. नीते रत्ने भाजने कोनिरोधः।
२. विशासि यदुपते।
३. दशहितं समस्ति।

(१) भारतीसङ्घ इति वा अन्यद्वा यत्किञ्चिदभीष्टं नाम कल्पनीयम्।

॥ श्रीः ॥

## —: शोकोद्गारः (१) :—

कृताधिकारं विनिहन्ति नूनम्
रविं यथा भूमितलेऽन्धकारम् ।
तथैव विज्ञानकरैः सुविज्ञा
अजस्रमज्ञानतमो नुदन्ति ॥ १ ॥

परोपकारे विनियोजितं यैः
भोगादपाकृत्य नरैः स्वचेतः ।
यमस्य दृग्गोचरतां गतास्ते
धिक्त्वां विधे ! स्वेतरकीर्तिभीरुम् ॥२॥

अकारणं भारतवर्षमुज्झितम्
बुधाग्रगण्येन सताऽपि यत्त्वया ।
अतो नु किं लाजपते ! वसुन्धरा
न साम्प्रतं त्वामनुगच्छति द्रुतम् ॥३॥

क्षितिस्तु तावत् परिहीनचेतना
यतो न सा लाजपतिं समन्वगात् ।
सचेतना यत्नगता नरा अपि
धिगस्तु तान् प्रस्तरतुल्यमानसान् ॥४॥

गतेऽस्तशैलं हि सहस्रदीधितौ
जडेऽपिलोकस्तमसाऽभिभूयते ।
सचेतने लाजपतौ गते रवौ
किमत्र चित्रं यदि भूस्तमिस्रिता ॥५॥

(१) अयं यद्यपि सन्दर्भः महाकविकालिदासादीनां पदवीं न स्पृशति । तथापि प्रसादःसौकुमार्यं माधुर्यं च केवलं विशारदपरीक्षोत्तीर्णस्य काव्यशक्तिं स्वाभाविकीं व्यनक्ति ।
( Editor. )

प्रतिष्ठमानेन दिवं गुणप्रिय !
कृतं त्वया लाजपते भुवस्तलम्
समस्तसांसारिकजीवसङ्कुलम्
हरिं विना काननवद्विमङ्गलम् ॥६॥

समस्तरत्नैर्मणिभिश्च संयुता
प्यनेकपुंव्याघ्रसमान्विताऽपि च ।
इयं त्वया लाजपते ! विना क्षितिः
न राजते व्योम विनेव भानुना ॥७॥

त्वमेव तावद्भव भूमिपालो
देशे न इत्थं कथितः सहर्षम् ।
अमेरिकाधिश्रितमानवैस्त्वम्
यदब्रवीस्तन्ननु विस्मृतं ते ॥८॥

आगामिवर्षे ऽत्र भवामि राजा
दिदृक्षते मां वसुधा ममेति
निवृत्य नाकात् कुरु तथ्यमुक्तम्
सतां हि वाचो न भवन्ति मिथ्या ॥९॥
(युग्मम्)

वेत्त्येव विज्ञस्य गुणानभिज्ञः
शक्नोति बोद्धुं न विमूढबुद्धिः
ज्ञाता जनै र्लाजपते गुणा नो
देवैस्तु बुद्ध्वा दिवमेव नीता ॥१०॥

द्वेषादयो दूरगता महेशा-
दित्येदुक्तं व्यभिचारयुक्तम् ।
द्रुह्यन् स यल्लाजपते गुणेभ्यः
स्वर्गे तमाहूय रुरोध तत्र ॥११॥

विनश्वरं यो भुवि भूपवैभवम्
स्वतन्त्रतां नेतुमभूत्किलोद्यतः ।

सदातनं सोऽमरभूमिवैभवम्
स्वतन्त्रभावेन कथं न योच्यते ॥१२॥
परोपकारार्थमवाप दुःखम्
वियोगजं जन्मभुवो यदात्मा ।
लभेत शान्तिं शिव ! दीनबन्धो !
अनन्यलभ्यामविनश्वरीञ्च ॥१३॥

**लालचन्द्रशर्म्मा शास्त्रीयः ।**

रा० ब० गा० सं० विद्यालय अमृतसर ।

( हर्षो विषादश्च )

खुर्जाभिजनेन सुगृहीतनाम्ना गौरीशङ्करगोयनकाभिधेन श्रेष्ठिना संस्कृतविद्यानुरागगणामुत्साहं वर्धयितुं मध्यदेशस्थानीय (१) शासनाधिकारे अध्यर्धलचरूपकपरिमितं हिरण्यं न्यासीकृत्यार्पितम् । उद्घोषितञ्च । यदस्य ( न्यासस्य ) वृद्ध्यादिमार्गप्राप्तेनायेन काञ्चित् परीक्षासमितिमायोज्य प्रतिवत्सरं वाराणस्यां राजकीयविद्यालये परीक्षां च प्रकल्प्य तत्र परीक्षोत्तीर्णाः पण्डिता मानेन धनेन प्रख्यातैश्च विरुदविशेषैः अभिपूज्येरन् । यथा विदुषां संस्कृतविद्यायामुत्साहो वर्धेत । इति ॥

नूनं महदेतद् हर्षस्थानम् । परं परीक्षानियुक्तान् निबन्धान् वा तदनुगुणं महान्तं परीक्षार्थिनां तदनुशीलनप्रयासं पश्चात् परीक्षोत्तीर्णानाञ्च पण्डितानां धनं मानञ्च वीक्षमाणस्य मन्ये सर्वस्यैव सहृदयस्य हृदयं समं हर्षविषादाभ्यामाकुलीकृतं स्यात् । यतः परीक्षोत्तीर्णानां एतावद्धनं मानश्च । यद्धि एकैकं शतं काश्मीरं प्रावारकं वाराणसेयं कौशेयमुष्णीषञ्च लभेरन् । वाचस्पतिरिति विरुदञ्च । परीक्षार्थिनां पुनः परिशीलनीया ग्रन्था यावदेतत्पर्यन्तं प्रकटिताः । वेदान्ते "भेदधिक्कार–अद्वैतसिद्धि–ब्रह्मानन्दीय" प्रभृतयः परं शुष्कतर्कगहना व्यवहारातीतविषयाः चिरपरिचिन्तनसाध्या अनेके । इति । तन्नूनमेवंभूतं शुष्ककर्कशतर्कजटिलस्य शब्दग्रामस्य महान्तं ग्रहणधारणप्रयासं पश्यन् मन्येऽद्यपर्यन्तं शास्त्रिष्वकृतप्रयत्नो निदर्शितपरीक्षासम्माननिमित्तं क्वचित् कश्चिदेव प्रयतेत । नवा प्रयतेत । यत एषां निबन्धानां पुराकाले सभासु विद्वद्गोष्ठीषु समाजेषु राजसभासु च विदुषां हृदयहारि वैदुष्यध्वजोद्धननं वादद्यूतं प्रयोजनं समवर्तत । तत्कृता च विदुषां ख्यातिः । इदानीं पुनः प्रशान्त इव तस्मिन् वादद्यूते खिलीभवन्तीषु च शुष्कतर्कविकटासु नव्यनीरसन्यायसरणिषु को नाम मतिमान्–को हि नाम प्रेक्षावान् अल्पफलेऽस्मिन् परीक्षायासे आत्मानं पातयेत् । यत एषु दिनेषु एतादृशा ग्रन्था श्रोतृदौर्लभ्येन मन्दप्रयोजना न सहसैव प्रेक्षावतां प्रवृत्तियोग्या भवन्ति । इति ॥

(१) अत्र स्थानीयपदं ( प्रसिडेन्सी ) इत्यर्थे प्रयुक्तम् । अष्टशतग्रामाणां मध्ये स्थानीयम् । इति कौ० अर्थ० ।

* श्रीः *

# * स्त्रीस्वातन्त्र्यम् *

स्त्रीस्वातन्त्र्यं केचिदिच्छन्ति विज्ञा-
स्तन्नैवान्ये साधु सम्भावयन्ति ।
इत्यारूढानेकतर्कप्रतर्के
युक्त्या युक्तं तत्र किञ्चिद् वदामः ॥१॥

—:([–:*:–]):—

अहोनु खलु महदिदमाश्चर्यं मनीषिणामपि मतिविभ्रमास्पदमिव चाभाति । यदुत मानवः स्त्रियं सर्वपुमर्थावसानं सुखस्यैकायतन स्वाधीनं स्वयं स्वातन्त्र्यदानेन पराधीनं कुर्यात् । लोके हि यस्य यत्सुखसाधनं तदपराधीनं स्वतन्त्रञ्च सत् तस्य-तथाभूतं दृश्यते । स्वस्वातन्त्र्यात् प्रच्युतं परायत्तं च सत् दुःखास्पदमेव भवति । किञ्च लोके जनाः स्वसुखसाधनं परेण लेशतोऽपि अंशतः यथार्हं वा-दर्शनमात्रेणापि उपभुज्यमानं निरीक्ष्यान्तः क्रोधेन दन्दह्यन्ते । को हि नाम मतिमान् स्वसुखसाधनं पराधीनं वाञ्छेत् ? बालोपि खलु स्वेष्टसाधनं स्वाधीनमिच्छति । काकिणीमात्रमपि स्वधनं अन्यायेनोपभुञ्जानमन्यमधिकरणे ऽभियुज्य दण्डेन योजयति । न कश्चिल्लोके आहारविहारोपकरणभूतमपि स्वपरिच्छिदमन्यायेनान्येनोपभुज्यमानं विषहते । यत्पुनरुदारा धनिनो धनं विसृजन्ति । स तस्य (धनस्य) भोगः । दानभोगाभ्यां हि धनं भुज्यते । इति ॥

यदिदं सर्वस्य सुखस्यैकायतनं "सर्वेषामानन्दानामुपस्थमेकायतनं" इति श्रुतेः । यस्मिंश्च सति धनं यौवनं रम्योज्वला वस्त्रालङ्कारवेषाः सुखस्पर्शा हृद्याः शय्यासनाहारविहाराः सुरभिसुमनोहरमन्यद्वा यत्किंचिद्धृदयहारि चित्रगीतवादित्रादि सर्वं सास्पदं भवति । यन्मूलाश्च सर्वा लोकप्रवृत्तयः । अकामस्य प्रवृत्त्यनुपपत्तेः । तामिमां स्त्रियं सर्वसुखसाधनं परतन्त्रं कृत्वा कोऽपरोऽविपरीतमति सुखमन्विच्छेत् ? तिर्यञ्चोऽपि खलु दाराणां परपरामर्शं न विषहन्ते । किमङ्ग सचेतनो मानव । येषु पुनर्देशेषु स्त्रियः स्वतन्त्राः विहरन्ति नूनं तद्देशवासिनो विषक्रमिन्यायेन जीवितं धारयमाणा दाराणां मन्ये परपरामर्शं न गणयन्ति । धनादिकमुचितकार्येषु व्ययेन भुज्यते । स्त्रियः पुनर्दर्शनस्पर्शनसंभाषणमात्रेणापि भुज्यन्ते । अत एव च पुरुषाणां स्वदारेषु परपुरुषदर्शनगोचरमात्रपतितास्वपि मत्सरख्यापकोऽयं लोकवादः "भार्यामीर्ष्यति" इति लोके प्रसिद्धः । किं न विदन्ति सहृदयाः सुकवीनां काव्येषु विरहे विषदिग्धानिव विमोहकारिणः समागमे सुधासिक्तानिव लोचनासेचनकान् आनन्दवर्षिणः कामिनीनां कटाक्षान् ? येष्वातिशयोक्तिपरा अपि कवीनामुक्तयः स्वभावं नातिक्रामन्ति । किं पुनः कटाक्षवीक्षणैरालापैर्वा । नामग्रहणश्रवणमात्रेणापि भुज्यन्ते स्त्रियः । यत्कृते गोत्रस्खलितेषु मानिनीनां मान कवीनां काव्येषु शृङ्गारभङ्गीं पल्लवयति । नामापि खलु स्त्रीणां हृदयमोहकारि प्रहर्षणं शृण्वतां चेतसि विकारं जनयति । यदुक्तं— नामापि स्त्रीति संह्लादि विकरोत्येव मानसम् । किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रुवः ॥१॥ इति ।

परमेतेष्वहस्सु बहवो निपुणा नयव्यवहारिणः सङ्घमुख्यपदमधिरोढुकामा देशहितमुन्नतिञ्चापदिश्य ग्रामनगरजनपदेषु लोकान् प्रकोप्य स्वार्थं साधयन्ति। केचित् कर्मकरसङ्घं वर्द्धयित्वा स्वामिनामपकारमपमानञ्च सङ्घसमवेतेषु व्याख्याय स्वयञ्च तेषां शुभचिन्तका नाम भूत्वा तान् प्रकोप्य स्वायत्तीकुर्वन्ति। स्वयञ्च तेषामग्रेसरा भूत्वा तानपथं नयन्ति। अपरे च चण्डालचर्मकारादीन् वर्णोत्तमानां तेष्वविषह्यमपमानमनर्गलं क्रूरञ्च व्यवहारं तन्निमित्तां स्वपदप्रच्युतिं नीचपदप्राप्तिं च विबोध्य तेषामन्तर्हृदये घोरं विद्वेषवह्निं प्रज्वाल्य परेभ्यो भित्त्वा स्ववशं नयान्ति।

इयमिदानीं शिक्षितानां नीतिः नेतृपदलब्धये सुविख्याता संतिष्ठते। एवं प्रायः सर्वे एव संप्रति तं तं जनसमाजं केनचिद् पदेशेन प्रकोप्य संघमुख्यख्यातिं लिप्सन्ते। तेषामेते नातिनिपुणमतयः—ये अविवेकमतिं वराकं स्त्रीजनमेव प्रकोप्य नेतृपदं लब्धुमिच्छन्ति। तेषामेष व्यवसायः। यत्किल स्त्रीणां पुरुषपारतन्त्र्यं, तत्कृतञ्च घोरं दुःखं, अविषह्यमपचारं, अप्रतिक्रियश्चापमानो लोके प्रख्यातिमिति। यच्चेदानीं लब्धशिक्षाः स्त्रियः अवधीर्य्य पतिदैवतमवज्ञाय गुरून् अवहेल्य मातापितरौ स्वतन्त्राः स्वमनीषया यत्किञ्चनकारिण्यः पुरुषैः समं बलबुद्धिपराक्रमैः स्पर्धमाना सर्वव्यवहारेषु समानं पदं लिप्समानाः सर्वं जगदाकुलीकुर्वन्ति॥

क्रमशः

## ॥ हा कष्टम्! महान् शोकः॥

यत्किलातीतायां माघकृष्णत्रयोदश्यां भृगुवासरेऽपररात्रे सकललोकविश्रुतः सकलवसुन्धरासुरवासवः सकललोकवन्दितः सकलशास्त्रपारङ्गतः सकललोकप्रियः सकलं परित्यज्य निष्कले नित्ये निरतिशये ब्रह्मणि विरहय्य विपण्णाया मातुर्भारतभुवोऽङ्कपालीं हा फोगवाड़ाभुवो भूषणं श्रीपालीरामनामा चिरत्नं पण्डितरत्नं लयं बबन्ध। इति।

अथ श्रूयते-तत्र क्षणात्तदानीमस्यां शोकवार्तायां सर्वतः प्रसृतायां यतस्ततः सहस्रैवासङ्ख्याता लोकास्तत्रभवतोऽन्त्यदर्शनलालसास्तत्र समीयुः।

ततश्च महतोत्साहेन महता च जनकलकलेन सह तदस्य मर्त्यं शरीरमन्त्येष्ट्यर्थं विससृजुः। इति॥

नूनं तत्रभवतः स्वर्गगमनेन सत्यसौजन्यौदार्यादयः समं सुरभारत्या तद्बन्धुभिश्च चिराय निरवलम्बा वर्तिष्यन्ते। तदभ्यर्थमहे स एव सर्वसाक्षी भगवान् भूतपति स्तत्रभवतस्तद्बान्धवानाञ्च हृदये सान्त्वनां जनयिष्यतीति॥

—:x*x:—

# विज्ञापना



इयममरभारती सनातनस्य संस्कृतस्य सेवया आत्मानं कृतार्थीकर्त्तुकामा सहृदयानामग्रे सादरं समुपतिष्ठते ।

अथ चैषु दिनेषु प्रायः सर्वतः शिथिलप्रबन्धानां संस्कृतार्थानां संस्थानाञ्च दशानिदर्शनेन विद्यानुरागिणां मान्यानां च चेतोवृत्तिं ततोऽभिमुखीकरिष्यति ।

किञ्चास्मिन् काले नवाविष्कृतानां तत्तदर्थानां संस्कृते रूढानां वाचकशब्दानामभावेन प्रायस्तत्स्थाने स्वस्वमनीषया वाचकशब्दा अव्यवस्थितं प्रयुज्यमानाः सर्वमेव संस्कृतं प्रणालीपयांसीवामलं गङ्गाजलं कलुषयन्ति ।

तदर्थं नवनवानामर्थानां अव्यानामन्वर्थानाञ्च वाचकशब्दानां तत्तद्ग्रन्थैर्निबन्धै रन्यैश्चोपायैर्व्यवहारप्रचारं सम्पादयिष्यति ।

एवं क्रमेण-सर्वार्थगोचरं सर्वजनसाधारणं सर्वेषामकोपकञ्च "संस्कृतम्" एवेति सैव भारतस्य वर्षभाषा ( राष्ट्रभाषा ) भवितुमर्हतीत्ययमप्यमरभारत्या हार्दोऽभिप्रायः समये स्फुटीभविष्यति ।

तन्मन्ये-नूनं सहृदया संस्कृतगौरवेणापीमामरभारतीमादरेणाभ्युपपत्त्या चोपगृह्य अभिनन्देयुः । इति ( सङ्कलयिता )

EDITOR— S. R. SHASTRI *R. B. Gagar Mal Vidyalaya, Amritsar.*

निदर्शननिर्देशः

## श्रीकामदुघा

## —: न्यायसिद्धान्तमुक्तावल्या व्याख्या :—

इयमत्रभवता वामकौलप्रवर्त्तकाचार्य्येण श्रीहरदत्तशर्मा त्रिवेदीतिविख्यातेन निर्मिता ।

अस्याः प्रथमो भागो भाई कृपालसिंह ( बाजार माई सेवां ) सकाशात्प्राप्तः ।

शतपरिमितैः पृष्ठैः हृद्यैश्च पत्रैर्मनोहरैश्च वर्णैर्योजिता समीक्ष्यते ॥ अस्य १ भागस्य मूल्य॥=)

विशेषश्च समीक्ष्य समये प्रकाशयिष्यते ।

ग्रन्थकर्तृख्यातिमनुरुध्य च यथार्हं ग्रन्थगौरवञ्च संभाव्यते ॥

*Printed by* S. R. Shastri *at* The A R Y A Press Amritsar *& published from the office of* The Amar Bharati *situated in* R. B. L. Gagar Mall's Vidyalaya *premises.*

मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः । न्यायमार्गे महान्दोष इति यत्नोपचर्यता ॥

सर्वं विजयते हि तत्




# THE MIMANSA-PRAKASH

( The Anglo-Sanskrit monthly journal of the M.G.P. Samiti, Poona 2

*Editor*

Waman Shastri Kinjawadekar, Mimansak Shiromani,

*Assistant Editor and Manager.*

Ramchandra Shastri Kinjawadekar, Dixit.

VOL. II — 1st JUNE, 1937 — No. 2

CONTENTS.



Annual subscription Rs. 5/- in India and Rs. 7/- abroad.
Single Copy 8 Annas.

## INSTRUCTIONS TO CONTRIBUTORS

1. Contributors are requested to address their contributions and correspondence to The Editor, Mimansa Prakash, 403, Sadashiv, Poona 2, (India).

2. With a view to avoid confusion and delay, as also to otherwise facilitate the work of the editor, contributors are requested to leave the upper half of the first sheet of their article quite blank.

3. Articles should, as far as possible, be type-written on one side only, of the shee with double space between the lines and with not less than three inches of margin on the left.

4. Every article should be complete in itself and should, as far as possible, be limited to three (100 lines) foolscap half sheets, typed on one side only as stated above.

5. Every sheet of the article should be consecutively numbered.

6. Footnotes, if any, should also be similarly consecutively numbered throughout the article.

7. Proper names and technical or foreign words occuring in the article should be carefully marked with diacritical points.

8. Every paragraph should be distinctly indicated by a wide space left blank.

9. Punctuation should be as precise as possible to facilitate the meaning of the writer to be conveyed unequivocally.

10. Double quotation marks " " should be used for actual quotation while single quotation ' ' marks for an included quotation.

11. Titles of books, when they occur for the first time in an article should be given in full, though on subsequent occurrences they may be referred to, with significant words from them. But abs lute uniformity must be strictly maintained throughout the entire article.

12. Periodicals should be referred to with the initial letters of their names in capitals.

13. Technical terms, if any, coined by the author, should be explained by him in footnotes.

## लेखकानां कृते सूचनाः।

१. सर्वैर्लेखकैः स्वीयलेखादि 'सम्पादक मीमांसा प्रकाशः' ४०३, सदाशिव पूना २–इति मुखविलासे (Address) प्रेषणीयम्।

२. लेखारम्भसमये प्रथमपत्रस्योर्ध्वार्धभागं विहाय लेखारम्भः करणीयः। प्रतिलेखपत्रम् वामपार्श्वे चतुरंगुलिमितोऽवकाशोऽलिखित एव स्थापनीयः। तथा लेखपंक्तयो विरलविरलाः पद्यानि सुविभक्तानि वाक्यानि च रेखांकितानि लिखितव्यानि। लेखपत्रस्य पार्श्वभागे किमपि न लेखनीयम् प्रतिपत्रमनुक्रमांक विन्यास आवश्यकः।

३. लेखमध्ये यानि ग्रन्थान्तरस्थानि वचनानि धृतानि स्युस्तेषां सर्वेषामेव मूलग्रंथाध्यायप्रकरण सूत्रादीनां निर्देशोऽनुक्रमेण तत्तत्पृष्ठस्याधोभागे टिप्पणी रूपेण सुस्पष्टं विधेयः। टिप्पण्यङ्कास्तु सर्वस्मिंल्लेखे एकानुपूर्व्या एवोल्लङ्कनीयाः।

४. लेखान्तर्गताः संज्ञाशब्दाः, पारिभाषिक शब्दाः, परकीयभाषाशब्दाः ग्रन्थान्तरवचनानि इत्या दीन्यधोरेखांकितानि करणीयानि। लेखान्तर्गताः परिच्छेदानां प्रथमा पंक्तिरितरपंक्त्यपेक्षया प्रारम्भे अंगुलित्रयमितावकाशेन न्यूना विधेयाः।

५. लेखस्य सम्यग्भावावबोधाय तत्र तत्र यथायोग्यं स्वल्पविरामः ( , ) अर्धविरामः ( ; ) पूर्णविरामः ( . ) प्रश्नचिन्हम् ( ? ) उद्गारचिन्हम् ( ! ) अवतरणचिन्हम् ( " " ) संयोगचिन्हम् ( – ) भेदकचिन्हम् ( — ) इत्यादीनि लेखनचिन्हानि नियतमेव लेखनीयानि।

६. यदा ग्रन्थान्तरवचनजातं, अन्यदीयवचनजातं वा लेखमध्ये समुल्लिख्यते तदा स भाग आवृत्तावतरण ( " " ) चिन्हांकितः, तथा तस्मिन्नपि यद्यन्यदीय वचनाद्युद्धृतं भवेत् तदानावृत्तावरण ( ' ' ) चिन्हांकितः स भागः कार्यः।

७. यदा लेखमध्ये संदर्भानुरोधेन एक एव संज्ञा शब्दः पुनः पुनः आगच्छेत्तर्हि प्रथमसमये स यथा तथ्येन द्वितीयादिसमये च तद्बोधकसंक्षेपेणोल्लेखनीयः। स च तद्बोधकसंक्षेपः सर्वत्रैकानुपूर्व्या एव लेख्यः।

८- लेखमध्ये विषयविशदीकरणावसरे ये केवल पारिभाषिकाः शब्दाः संज्ञाशब्दा वा स्थानं लभेरंस्ते पां निःसंदिग्धतया पादटिप्पण्यां व्याख्या नियतं करणीयैव। लेखमध्ये कस्यापि व्यक्तिगता निन्दा अकारणमेव च परुषवाक्यानि सावधानतया परिहरणीयानि। लेखस्य भाषा सुलभा सुबोधा वैदर्भ्या रीत्या च लेखनीया। सर्वोऽपि लेखः 'नामूलं लिख्यते किंचिन्नान पेक्षितमुच्यते' इति मल्लिनाथोक्तां प्रतिज्ञां मनसि निधाय 'मीमांसाप्रकाशस्य' पृष्ठद्वयवर्ती( शतपंक्ति न्यूनः स्यात् एतादृशो विलेख्यः

सर्वं विजयते हि तत्

Editor
Wamanshastri
Kinjawadekar, M.S.

मीमांसा-प्रकाश

Assistant Editor
Ramchandra Shastri
Kinjawadekar, Dixit

THE
MIMANSA-PRAKASH

( THE ANGLO-SANSKRIT JOURNAL OF THE M. G. P. SAMITI, POONA 2. )

VOL. II 1st JUNE 1937 No. 2

## Lecture on "The (secret) mystic knowledge in Rigveda"

By—Mr. Y. V. Kolhatkar, B.A.LL.B. Sangil delivered at the Yaga at Kurundwad in February 1935.

*Lecture I*

Since Magh S. 5 we have all descended into the very ancient atmosphere of the Bharatiya Aryas. In Aryavarta the most ancient religion was a religion of sacrifice and Yagas. The Gods had made a sacrifice before the creation of this Universe. Atharvana first prepared the way by sacrifice and then created the Sun, ( Re. S. M. 1-13-83-5 ).

यज्ञैरथर्वा प्रथमः पथस्तते ततः, सूर्योव्रतपा वेन आजनि ॥

यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन्‌ ।

The above पुरुषसूक्त Mantra is familiar to many. Without much speculation about the time of the Veda Mantras, it may with certainty be stated that it is the most ancient literature amongst all the available old literatures in this world. It is our great fortune that this literature has come down to us as originally framed without the change of even a single letter or accent from immemorial times. ( by this we mean that its exact beginning is not known). It must be remembered that this work of preserving this treasure of knowledge in tact was done by the Brahmin class. We. the Indians are under great obligations to them as they have handed down this treasure to us out of a sheer sense of duty by spending their lives in poverty.

To-day, many well—versed Veda specialists have come here from various parts of India. The surrounding atmosphere has been charged with the recitations of Mantras. Pandit Kinjawadekar has arranged the sacrificial place, very dexterously. Formerly innumerable sacrifices were performed on the Banks of the Saraswati River and to-day this place has acquired a special importance because of the confluence of the most holy waters of the sister river Krishna embracing

the loving Panchaganga. Nrisinha Saraswati has imparted sanctity to this place by his long association. I consider my-self very fortunate that I have got the company of so many learned persons at such a holy and fascinating place. I venture to submit my views about Rigveda and its mysticism. The result of my humble efforts in this directions before such a very learned audience not as a scholar but with a view to get my doubts and difficulties solved and my mistakes corrected. It is well-known, many learned scholars have tried to construe the meaning of Vedas; but the interpretations of these various Acharyas and Bhashyakars do not satisfy many of our modern scholars who have taken up the English course of education. Although it is true that after Sayanacharya there has been no serious effort in this direction; yet before him, many Acharyas had exerted themselves in the interpretations of Vedas. In modern times many western scholars have recently studied the Vedas thoroughly and have written independent treatises and translated them. It is most wonderful that German scholars are trying to determine the meaning of the Vedas by taking great pains. It is as much discreditable to us as it is creditable to them. Our English-educated scholars accept the method of interpretations of the western scholars and so the real mental background which gave birth to these Divine Songs being lost. they are not able to grasp the real secret of its greatness. College students while learning the Sanhita selections, are required to refer to scholars like Peterson, Max-Mullar and Griffith to construe the meaning of the texts. The study of geology, biology, the evolution theory and allied material scenes has impressed the present generation and they think, everywhere the rules of ordinary cause and effect are applicable. The idea, that there is nothing like unobservable by our senses, unbounded by the ordinary three dimensions and knowable only by one's own inner eye is gaining foot everywhere. When the above subjects are taught and learnt in Colleges, it is deplorable that such points of faith and experience become simply objects of ridicule. It must be admitted on the basis of evolution theory that these verses are efforts of men who were in a very wild, uneducated and primitive form of social evolution. But it may be questioned whether barring certain marvellous discoveries and inventions, the present society has developed more than the Vedic society of old days. All this must be very carefully considered. On a careful consideration of the general public thoughts, actions and activities of various countries we do not observe any great progress in their moral and spiritual life; on the other hand morality and religion have degenerated. Those who study Vedas will find that the Aryan civilization is based

on "Righteousness and truth" which was begotton by penance. Not only that, but we further believe planets and stars in the Universe are moving by the force of "Righteousness and Truth" in their respective orbits.

"सत्येनोत्तभिता भूमिभिः सूर्येणोत्तभिता द्यौः
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधिश्रितः॥

As I am going to deal with the Vedic morals separately this much is sufficient for the present. The ideal of the Aryas was bliss here and in the next world and it was their fundamental belief that the same was achieved by religious sacrifices. To speak in the Vedantic language the ideal of our ancestors was to get Preyas and Shreyas (bliss and salvation) by sacrifices. "In Sanhita time of the Vedas there was no idea of freedom, philosophy and incarnation; it came into being in the time of Upnishadas; and if at all it was there it was only in a nascent condition." Such conclusions were drawn by modern scholars and the Vedas are now studied in the light of this hypothesis. It is therefore no wonder that the idea of sacrifices was looked upon as a low form of barter between man and God in the primitive state of humanity. It will be shown in due course how highclass philosophy is contained in the Mantras. For the present, we have to show that the institution of sacrifice was based on very high principles. I am going to discuss the point by referring to Rigved Sanhita as my basis.

A very great portion of the Mantras has come into existence for sacrifices. In the Divine Mantras of the Purusha-Sukta it is stated that the manifested creation has its germ in the यज्ञ. The modern scholars say that this Sukta is the most recent of the Mantras that were composed, because it supports the theory of evolution. Be it as it may, it is worth considering calmly as to how many of our modern educated persons can have such a deep and solemn thought as those embodied in Purusha Sukta. The description of the Cosmic Being is such as to put to shame even modern astronomers. In the book "The Universe around us" by James Jeans, the seen world is compared to the unseen world. Therein he has given a very appropriate simile in the following terms:— Suppose 5 or 6 particles of dust are let loose for floating in the building of the Waterloo Railway station; and they continue to float for ages to-gether without touching one another; similarly manifested and tangible world of innumerable stars is like half a dozen particles of dust in the unmanifested and limitless Universe. This same grand idea is explained in the Mantra:—

"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"

Virat is the original (mixture) Prakriti of the manifest world which is simply a portion of the unmanifested Purusha. (i. e. विशेषेण राजते इति) The materialists do not admit a conscious creation; but the Vedic Aryas held creation

to be a conscious and desired effect. The Materialist rationalism not shocked by the assumption that living creation was born from the non-living.

A presiding person was formed from amongst the Nebula ( विराजो अग्निपुरुष: ) and from that the sun and the planetary system was produced. This is the greatest Purusha Sacrifice (पुरुषमेध). The Gods who were produced from this substance of the Prakriti made a sacrifice and from the different limbs of this person they formed his creation of beings. Rigveda and other Vedas were produced from this. In this universal sacrifice "यज्ञेन यज्ञमयजंत देवा: " the gods satisfied the sacrificial person i. e. Almighty by the sacrifice. तानि धर्माणि प्रथमान्यासन् " and sacrifices were the first (i e. Arya) religion of the Aryans. There is a grand rhetorical description of the sacrificial preparation in this Sukta. The ancients attained Swarga by this sacrifice worship. While the Yajna was being performed every day, various subjects were discussed; in those discussions spiritual, historical and mythological (पैराणिक) sub jects were taken up. In Mantra 1, 22, 164 there is a sample of such discussions, ( I am giving this as an example ; there are many, such places in the Vedas) पृच्छामि त्वा परमंतं पृथिव्या: पृच्छामि यत्र भुवनस्य नाभि: पृच्छामि त्वा वृष्णो अश्वस्य रेत: पृच्छामि वाच: परमं व्योम ||

A solution of this riddle:—

इदं वेदि: परो अंत: पृथिव्या अयं यज्ञो भुवनस्य नाभि: ।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाच: परमं व्योम ||

This Vedi i. e. altar in the sacrifice is the end of the Universe, therefore," the earth is round" need not be stated again. This sacrifice is the navel of the world i. e. the importace of the sacrifice need not be stated more explicitly.

The " Soma " in the sacrifice is described as the Retas the seed of Universe and so the importance of Soma in sacrifice is evident. " Similarly this Mantra is the chief abode of speech" and so the importance of Mantra is explained. The Mandal 10 of Sukta 130 is based on ancient sacrifice. The institution of sacrifice has linked man to God. In this also the sacrifice of gods before creation is described. This was the primary means of getting immortality by satisfying gods. Tej ( i. e. lustre) was the mark of divinity; the word देव also suggests "lustre." Our physical eye considers Fire as one of the five great elements ( Bhutas ). Now-a-days it can be kept in pocket in a concealed state and though familiarity has bred contempt for it a poetic eye can see the divine power in fire. Our case is like अरसिकेषु कवित्वनिवेदनम् (Poetry sung to a prosaic mind ) in the matter of fire. For a moment look at fire, leaving aside the mundane and ordinary way of looking at it. The Vedic Aryans not only saw

the manifest Agni but they could see its unmanifested form in every object. They were convinced that it was in matter in the form of energy.

तनूनपादुच्यते गर्भ आसुरो नराशंसो भवति यद्विजायते । मातरिश्वा यदमिमीत मातरि वातस्य सर्गो अभवत्सरीमणि ॥ ३-३-२९-११

When it is in the form of a seed it is called तनूनपात्.

When it is produced it becomes नराशंस Fire is मातरिश्वा and when it is in motion it becomes वात. The form of all lustrous Divinities is one and the same. "The Vedic Aryas were the devotees of various gods and they were not एकेश्वरी (believing in one God only)". These and such other objections will be answered at the right place. First let us see the first Sukta of the second Mandal leaving aside for the present the 1st and the 10th Mandalas because they are considered modern as compared to the other Mandalas.

त्वमग्ने इंद्रो त्वमग्ने राजा वरुणो त्वमग्ने त्वष्टा त्वमग्ने रुद्रः त्वमग्ने द्रविणोदाः त्वं देवः सविता त्वं भगः,

These words may be noted. Many others can be given but this is not the time. The living creation is alive because of Tej. The life grows in this body by Tej, the knowledge of the whole world is acquired by Tej. How can the world subsist in the absence of Tej? All the motion in this world is due to this Tej of the Agni. As it is the cause of all knowledge, it is called ऋतस्य प्रेषः ऋतस्य धीतिः "It is born of truth;" it resides in the depths of the heart. The names of various devotees of Agni are given in the Vedas as:—

कण्व, मेधातिथि, वृषा, उपस्तुत, प्रियमेध, अत्रि, विरूप, अंगिरस, शांखनेय, पुरुणीथ, रेभ, इत्यादि मं. १ अ. १२ सूक्त ७०.२

गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्च रथाम्।

अद्रौ चिदस्मा अंतर्दुरोणे विशां न विश्वो अमृतः स्वाधीः ॥

The fire residing in water, herbs immoveables, moveables, mountains is immortal and worthy of meditation. It is evident that all beauty in this world is dependent on the lustre of the Sun. Fire is an emblem of the sun, on earth. The energy of the sun is potentially present in all earthly things. When it becomes manifest i e. can be observed by eyes it is called fire and lightening. True religion consists in looking upon this omnipresent fire as God and in offering sacrifices to him in his manifested form and thus to propitiate the Almighty, the Lord of sacrifices. नेदं यदिदमुपासते is the way by which we should look at all idol worship just see whether there is any difference between the worship of fire and the worship of metal or earthen idols, whether moveable or immoveable. I do not mean to denounce idolatry. Even in Bhagwat idol worship is considered secondary in one sense. The way of idol worship is described in Bhagwat as follows:-

mount and forbade the consideration of any disqualification. It was also conceded by their Lordships that the reported English decisions have been in cases where the murderer was a devisee or legatee under the will of the murdered person.

It will thus be seen that the second proposition laid down by their Lordships is an importation of the principles of the English and Scotch Law into Hindu jurisprudence, which is altogether unjustifiable on the part of English Judges who are sworn to administer *Hindu Law* to the Hindus. Let us now proceed to investigate the corruption-of-blood theory on which the decision of their Lordships appears to be based.

By the conviction upon trial for treason, the whole estate of the traitor forfeits to the Crown His blood is *corrupted*; so that, on the death of an ancestor he cannot inherit. The punishment of parricide, or of the murder of a parent, is not confined by the Scotch Law to the criminal himself. All his posterity, in the right line, are declared incapable of inheriting; and the succession devolves on the next collateral heir. ( Erskine's Principles of the Law of Scotland, Book IV, Title, iv, 12, 21 ).

This is the fiction of corruption of blood which Bentham denounces as a "false method of reasoning on the subject of legislation." The English lawyers, to justify the confiscation of property in certain cases, have imagined a *corruption of blood* which arrest the course of legal succession. A man has been capitally punished for the crime of high treason; his innocent son is not only deprived of his father's goods but he cannot inherit from his grandfather, because the channel by which the goods ought to pass has been corrupted. This fiction of a sort of a political original sin serves as a foundation to all this point of law. But why stop there? If, in fact the father's blood is corrupted, why not destroy the vile offspring of corruption? Why not execute the son at the same time with the father? ( Bentham's Theory of Legislation, Chap. XIII ).

On question of inheritance the Hindu Law itself consistently with such principles of justice, equity and good conscience as are not opposed to the spirit of Hindu Jurisprudence, must be administered to the Hindus. The law on the point, therefore ought to be as follows :—

*Exclusion on the ground of murder.*

A murderer shall not succeed either as heir or as legatee, to the estate of the person whose death he has caused; provided that the heirs of the murderer, if themselves innocent, shall not be excluded from succeeding to the estate of the person murdered; or to the estate of a person to whom the murderer has succeeded but for the capital offence.

# A PEEP

## His Majesty the King Emperor's Privy Council & the High Courts in India.

### No 1. ( Continued. )

Even where the Vedic Law allows certain kinds of persons to be taken in adoption, we find the present law going contrary to its spirit and narrowing down the circle of people entitled for the purpose. For instance the Privy Council has ruled out a sister's son for adoptive purposes ( Ramalinga vs. Sadashiv Vol. IX Moore's Indian Appeals P.506) and has based its decision on quotations from the Dattaka-Mimamsa. We must however say that there are other authorities besides the Dattaka-Mimamsa and that while the Dattaka-Mimamsa disallows a sisters's son from being taken in adoption, these other authorities admit his claim to be so taken in adoption. Now, in cases where contradictory statements are to be found in the Dharmashastra, these contradictions have to be reconciled from the Mimamsa point of view. This the Hindu law as at present evolved has failed to do and the result has been that grave errors have crept in and the original intentions of the ancient lawmakers have been set aside. The Privy Council judgment referred to, is a case in point. No doubt the verse :—

दैाहित्रो भागिनेयश्च शूद्राणां विहितः सुतः
ब्राह्मणादित्रये नास्ति भागिनेयसुतः क्वचित् ॥

does not entitle a sister's son to be taken in adoption but from the following quotation from another स्मृति,

दौहित्रभागिनेयाद्या अन्यगोत्रोद्भवा अपि ।
सुता ग्राह्या द्विजन्माद्यैः स्ववंशस्याभिवृद्धये ॥

we find a sister's son has every right to be taken in adoption. Where such contradictions occur, following the canons of interpretation laid down by the Mimamsa shastra, we must effect the reconciliation by stating that the son of a sister ( which is the case in point ) may or may not be taken in adoption ; but we are not entitled to say that under no circumstances can a sister's son be taken in adoption. But this is what the Privy Council judgment referred to above, has in effect done.

We can illustrate the above point by citing another example. In the familiar statement "अतिरात्रे षोडशिनं गृह्णाति" we are asked to take for use the vessel षोडशिग्रह in the sacrifice named अतिरात्र. This statement is countered by another नातिरात्रे षोडशिनं गृह्णाति" in which we are dis-

tinctly told not to take the षोडशिग्रह vessel for use in the sacrifice. In order that both these statements should not be rendered meaningless by mutual contradiction, the Mimamsa Shastra has left it to the persons concerned whether to use the vessel or not. Similarly here too we must leave it to the persons concerned whether to take a sister's son in adoption or not. But by disallowing this right of being taken in adoption to a sister's son the Privy Council has done great injustice to the Vedic society.

We can further support our contention by referring back to Vedic literature. In the Aitareya-Brahman we come across the following passage :—

'अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद स होवाचाजीगर्तः सौयर्वसिर्ऋषे पुनर्मे पुत्रं देहीति नेति हो वाच विश्वामित्रो देवा वा इमं मह्यमरासतेति सह देवरातो वैश्वामित्र आस तस्यैते कापिलेयबाभ्रवाः' इति ।

—ऐतरेयब्राह्मण–३३।५

In this passage शुनःशेप, his sister's son has been said to have been taken in adoption by विश्वामित्र. The statement is most unambiguous. It is further supported by historical evidence also ( vide Valmiki Ramayan; Balakanda, Chapter 62. ).

Finally we shall refer to the statement of शौनक in which (वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतम्) the expression पुत्रच्छायावह occurs. The author of the दत्तकमीमांसा relies on this expression in support of his contention. But what does पुत्रच्छायावह mean ? The boy to be adopted must look like a son in age, character features and complexion This is all that पुत्रच्छायावह means. But since such likeness is possible in daughter's or a sister's son, evidently they are entitled to be taken in adoption. All specious disquisitions on पुत्रच्छायावह are entirely beside the point. It will thus be seen that the Privy Council judgment in this matter is entirely wrong and does injustice to the ancient Vedic law on the point and that a sister's son can be taken in adoption.

---

# The Mimansa Granth Prakashak Samiti, Poona.

( Regd. 1936 )

No. 6.

## Visit of Mr. N. S. Locur. District Judge, Poona.

Mr. N. S. Lokur, District and Sessions Judge Poona paid a visit to the M. G. P. Samiti on the morning of 24 th February 1937. He was taken round to the Mimamsa Prakasha office, to the Grantha Shakha, the Mitakshara-samshodhan Mandir, Agnihotra shala and other departments of the Samiti. He was pleased with all that he saw and consented to become a fellow of the Samiti. His opinion about the Samiti's work is as follows :—

"I paid a visit to the Samiti this morning and was delighted to see the collections of Manuscripts which Pandit Vaman Shastri Kinjavdekar kindly showed me. All credit is due to him for the progress made so far and with his enthusiasm and energy, I do not think that his ambition to publish a correct edition of our ancient Mimamsa Granthas will be difficult of fulfilment, His efforts deserve every encouragement,

The Sangam Poona. 24-2-1937 } (Sd) *N. S. Lokur* Dist. Judge.

---

## The Swahakar Yajna and the Veesels required for it.

A request was made by Mr. Y. G. Mokashi of Poona for Shruchi, shruva, Prokshani, Pranita, and Vasovdhara which are the Vessels that were required for the Swahakara sacrifice that was performed at Gondivla, Dist Satara. Pandit Ramachandra Shastri Kinjavdekar got these Vessels properly prepared under his supervision and sent them for the swahakar sacrifice. In thsre days when the sacrifices have almost ceased to be performed, correct information about sacrifices and the Vessels and other things required for them is becoming rarer and rarer. The M. G. P. Samiti will be glad to supply all needful informaticn and articles in connection with all kinds of sacrifices to persons desircus of having them.

## Donors

Helpers who paid Rs. 15/.

Mr. Bokil

Mr. Puranik

Helpers who paid Rs. 10/-

Mr. Karandikar Ex. Engr. Dhulia

Mr. Ramchandra H. Acharya Jalgaon

Mr. M. M. Sadkar Yaval

Mr. B. V. Soman Malkapur

Mr. S. G. Mudholkar Do

Mr. M. R. Joshi Do

Mr. Y. R. Bendre Do

Mr. R. G. Hatvalne Do

Mr. W.G. Soman Do

Mr. T. G. Bapat Do

Mr. G. V. Savji Do

Mr. N. K. Kalele Do

Mr. D. N. Gadgil Do

Mr. G. J. Bapat Do

Mr. D. K. Bharucha Do

Mr. C. G. Khandekar Indore

Mr. C. Rama.Rao Banglore

Pandit N. Mallikarjun Sastri Benglore City

Mr. R. G. Nadkar Dhar

Mr. M. D. Deshmukh Do

Mr. N. G. Mankar Sardar Do

Mr. S. V. Puranik Indore

# REVIEW

**SOOKTI-RATNAVALI, or JEWELS OF ENGLISH THOUGHT** rendered into Sanskrit. ( Translated and published by P. D. Pandit, B. A. LL. B. Jalgaon, East Khandesh, pp. 50, price As. 6. )

Readers of the Times of India, Bombay, are well aware how each issue of the daily edition gives at the head of the editorial columns, one choice extract from some distinguished English writer containing words of wisdom of permanent value. Mr. Pandit, the author of this booklet, has selected one hundred such gems of thought and translated them in Sanskrit verse. Mr. Pandit first gives the English Extract in full and then proceeds to translate it. Mr. Pandit's work puts us in mind of the celebrated Sanskrit book, the "SUBHASHIT-RATNA-BHANDAGARAM." Had Mr. Pandit not given the original English passage, the reader would have thought that he was perusing the wise words of ancient and maedival Sanskrit poets, so beautiful are Mr. Pandit's renderings of those passages. So far as we remember Mr. M. P. Oka, was the first suceessful scholar in this presidency to translate choice English passages in elegant Sanskrit verse. Mr. Pandit has accomplished the same feat and hence deserves to be heartily congratulated. That even in these days scholars like Messrs. Oka and Pandit are coming forward to do this diffieult work successfully and that their renderings are occasionally more elegant, more promised than even the original English passages, are matters that must seriously be considered by those who still regard the Sanskrit as a dead language. We make bold to claim that the Sanskrit is not a dead and effete language and that it still gives promise of vitality, adaptibility, and power of expansion. Nothing will prove this claim to the educated Indians of today so effectively as the suceessful translation and adaptations of standard English books, Scholars like Dr. Gananath Sen, leaders like Dr. Moonje have already made efforts on a large scale in this direction before. We suggest that Mr. Pandit, the author of the booklet under review should work on the same lines.

If the book under review is prescribed as a text-book in our English schools and if students are made to learn by heart the Sanskrit renderings and the English passages it will all be to the good. The students will be immensely benefited by this addition to their stock of English and Sanskrit knowledge. Moreover they will know how to translate and adapt English passages into Sanskrit.

It is indeed difficult to make a selection where each poetical rendering is a gem of high value.

प्रत्यक्षगम्येषु गुणेष्वधीनमिति। मानुषं माधुर्यं पुनर्नैवं सर्वथाऽनायास-गोचरम्, तत्र ह्यनेकं सूक्ष्मं वस्तुजातं सुकुमारसन्निवेशेन कमपि प्रकर्षमादधाति। न खलु केवलेनेन्द्रियद्वारेणैवोपलभामहे तत्, परं कल्पनयैव संसृजामः। नामैव सृष्टिव्यापारस्य तस्य साहाय्यकमारचयति। विचिन्त्यतां तावद् द्रौपदी चेदूर्मिलेति नाम्ना समाह्वास्यत तर्हि पञ्चवीरपतिगर्विताया: क्षत्रियायाः प्रदीप्तं तेजस्तरुणकोमलेनानेन नाम्ना प्रतिपदमेव व्याहनिष्यत।

अत एव नाम्न एतस्य कृते कृतज्ञा एव वयं वाल्मीकेः। कविगुरुणा बहुधा विनिकृतेयम्, परं दिष्ट्या तस्याः समाख्या माण्डवी वा श्रुतकीर्तिर्वा न व्यधायि। न खलु वयं माण्डवीगतं श्रुतकीर्तिगतं वा किमपि विजानीमः, न वा विज्ञानाय लेशतोऽपि कौतूहलमनुभवामः।

वयं तावदूर्मिलां वधूवेशां विदेहनगर्यां विवाहसभायामेव प्रत्यक्षीकृतवन्तः। ततश्च यावत् सा रघुराजकुलस्य सुविशालमन्तःपुरं प्रविष्टा तत आरभ्य मन्ये न खलु सकृदप्यसौ नयनसरणिं नः समुपागता। विवाहसभायां तस्या वधूवेशैव मूर्तिर्मनसि सुदृढं संसक्ता। शश्वद्वधूरूर्मिला—निर्वाक्कुण्ठिता निःशब्दसञ्चारिणी। भवभूतेरपि काव्ये तदेव तदीयं चित्रं मुहूर्त्तकं समुद्घाटितम्। सीता तावत् सस्नेहकौतुकं सकृदेव तदुपरि तर्जनीं विनिवेश्यानुयुक्तवती देवरं वत्स, केयम् इति। लक्ष्मणस्तावत् सलज्जस्मितं स्वगतं व्यचिन्तयत् अहो ऊर्मिलां पृच्छत्यार्येति। ततश्च तदात्व एव त्रपया तच्चित्रं निह्नुतवान्। ततश्च रामचन्द्रस्योच्चावचसुखदुःखानां चित्रनिचयमध्ये पुनः सकृदपि कस्याप्यङ्गुली नैव निपतिता चित्रेऽस्मिन्। सा केवलं वधूरूर्मिलेति !

यस्मिन् पुण्येऽहनि सिततरुणललाटपट्टे प्राथमिकं सिन्दूरविन्दुं समुदवहद् ऊर्मिला यावज्जीवं तद्दिवसीया नववधूरेवासौ स्थिता। परं यदा तावद् रामस्याभिषेकमङ्गलसम्भारसन्नहने व्यापृत आसीदन्तःपुरचारिणीजनस्तदा किमियमपि वधूरर्द्धावगुण्ठनसंवृतसीमन्ता रघुकुललक्ष्मीभिः सह प्रसादकल्याणविकसितवदनकमला माङ्गल्यविरचने नितान्तत एव निरता

नासीत। ततश्च यस्मिन् दिवसे अयोध्यामन्धे तमसि विनिमज्ज्य सीता-सहचरीकौ राजभ्रातृकिशोरकौ तपस्विवेशेन पन्थानं प्रतिपन्नाववसरे तस्मिन् प्रासादस्य कस्मिन् निभृते शयनागारे वृन्तच्युतं मुकुलमिव धूलिशय्यायां विलुठितवती सेयमूर्मिला—जानीते वा कोऽपि तमिमं वृत्तान्तम्? को वा प्रत्यक्षीकृतवान् तत्र विश्वव्यापिनि परिदेवनेऽन्तर्भूतं विदीर्यमाणस्यास्य क्षुद्रकोमलहृदयस्य दुर्विषहं शोकावेगम्। यः खलु कविर्मनीषी क्रौञ्च-विरहिण्या वैधव्यवेदनां मुहूर्तमपि नालमासीद् विसोढुम्, अहो! सोऽपि तावत् सकृदपि नात्र निक्षिप्तवान् नयनयुगलीम्!

रामस्य कृते लक्ष्मणः सर्वथात्मविलोपं संसाधितवान्। अद्यापि तदीयं तद् गौरवं गृहे गृहे जोघुष्यते भारते वर्षे। ऊर्मिलायास्तु सीतायाः कृते स्व-विलोपनं न केवलं लोक एव काव्येऽपि दुर्लभतममेव सन्द्रष्टुम्। लक्ष्मणस्तावत स्वाभीष्टदैवतयुगलस्य कृते केवलमात्मानमेव समुत्सृष्टवान्। ऊर्मिला पुनः स्वात्मनोऽप्यभ्यधिकं स्वप्राणवल्लभमेव समुत्सृष्टवती। न खलु वृत्तान्तोऽय-मुपनिबद्धः काव्येषु। सीताया नयनसलिलेन सर्वथा प्रोञ्छितैवोर्मिला।

लक्ष्मणस्तावद्द्वादश वर्षाण्यभिव्याप्य समुपासनीयस्य प्रियजनस्याभीष्टकर्मणि विनियुक्त आसीत्. योषिज्जीवनस्य तानि द्वादश सारतराणि संवत्सराण्यू-र्मिलया कथं वाऽतिवाहितानि? यदा तावत् सलज्जाभिनवप्रेमामोदमेदुरेण विकासोन्मुखेन हृदयमुकुलेन प्राणवल्लभेन साकं प्रथमतमस्य मधुरतमस्य च परिचयस्य प्रारम्भस्तस्मिन्नेव मुहूर्ते सीतादेव्यास्ताम्रचरणसञ्चार-संन्यस्तनतलोचनो लक्ष्मणोऽरण्यमभिप्रतस्थे, यदा पुनः प्रत्यावृत्ते तदा नव-वध्वाः सुचिरप्रणयालोकवञ्चिते हृदयलोके आसीद्वा सा नवीनता। अपि नाम सीताया दुःखेन साकमूर्मिलायाश्चरममिदं दुःखं कोऽपि कदाचिदुपमिमीतेति शङ्कयेव कविना सीतायाः स्वर्गमन्दिराच्छोकोज्ज्वला महादुःखिनीयं समुत्सारिता, नैवोदसहतासौ जानक्याः पादपीठपार्श्वेऽप्येनामवस्थापयितुम्?

(क्रमशः)

———

# संस्कृतानुशीलनम्

( ५ )

यदिदं भारते वर्षे सम्प्रत्यपि लोके नीतिज्ञानं वा धर्मबुद्धिर्वा दृश्यते न तत्साक्षात्फलं वेदानामुपनिषदां वा, संस्कृताकारेणावस्थितानां पुराणानां वा, अपितु प्रादेशिकभाषायामवतारितानां तेषाम्, तथा तादृशानां रामायणमहाभारतादीनाम्। यदि नाभविष्यत्तत्रभवांस्तुलसीदासः काशीकोशलेषु, कृत्तिवासा वा वङ्गेषु, ते ते वा पुरुषास्तेषु तेषु विषयेषु, पुराणपाठका वा सर्वेष्वप्येषु कियतां नाम कर्णकुहरेषु रामायणी कथा प्रावेक्ष्यत्। कियन्तो नामास्मासु जानन्ति संस्कृतम्। जानन्तो वा कियन्तो नामावबुध्यन्ते तं तमर्थम्।

इतोऽप्यस्ति प्रयोजनं संस्कृतग्रन्थानां भाषायामवतारणेन। सन्ति लोके समासप्रियाः, सन्ति च व्यासप्रिया अपि। सन्ति बालाः, सन्ति युवानः, सन्ति च स्थविराः। सन्ति विद्वांसः, सन्ति चाविद्वांसः। न च सर्वं सर्वस्मै रोचते। न च सर्वे सर्वमाहारं जरयितुमीशते। न चास्माकं प्रसूतिर्वयोभेदभिन्नेभ्यः सर्वेभ्योऽपि स्वतनयेभ्य एकमेवाशनीयं ददाति। दत्त्वा वा लभते तत्फलम्। तन् क्रियतां तदनुरूपं विविधमवतारणं प्रादेशिकभाषायां न केवलं संस्कृतमयानाम्, अपि तु पालिमयानां प्राकृतमयानां च पुस्तकानाम्।

इदं चावधेयमस्मिन् कर्मणि। न खलु सर्वः सर्वं वेत्ति, तन्न देयं पदमभिमानाय यत् स्वयमनभिबुद्धस्यापि पदस्यार्थो लेख्य एवेति। तदेतन् कर्तुरपाण्डित्यमेव प्रकटयेत, न तु पाण्डित्यम्। वरं मौनं न पुनः कस्यापि तमःप्रापणम्। तदबुद्धं वा सन्दिग्धं वा तथैव प्रकाश्यम्।

सन्ति दर्शनादिष्वतिदुरवगमा ग्रन्थाः। अपेक्षितं तेषां सुगमं व्याकरणम्। कोऽपरः करिष्यति यदि न तद्भवन्तः कुर्युः। स्मर्यतामत्र कियदुपकृतं विद्वद्धौरेयेण महामहोपाध्यायेन श्रीफणिभूषणतर्कवागीशेन वङ्गभाषया व्याकृतवता गौतमसूत्रभाष्यम्।

दृश्यन्तां तानि तानि सूचिपत्राणि निर्गच्छन्ति तेषु तेषु विषयेषु संस्कृतपुस्तकशालाभ्यः। सन्ति सहस्राणि पुस्तकानां संस्कृतादिषु च येष्वद्यापि नालोकितः प्रकाशः प्रभाकरस्य। संस्क्रियन्तामेतानि सूक्ष्मेक्षिकया पद्धत्या

च नवीनया। अवधीयतां न नः समीहितसिद्धिः केवलं हस्तलिखितानामेषां प्रतिमूर्तिप्रकाशनेन।

नात्र भो उपेक्षणीयानि भाषापुस्तकान्यपि। नमो नमस्तेभ्यो महाभागवतेभ्य उदीच्येभ्यश्चावाच्येभ्यश्च प्राच्येभ्यश्च प्रतीच्येभ्यश्च ये समुत्पन्ना भारते मध्यमेषु वर्षशतकेषु, येषां पीयूषमधुरा भक्तिगाथा गाढममज्जयन्निव भारतभुवमतिनिविडैरमृतप्रवाहैः। संगृह्यन्तां व्याक्रियन्तां प्रकटीक्रियन्तां च तेषां सूक्तयः। भवेदेतदतिमहते लाभाय लौकिकायालौकिकाय च।

सन्त्यस्माकमनेकानि विज्ञानानि अप्रतिमानानि चानर्घाणि च संस्कृते। येषु कानिचिद् वयमपीदानीं न सम्यग् विद्मः। वेद्यान्येव तु तान्यवश्यम्। प्रयत्यतां तानि स्वयं वेत्तुं वेदयितुं चान्यान्। भिन्ना पद्धतिः प्राचाम्, भिन्ना चार्वाचाम्, भिन्ना नः प्राच्यानां भिन्ना च प्रतीच्यानाम्—ये खलु कामेनाकामेन वा अस्माभिरपि अस्मदीयैरपि च प्रायेणाश्रियन्ते। इयमेव हि साम्प्रतं सर्वजनीनेव प्रतिभाति। तदुपादीयतामियं क्रियतां च तया विवृत्तिस्तेषां विज्ञानानां येन भुवनमेव भवेदुपकृतम्। कः पुनरेतत् कर्तुमर्हति। कश्चिद् व्रजेन्द्रो वा जगदीशो वा। अथ यदि द्वौ (तयोरेकः शास्त्रविदपरस्तु विज्ञानवित्) सम्भूय कर्मणि प्रवर्तेयाताम्, नेदं कृत्यं भवेदसाधनीयं विनापि व्रजेन्द्रं जगदीशं वा।

नितान्तमपेक्ष्यते साम्प्रतं किमपि संस्कृताभिधानम्। नैव सिध्यति नः प्रयोजनं शब्दकल्पद्रुमेण वाचस्पत्येन वा। स्तां ते यथा स्तः। वर्ध्येयातां वा यदि तदिष्यते। अन्यैव सा काचित् पद्धतिस्तयोः। अन्यां च काञ्चिद् वयमिदानीमीप्सामः।

इदं च किञ्चिन्मर्माण्येव मे निकृन्तति यद् व्याप्तिपञ्चकसदृशेष्वपि पुस्तकेषु परीक्ष्यमाणस्य विद्यार्थिनः कृते दूरमवधूय नो नैयायिकधुरन्धरान् प्रतीच्या एव विद्वांसोऽस्माभिरेव व्रियन्ते परीक्षकत्वेन। तैश्च साध्वित्युक्ते लब्धं यल्लब्धव्यं लोक इति मन्यामहे धिगस्मानात्मावमानिनः। हा भारतभारति विधवाऽसि, हतासि। हन्त कियद्वा कियच्चिरं वा सहनीयमेतत्।

भट्टाचार्यविधुशेखरस्य।

---

# कुमारगुप्तप्रशस्तिः

( मालवसंवत् ५२९ खृष्टीय ४७३ )

यो वृत्त्यर्थमुपास्यते सुरगणैः सिद्धैश्च सिद्ध्यर्थिभि-
ध्यानैकाग्रपरैर्विधेयविषयैर्मोक्षार्थिभिर्योगिभिः ।
भक्त्या तीव्रतपोधनैश्च मुनिभिः शापप्रसादक्षमै-
र्हेतुर्यो जगतः क्षयाभ्युदययोः पायात् स वो भास्करः ॥१॥

तत्त्वज्ञानविदोऽपि यस्य न विदुर्ब्रह्मर्षयोऽभ्युद्यताः
कृत्स्नं यश्च गभस्तिभिः प्रविसृतैः पुष्णाति लोकत्रयम् ।
गन्धर्वामरसिद्धकिन्नरनरैः संस्तूयतेऽभ्युत्थितो
भक्तेभ्यश्च ददाति योऽभिलषितं तस्मै सवित्रे नमः ॥२॥

यः प्रत्यहं प्रतिविभात्युदयाचलेन्द्र-
विस्तीर्णतुङ्गशिखरस्खलितांशुजालः ।
क्षीबाङ्गनाजनकपोलतलाभिताम्रः
पायात् स वः सुकिरणाभरणो विवस्वान् ॥३॥

कुसुमभरानततरुवरदेवकुलसभाविहाररमणीयात् ।
लाटविषयान्नगावृतशैलाज्जगति प्रथितशिल्पाः ॥४॥

ते देशपार्थिवगुणापहृताः प्रकाश-
मध्वादिजान्यविरलान्यसुखान्यपास्य ।
जातादरा दशपुरं प्रथमं मनोभि-
रन्वागताः ससुतबन्धुजनाः समेत्य ॥५॥ [युग्मकम्]

मत्तेभगण्डतटविच्युतदानबिन्दु-
सिक्तोपलाचलसहस्रविभूषणायाः ।

---

१-२। शार्दूलविक्रीडिते । ३। वसन्ततिलकम् ।
४। आर्याजातिः । ५-६। वसन्ततिलके ।

पुष्पावनम्रतरुमण्डवतंसकाया
भूमेः परं तिलकभूतमिदं क्रमेण ॥६॥
तटोत्थवृक्षच्युतनैकपुष्प-
विचित्रतीरान्तजलानि भान्ति ।
प्रफुल्लपद्माभरणानि यत्र
सरांसि कारण्डवसङ्कुलानि ॥७॥
विलोलवीचीचलितारविन्द-
पतद्रजःपिञ्जरितैश्च हंसैः ।
स्वकेसरोदारभरावभुग्नैः
क्वचित् सरांस्यम्बुरुहैश्च भान्ति ॥८॥
स्वपुष्पभारावनतैर्नगेन्द्रै-
र्मदप्रगल्भालिकुलस्वनैश्च ।
अजस्रगाभिश्च पुराङ्गनाभि-
र्वनानि यस्मिन् समलङ्कृतानि ॥९॥
चलत्पताकान्यबलासनाथा-
न्यत्यर्थशुक्लान्यधिकोन्नतानि ।
तडिल्लताचित्रसिताभ्रकूट-
तुल्योपमानानि गृहाणि यत्र ॥१०॥
कैलासतुङ्गशिखरप्रतिमानि चान्या-
न्याभान्ति दीर्घवलभीनि सवेदिकानि ।
गान्धर्वशब्दमुखराणि निविष्टचित्र-
कर्माणि लोलकदलीवनशोभितानि ॥११॥
प्रासादमालाभिरलङ्कृतानि
धरां विदार्येव समुत्थितानि ।

---

७-९। उपेन्द्रवज्राः। १०। उपजातिः। ११। वसन्ततिलकम्।

विमानमालासदृशानि यत्र
गृहाणि पूर्णेन्दुकरामलानि ॥१२॥

यद्भात्यभिरम्यसरिद्वयेन चपलोर्मिणा समुपगूढम्।
रहसि कुचशालिनीभ्यां प्रीतिरतिभ्यां स्मराङ्गमिव ॥१३॥

सत्यक्षमादमशमव्रतशौचधैर्य-
स्वाध्यायवृत्तविनयस्थितिबुद्ध्युपेतैः।
विद्यातपोनिधिभिरस्मयितैश्च विप्रै-
र्यद् भ्राजते ग्रहगणैः खमिव प्रदीप्तैः ॥१४॥

अथ समेत्य निरन्तरसङ्गतै-
रहरहः प्रविजृम्भितसौहृदाः।
नृपतिभिः सुतवत् प्रतिमानिताः
प्रमुदिता न्यवसन्त* सुखं पुरे ॥१५॥

श्रवणसुभगं धानुर्वेद्यं दृढं परिनिष्ठितैः
सुचरितशतासङ्गाः केचिद्विचित्रकथाविदः।
विनयनिभृताः सम्यग्धर्मप्रसङ्गपरायणाः
प्रियमपरुषं पथ्यं चान्ये क्षमा बहु भाषितुम् ॥१६॥

केचित् स्वकर्मण्यधिकास्तथाऽन्यै-
र्विज्ञायते ज्योतिषमात्मवद्भिः।
अद्यापि चान्ये समरप्रगल्भाः
कुर्वन्त्यरीणामहितं प्रसह्य ॥१७॥

प्राज्ञा मनोज्ञवधवः† प्रथितोरुवंशा
वंशानुरूपचरिताभरणास्तथाऽन्ये।
सत्यव्रताः प्रणयिनामुपकारदक्षा
विश्रम्भपूर्वमपरे दृढसौहृदाश्च ॥१८॥

---

* न्यवसन् इति साधु। † मनोज्ञवध्वः।

१२। उपजातिः। १३। आर्याजातिः। १४। वसन्ततिलकम्।
१५। द्रुतविलम्बितम्। १६। हरिणी। १७। इन्द्रवज्रा। १८। वसन्ततिलकम्।

विजितविषयसङ्गैर्धर्मशीलैस्तथाऽन्यै-
　　र्मृदुभिरधिकसत्त्वैर्लोकयात्रामरैश्च ।
स्वकुलतिलकभूतैर्मुक्तरागैरुदारै-
　　रधिकमभिविभाति श्रेणिरेवंप्रकारैः ॥१९॥

तारुण्यकान्त्युपचितोऽपि सुवर्णहार-
　　ताम्बूलपुष्पविधिना समलङ्कृतोऽपि ।
नारीजनः प्रियमुपैति न तावदग्र्यां
　　यावन्न पट्टमयवस्त्रयुगाणि धत्ते ॥२०॥

स्पर्शवता वर्णान्तरविभागचित्रेण नेत्रसुभगेन ।
यैः सकलमिदं क्षितितलमलङ्कृतं पट्टवस्त्रेण ॥२१॥

विद्याधरीरुचिरपल्लवकर्णपूर-
　　वातेरितास्थिरतरं प्रविचिन्त्य लोकम् ।
मानुष्यमर्थनिचयांश्च तथा विशालां-
　　स्तेषां शुभा मतिरभूदचला ततस्तु ॥२२॥ [युग्मकम]

चतुःसमुद्रान्तविलोलमेखलां
　　सुमेरुकैलासबृहत्पयोधराम् ।
वनान्तवान्तस्फुटपुष्पहासिनीं
　　कुमारगुप्ते पृथिवीं प्रशासति ॥२३॥

समानधीः शुक्रबृहस्पतिभ्यां
　　ललामभूतो भुवि पार्थिवानाम् ।
रणेषु यः पार्थसमानकर्मा
　　बभूव गोप्ता नृपविश्ववर्मा ॥२४॥ [युग्मकम]

दीनानुकम्पनपरः कृपणार्तवर्ग-
　　सन्धाप्रदोऽधिकदयालुरनाथनाथः ।

---

१९ । मालिनी ।　२० । वसन्ततिलकम् ।　२१ । आर्याजातिः ।
२२ । वसन्ततिलकम् ।　२३ । वंशस्थविलम् ।　२४ । उपेन्द्रवज्रा ।

कल्पद्रुमप्रणयिनामभयप्रदश्च
भीतस्य यो जनपदस्य च वन्धुरासीत् ॥२५॥
तस्याऽऽत्मजः स्थैर्यनयोपपन्नो
वन्धुप्रियो वन्धुरिव प्रजानाम् ।
वन्धूर्तिहर्ता नृपवन्धुवर्मा
द्विड्दृप्तपक्षक्षपणैकदक्षः ॥२६॥
कान्तो युवा रणपटुर्विनयान्वितश्च
राजापि सन्नुपसृतो न मदैः स्मयाद्यैः ।
शृङ्गारमूर्तिरभिभात्यनलङ्कृतोऽपि
रूपेण यः कुसुमचाप इव द्वितीयः ॥२७॥
वैधव्यतीव्रव्यसनक्षतानां
स्मृत्वा यमद्याप्यरिसुन्दरीणाम् ।
भयाद्भवत्यायतलोचनानां
घनस्तनायासकरः प्रकम्पः ॥२८॥
तस्मिन्नेव क्षितिपतिवृषे वन्धुवर्मण्युदारे
सम्यक्स्फीतं दशपुरमिदं पालयत्युन्नतांसे ।
शिल्पावाप्तैर्धनसमुदयैः पट्टवायैरुदारं
श्रेणीभूतैर्भवनमतुलं कारितं दीप्तरश्मेः ॥२९॥
विस्तीर्णतुङ्गशिखरं शिखरिप्रकाश-
मभ्युद्गतेन्द्वमलरश्मिकलापगौरम् ।
यद्भाति पश्चिमपुरस्य निविष्टकान्त-
चूडामणिप्रतिसमं नयनाभिरामम् ॥३०॥
रामासनाथरचने दरभास्करांशु-
वह्निप्रतापसुभगे जललीनमीने ।

२५। वसन्ततिलकम्। २६। इन्द्रवज्रा २७। वसन्ततिलकम्।
२८। उपजातिः। २९। मन्दाक्रान्ता। ३०-३२। वसन्ततिलकानि

चन्द्रांशुहर्म्यतलचन्दनतालवृन्त-
हारोपभोगरहिते हिमदग्धपद्मे ॥३१॥
रोध्रप्रियङ्गुतरुकुन्दलताविकोश-
पुष्पासवप्रमुदितालिकलाभिरामे ।
काले तुषारकणकर्कशशीतवात-
वेगप्रनृत्तलवलीनगणैकशाखे ॥३२॥
स्मरवशगतरुणजनवल्लभाङ्गनाविपुलकान्तपीनोरु-
स्तनजघनघनालिङ्गननिर्भर्त्सिततुहिनहिमपाते ॥३३॥
मालवानां गणस्थित्या याते शतचतुष्टये ।
त्रिनवत्यधिकेऽब्दानामृतौ सेव्यघनस्तने ॥३४॥
सहस्यमासशुक्लस्य प्रशस्तेऽह्नि त्रयोदशे ।
मङ्गलाचारविधिना प्रासादोऽयं निवेशितः ॥३५॥ [कुलकम्]
बहुना समतीतेन कालेनान्यैश्च पार्थिवैः ।
व्यशीर्यतैकदेशोऽस्य भवनस्य ततोऽधुना ॥३६॥
स्वयशोवृद्धये सर्वमत्युदारमुदारया ।
संस्कारितमिदं भूयः श्रेण्या भानुमतो गृहम् ॥३७॥ [युग्मकम्]
अत्युन्नतमवदातं नभः स्पृशन्निव* मनोहरैः शिखरैः ।
शशिभान्वोरभ्युदयेष्वमलमयूखायतनभूतम् ॥३८॥
वत्सरशतेषु पञ्चसु विंशत्यधिकेषु नवसु चाब्देषु ।
यातेष्वभिरम्यतपस्यमासशुक्लद्वितीयायाम् ॥३९॥
स्पष्टैरशोकतरुकेतकसिन्दुवार-
लोलातिमुक्तकलतामदयन्तिकानाम् ।
पुष्पोद्गमैरभिनवैरधिगम्य नून-
मैक्यं विजृम्भितशरे हरपूतदेहे ॥४०॥

---

३३। आर्याजातिः।
३४-३७। अनुष्टुभः।
३८-३९। आर्याजाती।
४०। वसन्ततिलकम्।
* स्पृशदिव

मधुपानमुदितमधुकरकुलोपगीतनगणैकपृथुशाखे ।
काले नवकुसुमोद्गमदन्तुरकान्तप्रचुररोध्रे ॥४१॥
शशिनेव नभो विमलं कौस्तुभमणिनेव शार्ङ्गिणो वक्षः ।
भवनवरेण तथेदं पुरमखिलमलङ्कृतमुदारम् ॥४२॥ [कलापकम्]
अमलिनशशिलेखादन्तुरं पिङ्गलानां
　　परिवहति समूहं यावदीशो जटानाम् ।
विकटकमलमालामंससक्तां च शार्ङ्गी
　　भवनमिदमुदारं शाश्वतं तावदस्तु ॥४३॥
श्रेण्यादेशेन भक्त्या च कारितं भवनं रवेः ।
पूर्वा चेयं प्रयत्नेन रचिता वत्सभट्टिना ॥४४॥
स्वस्ति कर्तृलेखकवाचकश्रोतृभ्यः ।　सिद्धिरस्तु ॥

———

# अप्पाशास्त्रिणां पत्राणि

## ( १ )

[कस्य वा न विदितः संस्कृतपत्रिकाप्रणयिनो राशिवडेकरोपाह्वोऽप्पाशास्त्रिविद्यावाचस्पतिमहोदयः । कोल्हापुराभिजनस्य महाभागस्यामुष्य देवभाषायां भाषणे व्याख्याने प्रबन्धविरचने चानितरसाधारणी शक्तिः कस्य वा न चमत्कृतवती मानसं सहृदयस्य । स्वगतजयचन्द्रसिद्धान्तभूषणमहोदयप्रवर्तिता संस्कृतचन्द्रिका पञ्चमवर्षमारभ्याप्पाशास्त्रिणा सम्पादिता यादृशं सौष्ठवमावहत् तत् किल दुष्करं स्वप्नेऽपि सम्भावयितुमितरैर्मासिकपत्रिकासम्पादकैः । मन्ये व्यतीतेषु द्वित्रेषु शतकेषु संस्कृतगद्यविरचने कस्याप्येतादृशी व्युत्पत्तिर्नासीदिति वचनमपि नांशतोऽतिशयोक्तिकोटिमवगाहते ।

---

४१-४२ । आर्याजाती ।　४३ । मालिनी ।　४४ । अनुष्टुप् ।

महाभागस्यैतस्य चरितादिकमचिरादेव प्रकाशयिष्यते मञ्जूषायाम्। वाचक-महाभागैर्विषयमिममवलम्ब्य सुविस्तरतराः प्रवन्धाः प्रेष्यन्ताम्, यस्य च निवन्धः समीचीनतमः स्यात्तस्मै विंशतिमुद्राः पारितोषिकरूपेण प्रदीयेरन्। येषां च सविधे अप्पाशास्त्रिणां पत्राणि वर्तन्ते तैरपि तानि कृपया प्रहीयन्ताम्, अस्माभिस्तदर्थमपि यथार्हं मूल्यं प्रदास्यते।

संख्यायामस्यां यत् खलु पत्रं प्रकाशितं तच्छास्त्रिमहोदयेन प्रियवन्धो-र्जयचन्द्रसिद्धान्तभूषणमहोदयस्य भ्रातुष्पुत्राय विलिखितम्।—मञ्जूषा-सम्पादकः]।

श्रीशिवः शरणम्।

कोह्लापुरात्।

११।७।२६

सानुरागं मूर्ध्न्युपाघ्राय प्रगाढमाश्लिष्य च कुशलं वार्त्तयति। प्रेष्ठ वत्स! किमेवमन्यथा सम्भाव्यते भवता। कच्चिदृष्टः श्रुतो वायुष्मता पूर्वस्यामेव दिश्यस्तं गतो भगवान् भानुः? कच्चिदुज्झितः शीतलिमा कदापि नैसर्गिको हिमकरेण स्वीयः? कच्चिदापद्यते पुलिनमात्रावशेषतां जलधिः? विस्मर्येत जनेनानेन वाराणसीवर्तिनः कुटुम्बकं प्रियवन्धोः*। प्रेष्ठ! तदा खलु जीवितमप्यात्मनो विस्मरिष्यामि यदि स्वप्नेऽपि तावत्तत्तादृशनिरुपम-प्रणयभाजनं द्वितीयमिवाऽऽत्मानं भवतो विस्मरिष्यामि। नैव खलु जीवतो नामैतत् सम्भविष्यति। मृतोऽपि वा वलवत्तरसंस्कारविवशीकृतः सुतरां च विनिवद्धो गुणगणैः प्रियवन्धोर्नैव न स्मरिष्यामि वः किन्त्ववश्यं स्मरिष्यास्येवेति नास्ति मे सन्देहः। अयि जीवित! एष ननु सन्दृश्यसे वाराणस्यां सह मया सह च श्रीमतोपेन्द्रचन्द्रेण सुरसरित्तीरे विचरन्।

---

* सिद्धान्तभूषणमहोदयस्य द्वितीयो भ्रातुष्पुत्रः श्रीमानुपेन्द्रचन्द्रस्मृतितीर्थः। तस्यैवाय-जाय श्रीमद्गोपीचन्द्राय प्रेषितमिदं पत्रम्। उपेन्द्रचन्द्रमहोदय इदानीं कलिकातायाः समीपवर्त्तिन्यां वङ्गीयब्राह्मणसभायाः कालीघट्टशाखायाम् अध्यापकपदमधितिष्ठति।

एष खल्वतिक्रम्य श्रीमन्तं चिन्तामणिगणेशमुपगतः* श्रीमतः सदनं सह प्रियबन्धुना संलपन्नमन्देन सम्मोदेन समुत्तरङ्गितान्तरङ्गस्तिष्ठामि। एषोऽस्मि विग्रहवत्येव वात्सल्यरसाधिदेवतया श्रीमत्या प्रजावतीदेव्या† परिविष्टं मिष्टमिष्टमभ्यवहार्यं भुञ्जानः। किमधिकं प्राण! सङ्कल्पसमुपनतं किल प्रतिक्षणमनुभवाम्येतद्विन्दामि च प्रमोदातिशयम्। केवलं तु बलवता प्रतिबन्धकेनालब्धावसरो नापारयं कालमेतावन्तं प्रियबन्धुं वा श्रीमन्तमपि वा सम्भावयितुं पत्रिकायाः प्रेषणेनेति नूनमिदानीमागस्विनमिवाऽऽत्मानमाकलयामि।

अयि हृदयाह्लादन! समधिगतं मया यथासमयं मूर्तमिव श्रीमतां विशुद्धं प्रेम पुलकितं तिलजातम्‡। सुधासमधिकास्वादं चैतदास्वादयन् यं नाम प्रमोदमाप्तवानस्मि नासौ विषयोऽस्यास्तपस्विन्या लेखन्याः। अतीताब्दापेक्षया सुष्ठु खल्वेते विनिर्मिताः श्रीमत्या प्रजावतीदेव्येति नन्दामि। प्रेष्ठ! ये किलेतः प्रहिता मया तिलपुलकास्तेऽपि ननु विशुद्धतमया स्वदेशीययैव शर्करया विनिर्मिताः। मा खल्वमीषामास्वादने सन्दिग्धां वश्चेतः। स्वप्नेऽपि हि नेच्छामि स्प्रष्टुमपि शर्करां वैदेशिकीं किं पुनरास्वादयितुमभ्यवहार्येषु वा योजयितुमिति।

अतिक्रान्ताः किल कियन्तश्चिद्दिवसाः समधिगतस्य श्रीमद्भिरुपहृतस्य तिलपुलकजालस्य। अद्य श्वो वा प्रेरयिष्यामि तत्प्राप्तिसंवादं सह कुशलोदन्तेनेति विचिन्तयन् सूनृतवादिनोचन्द्रिकयोर्गरीयसा कार्यभरेण व्याकुलीभूतो व्यलस्त्रयम्। दुर्दैववशात्तु ग्रन्थिज्वरेण समाक्रान्तं वाईक्षेत्रमिति परित्यज्यैतत् कोल्हापुरमुपागतः कार्यान्तरव्यापृततया च ग्रामान्तरं गतः कालमेतावन्तं नापारयं मनोरथमात्मनः पूरयितुम्, तदत्र नास्ति किमपि

* वाराणसीपत्तने चिन्तामणिगणेशरथ्यायाः ५७ संख्यकभवनं जयचन्द्रसिद्धान्तभूषणमहोदयस्य वासस्थानमासीत्।

† सिद्धान्तभूषणमहोदयस्य सहधर्मिणी।

‡ तिलपुलकाख्यो महाराष्ट्रेषु सुप्रसिद्धोऽभ्यवहार्यविशेषः। तस्य सम्यग् विरचनं तु देशान्तरीयैर्दुष्करमेव। सविशेषं प्रयतमानैरपि पुलकाः सम्यक्तया प्रादुर्भावयितुं न शक्यन्ते।

निदानान्तरमिति समवबुध्यतां प्रेष्ठेन। हेमन्तकुमारविषये* तु वाईक्षेत्रं गतः समालोक्य संहितपत्रं सर्वं सुविहितं विधास्यामि। सूर्यनारायणविषयेऽप्येवम्।

आयुष्मन्! कियता वा मूल्येन कुत्र वाऽधिगम्यन्ते वाचस्पतिमिश्रप्रणीता धर्मशास्त्रग्रन्थाः? उत्कण्ठते चेतस्तदेतदवगन्तुम्।

प्रणिपात्यतां भक्तिभरप्रह्वोऽयं जनः प्रियवन्द्योश्च श्रीमत्या प्रजावतीदेव्याश्च चरणसरसिजद्वितये। निवेद्यन्तां च प्रणयगर्भिता आशिष आयुष्मते श्रीमत उपेन्द्रचन्द्राय। अत्र कुशली जिज्ञासे श्रीमतां सर्वाङ्गीणं मङ्गलमिति शिवम्।

(प्रेरकः भवदेकप्रेमा वशंवदः
श्रीअप्पाशर्मा। श्रीअप्पाशर्मा।

प्राणोपम-
श्रीगोपीचन्द्रठाकुरचक्रवर्त्तिव्याकरणतीर्थमहाशयकरसरोजेषु
५७ चिन्तामणिगणेश महल्ला, वनारससिटि।

---

## गुरुशिष्ययोः संलापः

वधिरः शिष्यः पीडितं प्रवयसं गुरुं प्रणम्यावदत्—देव! साम्प्रतमत्र-भवतोऽवस्था कीदृशी? अपि नामानुभूयते विशेषः।

गुरुः—वत्स, कः पुनरवस्थाविशेषः। मम मरणमेव वरमिदानीम्।

शिष्यः—भगवत्पादानुक्रोशाद् द्राक् तदेवास्तु। चिकित्सकोऽधुना कः?

गुरुः—कृतान्तः।

शिष्यः—विशिष्टश्चिकित्सकोऽयं मे परिचितचरः। वैद्योपदिष्टं किं पथ्यम्?

गुरुः—(विरुद्धोत्तरवादिनं शिष्यं प्रति क्रोधपरायणः) पथ्यं ते मस्तकम्।

शिष्यः—भवत्पादानामतः परं शरीरोपयोगि लघु पथ्यं किं पुनरस्ति?

श्रीदेवेन्द्रकुमारभट्टाचार्यकाव्यतीर्थस्य

---

* हेमन्तकुमारसमाख्येन केनचिद् यथावसरं संस्कृतचन्द्रिका नाधिगतेति विलिखितं स्यात्।

# मृदुः सर्वत्र बाध्यते

सहृदया वाचकमहाभागाः, अवहिताः श्रृण्वन्तु भवन्तो मदीयमिदमत्यद्भुतं स्वरूपाख्यानम्, अनुसरन्तु च सति प्रसङ्गे मदीयमुदात्तं चरितम्, विदधतु चाऽऽत्मानं भाजनमैहिकस्य चाऽऽमुष्मिकस्य च श्रेयसः।

जातमात्रस्यारिष्टशय्यामधिशयानस्य शिशोर्मे सौम्यसुन्दरश्रियमभिवीक्षमाणया जनन्या सपदि विस्मृतमतिगरीयः प्रसवदुःखमधिगतञ्च मनुजजनदुर्लभं स्वप्नेऽप्यनास्वादितपूर्वं स्वर्गसुखम्। पुरन्ध्रयश्च सर्वा लब्धराज्या इवातिहृष्टाः प्रशशंसुरकुण्ठितकण्ठं मदीयं सौम्यतातिशयम्। कार्तान्तिका अपि परीक्ष्य लक्षणानि नूनं कुलप्रदीपोऽयं कुमार इति निजगदुः। ततश्च दशमेऽह्नि नवनीतकुमार इत्यन्वर्थं नामाकारि मे पितृचरणैः।

एवञ्च पितृभवने सादरमुपलाल्यमानस्य नवनीतविनिर्मितसालभञ्जिकायमानस्य मे समतिक्रान्ताश्चत्वारः संवत्सराः। ततश्च पञ्चमे वर्षे पदमर्पयतो विद्यारम्भः समजनि। प्रवेशितोऽहं पित्रा ग्रामस्थपाठशालाम्। तत्र च सतीर्थ्या मे परमसौम्योऽयं किं नः कुर्यादिति मन्यमानाः सर्वथा मामवज्ञोपहतं व्यदधुः, उपायैश्च वहुविधैः प्रयत्नसमुद्भावितैर्मां निजगृहुः। मयाऽपि तूष्णीं सर्वं विसोढम्।

ततश्च प्रवेशिकां परीक्षां समुत्तीर्य प्रविष्टवानहं महाविद्यालयम्। तत्रापि यथापूर्वं सर्वेषामुपेक्षाभाजनमहमासम्। विद्यावुद्धिभ्यामितरेषां समक्षेऽपि मयि प्रायेण दृष्टिप्रसादमपि न चक्रुरध्यापकाः। श्रेण्यामन्तिममेव स्थानं मदर्थं निर्दिष्टं सतीर्थ्यैः। रथ्यासु शकटेषु, क्रीडाभूमिषु रङ्गमञ्चेषु च सर्वत्रैव समुपेक्षितोऽहमावालवृद्धवनिताभिः। प्रथमं समुपस्थितस्यापि मे स्थानं बलादास्कन्दितमन्यैः। आपणेषु वीथीषु च विक्रेतृभिर्निहीनतमान्येव द्रव्याणि समधिकमूल्येन मह्यमर्प्यन्ते स्म। भवनेऽपि भृत्यजनः प्रायेण मम वचनं नैव कर्णे कुरुते, मम समक्षमेव स्वच्छन्दं व्यवहरति, मदीयमुपालम्भं न गणयति, मदीयमादेशं न पालयति।

क्रमेण च पाठं परिसमाप्य बि ए परीक्षां समुत्तीर्य स्वीकृतवानस्मि वैतनिकत्वं कस्यचिद्वणिजो निर्माणालये। तत्रापि सर्वैरवज्ञात आलोकप्रवेश-रहिते कस्मिंश्चन कोणे कार्यमकरवम्। तत्र सर्वात्मना प्रयतमानोऽपि न प्राभूवं प्रभोर्दृष्टिमाकर्ष्टुम्। मत्तो निकृष्टा बहवः कर्मकराः प्रतिवर्षमेव वेतनाभिवृद्धिमभिविन्दन्ति, मया पुनर्वर्षचतुष्टयेनापि काकिणीमात्रमप्यधिकं न लब्धम्। प्रतिदिनमेवाद्य श्वो वा स्वामिने निवेदयिष्यामीति सङ्कल्पयतः सुमहान् कालो व्यतीतः। ततश्चैकदा यद्भावि तद्भवतु भाग्यमद्य परीक्षिष्ये इति सुदृढं निश्चिन्वानः साटोपं पर्यक्रामं प्रभोः प्रकोष्ठम्। तत्र पुनः पदं निक्षिप्तवत एव मेऽदुरदुरायत हृदयमवासीदन्नङ्गानि पर्यशुष्यच्च वदन-मण्डलम्। कथं कथमपि स्वामिनं समुपसृत्य स्वप्नेऽप्यसम्भावितेन मदा-गमनव्यापारेण विस्मयस्य परां कोटिमधिरूढेन प्रभुणा सभ्रूभङ्गं निरीक्षितः कम्पितकण्ठं कथञ्चिदुदगिरम्—प्रभो! भवत्पादमूले कर्म कुर्वतो मे चत्वारि वर्षाणि व्यतिक्रान्तानि। मया च यावच्छक्यं सर्वं कार्यजातं सम्यगेव सम्पा-द्यते। अतः प्रार्थये वर्षेऽस्मिन् मदीया वृत्तिः—इति वदन्तं मामाक्षिप्य तेन परुषमुक्तम् "किम्!" ततश्च परुषतरं "किम्!!" ततश्च परुषतमम् "किम्!!!" इति। ततश्च वेत्राहतेनेव मयोक्तम्—"मदीया वृत्तिरभ्यधिकैव वर्तते। लेशतोऽपि मया वृद्धिर्न काम्यते इत्येव वक्तुं स्वामिसकाशं प्राप्तोऽस्मि।" तदाकर्ण्य स्वामिना स्मितसमुद्भासिवदनकमलेनोक्तम्—"सम्यक्। एतदेव योग्यम्। इदानीं च स्वस्थानं गत्वा स्वं नियोगमशून्यं कुरु। नातः परं कदापि मम कार्योपरोधो विधेयः" इति।

व्यतिकरेणानेन निरतां दूयमानमानसो गृहं प्रत्यावृत्तः कस्याप्यभिनवस्यो-पाख्यानस्य वाचनेन निर्विण्णमात्मानं विनोदयितुमैच्छम्। परं सर्वत्र निपुण-मन्विष्यापि क्वापि नोपलब्धं द्वित्रेभ्यो दिनेभ्यः पूर्वं महता मूल्येन क्रीतं तत पुस्तकम्। ततश्चावगतं मया भृत्यमुखाद् यत् तस्मिन्नेव दिने प्रातरागत्य ममानुमतिमन्तरेणैव केनचन सुहृदाऽपनीतं तत् पुस्तकम्। श्रवणसमनन्तरमेव प्राहिणवं तस्मै पत्रम् अचिरादेव प्रत्यर्पणीयमाख्यानपुस्तकमिति। तेन तु

'भवतु द्रक्ष्यते' इत्येव प्रतिपन्नमुत्तरम्। तत ऊर्ध्वं मासत्रितयं यावत् प्रतिदिनमेव पत्रं भृत्यं च संप्रेष्यापि नैवाधिगतं तत् पुस्तकम्।

वत्सरद्वयात् पूर्वं केनचन कपटमित्रेण स्वदुःखवृत्तान्तनिवेदनपुरःसरमृणरूपेण गृहीताः पञ्चाशद्रूपकाः। "भद्र! न खलु व्यपेतेष्वपि प्राणेषु विस्मरिष्यामीममुपकारम्। आगामिनि च मासे वेतनं लब्ध्वाकालहीनं निर्यातयिष्यामीदमृणम्" इति। मासत्वयनवत्सरा व्यतीताः, रूप्यकाणां पुनर्वार्ताऽपि न श्रूयते।

इतश्चाकारणमेव जातक्रोधेन श्वशुरमहोदयेन स्वभवनं नीता मदीया सहधर्मिणी। बहुधाऽनुनीयमनोऽपि न तस्याः पत्युर्गृहेऽवस्थानमन्वमन्यतासौ द्रविणमदमत्तः। प्रियतमयाऽपि मे पितुरेव पक्षः समवलम्ब्यते। विवाहाद् ऊर्ध्वमेव को वा श्वशुरदुश्चेष्टितेन प्राणसमासमागमेन वियुक्तः प्रभवेत् प्राणान् धारयितुम्।

प्रलपन्तु तावत्तपस्विनः कवयितारः—

What's in a name ? that which we call a rose
By any other name would smell as sweet.

*Romeo and Juliet*, ii. 2.

It is not names which give confidence in things, but things which give confidence in names.

इत्यादि। मन्ये मम नामैव सर्वस्यास्यानर्थस्य हेतुः। अन्यथा कथं गुणवतोऽपि मे सर्वत्रैव परिभवः, सर्वत्रैव विनिग्रहः? अहो! अविमृश्यकारिता मे पित्रोर्यत्ताभ्यां नवनीतकुमारसमाख्यया संयोज्य न केवलं प्रख्यापितं मे कोमलत्वमपि तु परिमुषितमत्यन्ताय मे तेजः। अवितथं किलोक्तं कविना—

A name ?—if the party had a choice,
What mortal would be a Bugg by choice ;
As a Hogg, a Grubb or a Chubb rejoice !
Or any such nauseous blazon.

अथवा कोऽत्रापराधः परमाराध्ययोर्मे पित्रोः। आकृतेरनुरूपमेव नाम व्यधायि ताभ्याम्।

विद्युच्छकटे सुखोविष्टैरितरैः कोणे निक्षिप्तस्य मम मानसे समुदियायैवं चिन्तापरम्परा। ततश्च यदृच्छया निपतितं मे नयनयुगलम्—आलोकचित्रणालये। तत्र च बहिरेवाङ्कितमासीत्—एकेन रूप्यकेण अष्टविधानि आलोकचित्राणि! त्वर्यताम्। त्वर्यताम्। अचिरादेव मूल्यवृद्धिः स्यात्। आगम्यताम्, सत्वरमागम्यताम्, सफलीक्रियतां मनोरथः, प्रदीयतां प्रियजनाय प्रणयोपहारः, अप्रयासेन कृतार्थीक्रियतां वल्लभजनः इत्यादि।

तद्दर्शनेन नियतिबलाद्वा प्रज्ञोन्मेषाद्वा गरीयस्या स्वप्रतिकृतिनिर्मापणवाञ्छया कृतं मे दुःखदावदग्धे हृदये पदम्। ततश्च तदात्व एव सहसा समुत्थाय विस्मितापरारोहिजनावकृष्टो घण्टां वादयित्वा वैद्युतशकटस्य वेगं मन्दीकृत्य रथ्यामवतीर्णो द्रुतं प्राविशं तच्चित्रणालयम्।

चित्रकृता च सगौरवं दत्तपथः सप्रश्रयं परिपृष्टोऽवादिषम्, भद्र! परममनोहरमेकमालोकचित्रं निर्मीयतामिति। ततस्तेनोक्तम् मृदु वा परुषं वा? प्रश्नस्य तात्पर्यं ग्रहीतुमशक्नुवन् तस्य च पुरस्तात् स्वीयमज्ञत्वमपि प्रकटयितुमनिच्छन् सशिरःकम्पमब्रवम् परुषम् इति। ततश्च मां भित्तिसंलग्नस्य सुबृहतो मुकुरस्य पुरतो नीत्वाऽधरस्योपरिष्टाद्विराजमानं श्मश्रुजालं क्लृप्त्वा सूक्ष्माग्रमूर्ध्वमुखं च विधाय पुनः पुनः परावर्तितवान् मे वदनमण्डलम्। प्रायेण घटिकार्द्धार्द्धमेवं विधाय मदीयेन मुखभावेनाधिगतसन्तोषोऽवदत् सम्यगिदानीं सञ्जातम्। मुहूर्तमात्रमेवमेवावस्थीयतामिति। दर्पणे च स्वं प्रतिबिम्बं समवलोक्य स्वयमेवाहं प्रहर्षविस्मययोः परां कोटिमध्यरुक्षम्। पुनः पुनश्च परिशीलितवान् तमवस्थानप्रकारं तां च मुखभङ्गिम्। ततश्च यन्त्रसहायेनाचिरादेव समुत्थापितायां प्रतिकृतौ तथाविधानि शतं चित्राणि गृहीत्वा, चित्रकराय प्रदाय मूल्यं च पारितोषिकं च, हर्षभरविवशहृदयस्तामेव मुखभङ्गिं समास्थाय गृहमुदचलम्। परम अहो आश्चर्यम् इतः पूर्वं यमतिमात्रमकिञ्चित्करं मन्वाना रथ्यापुरुषा दृष्टिपाते-

नापि नानुगृहीतवन्तस्तमेव दृष्ट्वेदानीं सर्व एव ससम्भ्रममपसरन्ति, अहम-हमिकया च प्रददति पन्थानम्। क्रमेण भवनं सम्प्राप्तस्तत्रत्यैर्भृत्यवर्गैः प्रत्युत्थानाभिवादनाभ्यां सम्भावितः "नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण" इति कविप्रजापतेर्वचनमनुध्यायन् स्थितः। ततश्च व्यतीतायां कस्याञ्चन कालकलायाम् येनानिवेद्यैव मह्यं गृहीतं मदीयं पुस्तकं निर्बन्धसहस्रेणापि न प्रत्यर्पितं तस्य सविधे भृत्यहस्तेन प्रेषितं पत्रम्—भद्र! अवसितमिदानीं मे धैर्यम्। पत्रपाठसमनन्तरमेव पुस्तकं न प्रत्यर्प्यते चेद्धितं न भविष्यति। सद्य एव समुत्थापिता मे प्रतिकृतिः प्रसादीक्रियते भवते, आशास्यते रोचेतेति। अचिरादेव प्रेषितं तेन पुस्तकं पत्रञ्च—भद्र, क्षन्तव्योऽयं दासजन-स्यापराधः। गृहे स्वजनानामामयादिना नितरां खिन्नेन न पारितं यथाकालं पुस्तकं प्रतिप्रदातुम्। सर्वाङ्गीणं कुशलं भवतः प्रार्थये इति।

ततश्चाधमर्णस्य मित्रस्यापि सकाशे प्रतिकृतिसखं प्रेषितं पत्रम्, निमेषमात्रेण च सहानुनयपत्रिकया समधिगता षष्टी रूप्यकाणाम्।

ततश्च श्वशुराय प्रहितः प्रतिकृत्या साकं दूतः। चिरं विसोढो मया भवदीयो निकारः। पत्रवाचनावसानकाल एव दुहितृसम्प्रेषणसमयतां नेतव्यः। अन्यथा विरुद्धं फलं भविष्यति। तत्रत्यानां प्रमोदायाभिनवा मे प्रतिकृतिः प्रेष्यते इति। घटिकाभ्यन्तर एव वर्षद्वयादनन्तरं समागता सहधर्मिणी प्रतिमूर्तिरिव प्रश्रयस्य विग्रह इव पातिव्रत्यस्य।

एवमालोकचित्रमहिम्ना गृहिणीं पुस्तकं द्रविणं च प्रतिलभ्य परेद्यवि प्राविशं प्रभोः प्रकोष्ठं दृप्त्या तृणीकृतजगत्त्रयसत्त्वसारः स एवाहं नवनीत-कुमारः। दृष्ट्वैव मां ससम्भ्रमं प्रत्युत्थानेन सम्भावयामास भवनाधिपतिः। ततश्च "न खल्वित ऊर्ध्वं मुहूर्तमपि मर्षयामि भवतामाचरणम्। इदानीमेवात्रै-वावश्यमेव द्विगुणीकरणीया मे मासिकी वृत्तिः।" इति सावधारणभाषितेन स्वामिना समुपजातवेपथुना त्रासगद्गदं निगदितम्—भद्र! त्रुटिर्नः सञ्जाता यद्भवादृशस्यातिशोभनस्य कर्मकरस्य वृत्तिर्न वर्द्धिता। मासादस्मादारभ्य

त्रिगुणा ते वृत्तिर्भविष्यति । इत ऊर्ध्वं च प्रतिवर्षमेव यथावसरं नियतं ते वेतनवृद्धिर्भवितेति ।

इत्थं च प्रतिदिनमेव दर्पणसाहाय्येन परिपोषितपरुषभावोऽहं सर्वेषां समादरभाजनतामधिगम्य पुत्रकलत्रपरिवृतः सुखेन निवसामि ।

श्रीक्षितीशचन्द्रशर्मणः

---

# जिज्ञासा मीमांसा च

कलिकातातः श्रीमणीन्द्रनाथकाव्यतीर्थः पृच्छति—

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥

इति श्लोके नीलेति विशेषणस्य किं सार्थक्यम् इति ।

उत्तरम्

नीलस्यातिस्निग्धतया नीलोत्पलस्य सातिशयं सुकुमारत्वं प्रतीयते, तेन सुतरामसम्भाव्यत्वं संसिध्यति । किञ्च—"असिश्यामम" "निर्मोक-मुक्तभुजगश्यामलेन महासिना" इत्यादिमहाकविवचनेषु खड्गानां नीलत्वस्य सुप्रथितत्वात् "कुवलयामलखड्गनीलः" इत्यादिषु च विस्पष्टमेव नीलोत्पलेन साम्यप्रतिपादनाद् यस्तावत् पारमार्थिकीं खड्गधारां वर्जयित्वा प्रातिभासिक्या खड्गधारयाऽभ्यन्तरलीनपावकां शमीशाखां छेत्तुमध्यवस्यति तस्याविमृश्यकारित्वं स्फुटमेवेति प्रतीयते । मञ्जूषा-सम्पादकः ।

# ASTROLOGY IN PRACTICE.

There are a good many honest individuals who not only believe in astrology but take special care to guide their daily lives in accordance with the stellar indications found in their horoscopes from day to day and year to year. There are already hundreds of books written by some of the ablest exponents of this science which may be consulted with profit and pleasure. But the man in the street, I am afraid, has neither the inclination nor the patience to take any serious notice of all or many of them. To him, a rapid cut and dry method of forming an approximate idea of coming events would be useful and most welcome. For the benefit of those who would derive practical advantages from the application of the principles of practical astrology the following hints are given. It is presumed that the student is familiar with the general principles of astrology and is also quite competent to calculate stellar maps for any date and time from the Ephemeris. The most difficult and perhaps the most skilful part of the transaction is a correct interpretation of the various stellar configurations and aspects. No general rule can be laid down for it, because each case must be dealt with on its own merit. For guidance, the student may be referred to the following books *viz.*

Raphael's *Guide to Astrology*, P. J. Harwood's *Easy Lessons in Astrology*, *Astrological Prediction* by the same author, Alan Leo's Text Books, etc. etc.

I First of all, find out the *daśā*, *antardaśā*, and sub-period i.e. *Vidaśā*) according to the *Viṃśottarī* system for any given period of time. Try to form an approximate judgment according to the well-known rules of that system of the probable effects of such combinations. Suppose you apprehend severe misfortune like some terrible illness.

II Then turn your attention to the *Sāyana* birth-map derived from the Ephemeris and find out according to the Radix

system* of directions the most important aspects in force for the time being (i.e. corresponding to the period under review). Take special notice of the following combinations *viz* :—

(a) Sun semi square (i.e. 45°) Mars or Saturn or ruler of the 8th house or of the 6th house; the other dangerous aspects would be square (i.e. 90°), opposition (i.e. 180°), and Sesqui-quadrate (i.e. 135°) and to a less extent the 150° aspect.

(b) The moon may form the above aspects with either, Mars of Saturn.

(c) The ascendant may next be considered in the same manner.

Note which of the three *points* (sun, moon, ascendant) would be considered to be a *hyleg* (i.e. giver of life). The hylegiacal places are the following :—

i 5° above the ascendant to 25° below it (measured by oblique ascenscion which is found by adding 90° to M. C. (i.e. cusp of 10th house).

ii From $\frac{\text{Asc.—M. C.}}{2}$ unto 5° beyond the cusp of 9th house.

iii From 5° below 8th to 5° below 7th house.

If the Sun be in any of the above three positions, then the Sun is the hyleg: if the Sun be *not* there then take the Moon: if neither the Sun nor the Moon be there, then the ascending degree and minute should be taken as the hyleg.

(d) Sometimes, but *not* always, the evil aspects mentioned

---

* In the Radix System of directing the planets, the arc for each year=0°59′8″ .and for each month, the arc=4′56″ and for each day only 10″. Suppose the age of the native=39 years 3 months 6 days, then the major arc for this age would be equal to 38°42′11″ and this amount is to be always added to the longitudes of the sun, moon, ascendant, mid-heaven and all the planets to give the progressed positions for the *given age*. The aspects formed by *each one* of the progressed *points* with the longitudes of sun, moon &c. at the time of birth would give significant indications for the *given* age.

Besides the above *major arcs*, *minor arcs* are derived from the longitude of the moon alone; the minor arc for each year=13°10′35″; for each month=1°5′53″ and for each day=2′12″. For age 39 years 3 months 6 days, arc=3 signs 7°23′. Add this to the long. of moon at birth for the position of secondary moon at the given age.

above may be formed by the hyleg with either Uranus or Neptune or Rāhu or Ketu (i.e. Dragon's nodes), esp. when the afflicting *bodies* are in the 6th, 12th or 8th houses. In such cases, the native is liable to suffer more or less from health trouble, besides other forms of misfortune arising out of the house positions of the bodies concerned.

(e) According to the Radix system, *rapt parallels* may be formed, which cannot be explained here.

III Assuming that an evil aspect has been discovered according to the above methods, the next important thing is to ascertain the aspects formed by the *secondary* moon to *radical* planets. How to find out the secondary moon has been explained in the foot-note on the previous page. If the secondary moon adds testimony, then the matter would assuredly be very serious for the native and the event may be precipitated either within the month of formation of the evil aspect or within a month preceding or following it.

IV The next thing to be done is to consult an Ephemeris corresponding to the year shown by the age of the native. The transits of Sun, Moon, Mars, Saturn, Rāhu, Ketu, Uranus and Neptune are to be carefully noted.

(a) The Sun may form *evil* aspects with the long. of the evil planets (like Mars, Saturn &c.) at birth. One week before and one week after the *exact* date of formation of such aspect should be expected to precipitate events.

(b) The moon usually changes her aspects very quickly. Consequently the precipitation of results may be limited to a day or a fraction of a day. In very acute diseases when fatal results may be apprehended, pay particular attention to the aspects of the moon.

(c) When both the luminaries are in evil transits of the malefics and especially when the luminaries happen to square their own place at the same time, then such dates will be invariably found to be particularly unfortunate.

(d) A new moon (also a full moon) if it should fall in evil aspect to one or both the planets between which an evil direction has already been in force will mark the exact date of the evil indication.

(e) A new moon (i.e., lunation) in conjunction with or opposition to the place of a malefic at birth may indicate a period of various worries in life.

Eclipses falling in conjunction with or opposition to the place of a malefic or the luminaries or ascendant will indicate serious trouble for the time being.

(f) Should the eclipses afflict the *hyleg* especially during an evil direction or under *mārakadaśā* and *antardaśā* the life of the native may be in danger.

(g) If the moon throws a benefic aspect to the Cusp of 2nd or its ruler or part of fortune and if at the same time the aspect of the Sun to the same Cusp be good, then financial gains may be expected.

(h) Joint aspects of the luminaries to the Cusp of any house are always specially important.

*N.B.*—Benefic transits produce little effect if evil directions were already in operation. Similarly the radically weak or afflicted planet (even if it be Jupiter) may not produce much benefic results during its benefic transit.

(i) New moons falling on vital points in the map will produce an effect in accordance with the position and aspects of the spot where they fall. Events may be anticipated acording to nature of planets in transit and also the signification of the house through which it is passing.

(j) If good planets or ruler of Ascendant transit MC. or place of its lord or its good aspects—then such dates would be good for seeking orders in business &c., according to the signification of the 10th house.

(k) Malefics in transit over asc. or Sun or moon are liable to upset health.

(l) Jupiter in transit over its own place or the luminaries or the asc. will bring good fortune but the extent of good fortune will depend on his radical strength and position.

(m) According to Hindu astrology, transits of Saturn with special reference to the places of the radical moon are of great importance.

'जन्माङ्गरुद्रेषु सुवर्णपादं द्विपञ्चनन्दे रजतस्य पादम् ।
त्रिसप्तदिक् ताम्रपदं वदन्ति वेदाष्टसार्केष्विह लौहपादम् ॥'

तत्फलञ्च ।

लौहे धनविनाशः स्यात् सर्वसौख्यञ्च काञ्चने ।

ताम्रे च समता ज्ञेया सौभाग्यं रजते भवेत् ॥

Consequently if the transit of Saturn takes place in the 4th, 8th and 12th houses from the sign occupied by the moon at birth very serious troubles of health and finance will follow. According to some astrologers the transits of Saturn in the 4th and 8th houses is called "छोट पणौति." Miserable conditions, quarrel with brothers, mental anxiety, exile, danger through fire or weapon may be the consequences following this transit.

The transit of Saturn over the moon sign or in the 12th from her is called "वड पणौति" and is liable to produce sickness, loss of money or heavy expenditure, restlessness of mind, change of place, prosecution or persecution by powerful enemies &c.

*(To be continued).*

SURENDRA NATH BANERJEE

# सुभाषितानि

(1) Idleness is the devil's pillow.
आलस्यं वै राक्षसस्योपधानम् ।

(2) Punishment walks in the footsteps of crime.
दंडोऽपराधस्य पदानुचारी ।

(3) Patriotism is but a momentary emotion.
स्वदेशभक्तिर्नाम भावना क्षणस्थायिनी ।

(4) It is a great sin to slay a fair thought.
शोभनस्य विमर्शस्य हननं पातकं महत् ।

(5) Heaven is especially kind to fools.
विशेषेण हि मूर्खेषु दयां कुर्वन्ति वै सुराः ।

(6) Only the child's little world is replete with the golden sheen of poetry.
काव्यहेमप्रभापूर्णं बालस्यैव जगल्लघु ।

—दत्तात्रेयः

# PRIZE COMPETITION.

*A prize of Rupees Two is offered for the best Sanskrit rendering of the following poem. In the matter of the award, the Editor's decision must be regarded as final. Translations must reach the Editor on or before the 29th February, 1936.*

*Four Men.*

It chanced upon a winter's night,
safe sheltered from the weather
The board was spread for only one,
Yet four men dined together.
There sat the man I meant to be,
in glory spurred and booted,
And close beside him to the right,
the man I am reputed.
The man I think myself to be, a
seat was occupying
Hard by, the man I really am, to
hold his own was trying.
And though beneath one roof we met
none called his fellow brother
No sign of recognition passed—
they knew not one another.

---

## स्वदेशस्नेहः

मातृभूमिर्मदीयेति यः स्वयं न वदत्यहो ।
स मृतात्मा पुमान् कश्चित् किं जीवति धरातले ॥

अन्यदेशीयसञ्चारे समाप्ते जननीं निजाम् ।
प्राप्तस्य कस्य मानेन न मनो नृत्यति स्वयम् ॥
न स्वदेशाभिमानी यो लक्ष्मीवासनिकेतनम् ।
यशःपाण्डुरदेशोऽपि गायका न स्तुवन्ति तम् ॥
जन्तूनां मृतिरेकैव तथाप्यस्य द्वयं मृतेः ।
तस्य जीवत एव स्वकीर्तिचन्द्रोऽस्तमेष्यति ॥
नाश्रुपूर्णमुखे लोके विहीने चाऽऽदरादिभिः ।
यतो जातः स तत्रैव हा ! विलीनो भविष्यति ॥
न करिष्यति काव्यतल्लजं कविरेकोऽपि विलापरूपकम् ।
इह पञ्जरमुक्त एव सः खग इत्येव मनुष्यचिन्तितम् ॥

के नीलकण्ठन् साहित्यशिरोमणिः

# अनुवादः

Every form of the beautiful contains the beginning and end of its beauty in itself, nor has praise any part in it whatsoever. Accordingly nothing changes whether for better or worse through praise. And this, I take it, holds good even in the case of the vulgar conceptions of beauty: for instance, material objects and works of art. Shall we then say that the one true beauty stands in need of applause? Nay, no more than law and truth, than kindness and and modesty. Which of these is beautified by praise or deformed by blame? Does an emerald lose its value unless we go into raptures over it? Does gold, ivory or purple? a sword, a blossom or a shrub?

श्रीः

'प्रकृत्या सुभगं वस्तु न प्रशंसामपेक्षते ।'

सर्वस्यापि रम्यवस्तुनो रामणीयकं मनुजकृतां प्रशंसां लेशतोऽप्यनाश्रित्य, स्वस्मिन्नेव उदयं याति, परिणतिं च प्राप्नोति । येन प्रशंसावशात् तस्य उपचयापचयौ न संभवतः । मन्ये च ईदृशमेव पृथग्जनैर्भूयोऽभिनन्द्यमानं तदपि चारुत्वं वर्तते, यत्पुष्पादिगतं पार्थिवम्, चित्रादिगतं वा कृत्रिममुपलभ्यते । सत्येवं नैतद्वक्तुं युज्यते यद् यथार्थरम्यत्वं प्रशंसासव्यपेक्षम् इति । इदमेव स्तवानपेक्षत्वं शास्त्रसत्ययोः विनयकारुण्ययोर्वा विषये सर्वैरभ्युपेतं तिष्ठति । तद्वदन्तु पण्डिताः कतमदेतेषां प्रशंसया सुभगं, निन्दया वा दुर्भगं जायते ? न चेत्सोल्लासं प्रशस्तः, किं मरकतमणिः अर्घतः पतति ? सुतरां नैव । एवमेव स्वर्णमिभदन्तो वा राजकिरीटः खड्गो वा, पुष्पमञ्जरी मञ्जुकुञ्जं वा, स्तवगर्हानपेक्षं सहजमेव सौभाग्यं पुष्णाति ।

[व्यतीते मासि प्रमादात् दत्तात्रेयनारायणदेशपाण्डे इत्येतस्य स्थाने गोविन्दकृष्णमोदक इति मुद्रितम् । क्षाम्यतामिममनिच्छाकृतमपराधं महा-

भागाविमौ। मोडकमहोदयस्य चानुवादः परिभ्रष्टः। इदानीं स प्रकाश्यते। अयमेव च समीचीनतम इति मोडकमहोदयाय पूर्वमेव रूप्यकद्वितयं प्रेषितम्। मञ्जूषासम्पादकः ]

To gild refined gold, to paint the lily,
To throw a perfume on the violet,
To smooth the ice, or add another hue
Unto the rainbow, or with taper light
To seek the beauteous eye of heaven to garnish.
Is wasteful and ridiculous excess.

"नितांतरम्यभावानां परिष्कारो विडंबना"
स्वर्ण प्रयुक्तसंस्कारे सौवर्णरसलेपनम्।
शोभार्थं विविधैर्वर्णैररविन्दस्य रञ्जनम्॥
पाटले मधुरामोदे गन्धाढ्यद्रवसेचनम्।
तुषारसंघातशिलामसृणीकरणं मुधा॥
सुचारुणेन्द्रचापेन नवरङ्गस्य मिश्रणम्।
दिवोऽभिराममनेत्रस्य क्षुद्रदीपेन मण्डनम्॥
हन्त! हास्या वृथा चेयं संस्कारपुनरुक्तता॥

सीतारामविष्णुगोखले

व्यर्थश्रमत्वमेतत् परिहासफलं च पौनरुक्त्यं वा।
चेष्टैधयितुं तेजो हेम्नो निष्टप्तशोधितस्यापि॥
वर्णैः संयोजयितुं प्रकृतिसितं रुचिरपुण्डरीकं वा।
सौरभमुपचेतुं वा जात्याश्च, हिमस्य मसृणतलतां वा।
वर्णैर्बहुविधमैन्द्रं चापं वर्णान्तरं च लम्भयितुम्॥
रम्यं खमणिं कर्तुं विवृद्धभूषं च दीपिकादीप्त्या॥

गोविन्दकृष्णमोडकः

———

THE

# Calcutta Oriental Journal

**(the only Journal in English dealing with Sanskrit and Sanskritic Studies).**

EDITED BY

KSHITISH CHANDRA CHATTERJEE

CONTAINS

Studies on Sanskrit Grammar and Alaṃkāra by the Editor, on Vedānta by Prof. Kokileswar Sāstrī, M.A., on Prakrit and Pāli by Dr. S. M. Katre, M.A., Ph.D. (London), on the Avesta by Dr. I. J. S. Tārāporavala, B.A., Ph.D. (Germany), on Indian Architecture by Prof. K. R. Pisharoti, M.A., L.T., on Sanskrit Subhāṣitas by Dr. Har Datta Sarma, M.A., Ph.D. (Germany), etc., etc.

AND THE TEXTS

*Svaramañjarī* with *Parimala* by Mallinātha's son, *Kavyālaṃkārasūtravṛtti* with an

original commentary, critical and scientific, containing extracts from all the well-known works on Sanskrit Grammar and illustrations from all the well-known classics, a commentary that occupies a unique place in the whole range of Sanskrit literature, Maitreya Rakṣita's *Tantrapradīpa* with notes, Vardhamāna's *Kātantravistara*, Rājaśekhara's *Viddhaśālabhañjikā* with a commentary by Ghanaśyāma, another by his two wives Sundarī and Kamalā and a third by the Editor.

Prof. Dr. M. Winternitz writes from Czechoslovakia : I find the Journal extremely useful, as I have to refer to it frequently just now in preparing the English edition of Vol. III of my History of Indian Literature for the Press.

Third year from October 1935. Annual subscription : Rs. 6/- (Rupees six).

61A, Ramkanta Bose Street, Baghbazar,
Calcutta.



॥ श्रीः ॥

हिरेमठ



# सूक्तिसुधा

नाम

संस्कृतमासिकपत्रिका ।

| | | |
|---|---|---|
| द्वितीय-खण्डम् । | कार्त्तिकी पूर्णिमा । १९६२ | तुरीय-संख्या |

साहित्याखिलभागपारगतया सम्राड्बुधासमर्थैः
प्राच्यप्राञ्जलकाव्यसिन्धुमथनायासोद्यतैर्भूसुरैः ।
एषा मासिकपत्रिका शशिकला नव्या विभाव्योद्धृता
सूते सूक्तिसुधामतः सुमनसां दृक्पात आशास्यते ॥

श्रीपण्डितभवानीप्रसादशर्मणा,

काश्यां विद्याविलासयन्त्रालये

संमुद्र्य प्रकाशिता ।





# " समस्या "

## भ्रमति गगनमध्ये कच्छपी पक्षहीना ।

### अवधिरस्या मार्गी पूर्णिमा ।

| विषयाः । | लेखकाः । |
|---|---|
| ७३ अलिविलासिसंलापः | म. म श्रीगङ्गाधरशास्त्री । |
| ७७ शरद्विलासः | का. पा. म. तैलङ्गश्रीरामशास्त्री । |
| ८१ अभिनवबृहत्कथा । | साहित्याचार्यश्रीलक्ष्मणशास्त्री । |
| ८५ सुन्दरचम्पू र्दीपोत्सवश्च । | सिग्धालांपाङ्कश्रीसोमनाथशर्मा । |
| ९२ समस्यापूर्त्तयः | अनेके । |

### पूर्वतोऽनुवृत्तम् ।

| मुद्राः । | नामानि । | मुद्राः । | नामानि । |
|---|---|---|---|
| ५ | पं० दामोदराचार्यदीक्षित काशी | १ | पं० वैद्यनाथमिश्र बडोदा |
| २ | पं० काशीनाथ आ० दी० नेपाल | १ | पं० कृष्णारामगोवर्द्धन वीकानेर |
| २ | पं० सदाशिव आ० दी० नेपाल | १ | पं० ललिताप्रसाद शाहजापुर |
| २ | श्रीमन्नेपालराजगुरुज्यू पं० ज्यू | १ | पं० प्रभाशङ्कर भावनगर । |
| २ | पं० करुणाशङ्करशास्त्री भावनगर | १ | पं० विश्वनाथ महाशङ्करदवे, |
| २ | पं० भैयाशास्त्री द्राविड इन्दोर | १ | पं० गिरजाशङ्कर केवलराम, |
| २ | पं० लक्ष्मीदासशास्त्री कच्छभुज । | १ | पं० त्रिभुवनकुवेर दी ।, |
| १ | पं० मुकुन्दझा हरिपुर दर्भङ्गा । | १ | पं० मगनलालत्रिभुवनया, । |
| १ | पं० गोपालकृष्णशास्त्री अमदा० | १ | पं० मोहनलालमाधवभट्ट, |
| १ | पं० मीरजाशङ्कर हरिशङ्करजोसी | १ | पं० प्रह्लादअमथराम, । |
| १ | पं० गुनौडझा काशी । | १ | पं० विश्वनाथ नरभेराम या, । |
| १ | पं० चिन्तामणि भट्टाचार्य काशी । | १ | पं० बोधकृष्णझा काशी । |

### सूचना ।

अद्यपर्यन्तं पाठकमहाभागानां नियमानां परिचिततया अनवकाशप्रयुक्तन्यूनतापरिहाराय देशवृत्तान्ता एवाधिकतया निवेश्यन्ते नवीनैर्जिज्ञासुभिर्नियमावली पृथग् मुद्रिता प्रार्थ्यताम् ।

सू० सं० पण्डितभवानीप्रसादशर्मा घासीटोला बनारस ।

इह रहस्यमिदं प्रणयाकृते,
फलतयेन्द्रियजा मतिरिष्यते ।
अनुमितिस्तु समस्तजगद्धिता-
हितविवेकनिदानतया ऽऽदृता ॥ ६० ॥

अनुपलब्धिमतः प्रबला ऽनुमा
नियमतः स्वगुणेन विबाधते ।
इतरथा गृहगो विपणौ सुता-
ननुपलभ्य कुतो न हि रोदिति ? ॥ ६१ ॥

व्यवधितो यदि तत्र न योग्यता,
न खलु सा ऽऽत्मनि बाह्यगुणोज्झिते ।
स्फुरति स स्वयमेव सदेति तु
क्रमश एव शिशो ! कथयिष्यते ॥ ६२ ॥

तदनुभूतिसुखस्पृहयालवः
सुकृतराशिवशात्कति चिद्बुधाः ।
अपि महेन्द्रपदं विपदास्पदं
विगणयन्ति, किमत्र महाद्भुतम् ? ॥ ६३ ॥

तदिदमर्जनरक्षणसंक्षय-
क्षणजदुःखशतैरविदूषितम् ।
अपरतन्त्रमुपास्यमपास्य कः
क्षणिकमिच्छति वैषयिकं सुखम् ? ॥ ६४ ॥

न च सुखत्वबलेन विनाशिता
ऽत्र भवता प्रतिपादयितुं क्षमा ।
ध्रुवमुपाधिरिहास्ति तु जन्यता,
न जनिमद्धि चिदात्मसुखं मतम् ॥ ६५ ॥

अनुभवो हि सुखं रतिरोषयो-
रजनकं भवतीति पुरोदितम् ।
अभिदया ऽऽत्मनि चित्सुखयोर्न सा
कथमपि प्रसरिष्यति जन्यता ॥ ६६ ॥

अखिलमानबलैरपसारणं
क्रियत आवरणस्य, न चिज्जनिः ।
त्वमत एव विदन्निह नित्यतां
जहिहि दुःखसमागमभीरुताम् ॥ ६७ ॥

अपि निसर्गत एव सुखात्मिका
करणजन्यतया प्रतिसंहिता ।
विषयदोषविषैः कलुषा चितिः
सृजति दुःख,मियं तु न तादृशी ॥ ६८ ॥

विषयजन्मनि दुःखमवारितं
समवधार्य बुधा बलवत्तरम् ।
जहति तत्सुखमिष्टमनास्थये-
त्यनुमतं नयविद्भिरिदं मतम् ॥ ६९ ॥

न हि विषेण विमिश्रितमोदनं
    हृदयमोदनमप्यवधीरयन् ।
निपुणसंसदि को ऽपि विगीयते,
    विषयजं सुखमीदृशमीक्ष्यते ॥ ७० ॥

ज्वरयुतः शिशिराम्बु सुखं विद-
    न्नपि भिषग्वचनाद्विनिवर्तते ।
त्यजतु सौख्यकरे ऽपि तथा भवान्
    कुचरिते दुरुदर्कफले स्पृहाम् ॥ ७१ ॥

अपलपामि सुखं न हि साम्प्रतं,
    परिणतिः कटुकेति वदामि चेत् ।
न हि विबाध्यत इन्द्रियजा मति-
    स्तदुपजीव्यतया न जयस्तव ॥ ७२ ॥

विमलचित्सुखलाभकृते तनुं
    श्रममपास्य महान्तमवन्ति ये ।
तदधिकानुपयोगदुरन्तता-
    श्रमविदस्त इमे नयवित्तराः ॥ ७३ ॥

किमु न पश्यसि निर्मलमाधुरी-
    सुभगशीतलवारियुतापगाः ।
प्रतिदिशं सुलभाः परितृप्तये,
    फलभरानमितानमितांस्तरून् ॥ ७४ ॥

प्रतिपुरं धनिनो निजपोषणो-
वरितमन्नमकिञ्चनराजये ।
ददति, येन विना श्रममाप्यते
स्वतनुपालन,मुच्चसुखं च तत् ॥ ७५ ॥

न हि विचार उदेत्ययमश्रुतो-
पनिषदां गुरुवागवमानिनाम् ।
उपरतेष्वखिलेषु कथं भवे-
दिति न भीस्तत एव विवेकिनाम् ॥ ७६ ॥

प्रशमिहालिकभूपमतैक्यतः,
स्वतनुपालनमात्रमपेक्ष्यते ।
तदितरत्तु जनो निजवासना-
ऽनुगुणमिच्छति भूरिविधं फलम् ॥ ७७ ॥

युधि नृपो विजयं मृतिमेव वा
ऽब्धिषु लयं मणिलाभमथो वणिक् ।
रतिमथापि मृतिं किल कामुको
लषति, कुत्र मतैक्यमवेक्ष्यते ? ॥ ७८ ॥

गतविवादमतस्तनुरक्षणं,
तदितरत्र कलिर्दुरपन्हवः ।
तदिह सर्वमतैक्यपथाश्रयः
शमवता सुलभो; न विलासिना ॥ ७९ ॥

उद्गच्छदच्छकिरणः शिशिरांशुरद्य
नीलाऽरुणादिगुणभेदविलोपदक्षः ।
उद्भासयन् दश दिशो गगनं महीं च
लोके बलाद्विशदिमाऽद्वयमादधाति ॥ २० ॥

यद्राजते ऽद्य गगने तुहिनांशुबिम्बं
लग्नाऽङ्कमेणनयने ! घनसारकल्पम् ।
नीलोपलाऽऽलिरचिताऽद्भुतमध्यशालं
तत् स्फाटिकं मनुमहे मदनस्य सौधम् ॥ २१ ॥

आलिङ्ग्य शारदनिशां गगने निशान्ते
नक्षत्रवज्रमयदीपशताऽऽत्तशोभे ।
साऽऽनन्दमेष विहरंस्तरुणो ऽमृतांशुः
सूते जनस्य हृदि सम्मदमद्य पीनम् ॥ २२ ॥

एते लसन्ति गगने बहुलोज्ज्वलाऽऽभाः
सङ्ख्याऽतिगा उडुगणाः शरदीह रम्याः ।
शीतांशुमण्डलनिरर्गलवेगनिर्य-
ज्ज्योत्स्नाऽम्बुपूरवितता इव बुद्बुदौघाः ॥ २३ ॥

चेतःप्रिये ! निरुपमं तुहिनांशुबिम्ब-
मास्येन निर्जितवतीं भवतीं विलोक्य ।
जातस्मयाः सुमनसां वनिताः प्रमोदात्
तारामयीं नु सुमनस्ततिमुत्किरन्ति ॥ २४ ॥

नाकाच्छरत्समुदयं समवेक्ष्य देवे
सम्प्रस्थिते सुमशरे जगतां जयाय ।
देवाऽङ्गनौघकरनीरजविप्रकीर्णा
आचारलाजततयः किमु भान्ति ताराः ? ॥२५॥

चन्द्रात् कलङ्कसहिताच्चरुशोभिमध्यात्
शीताऽचलात्समुदिता सितकान्तिपुञ्जा ।
ज्योत्स्नामयी सुरधुनी वहतीह तस्या
डिण्डीरखण्डसुषमां दधते च ताराः ॥ २६ ॥

ज्योत्स्नामयेन मधुरेण सुपायसेन
तृप्तैश्चकोरनिकरैररुचिं प्रपन्नैः ।
कीर्णा इव प्रविलसन्ति हि तत्पुलाका-
स्ताराभिषेण गगने तनुगात्रि ! पश्य ॥ २७ ॥

नेदं नभोवलय,मम्बुनिधिः सुनीलो,
नायं सुधांशु,रपि तूज्ज्वलभा हि शुक्तिः ।
नेमान्युडूनि, गलितानि हि मौक्तिकानी,-
त्येवं किला ऽद्य कवयः परिकल्पयन्ति ॥ २८ ॥

लोकान्तरं प्रति गते खलु वारिवाहे
तद्बन्धुभिः शिखिकुलैः प्रणयात् प्रदत्तम् ।
मध्योल्लसात्तिलचयं चरुपिण्डमेव
नाकं गतं मनुमहे हरिणाऽङ्कबिम्बम् ॥ २९ ॥

ज्योत्स्नाभरो न, विततो जलपूर एष,
चन्द्रो न भाति, विहरत्ययमत्र हंसः ।
तारा न भान्त्य,पि तु बालमृणालखण्डा-
स्तच्चर्विताऽधिकतरा विलसन्ति बाले ! ॥ ३० ॥

हंसेष्वसत्सु भुवि हीनपदा मयूराः
प्रापुः पुरा ऽऽदरभरं बहुशो रुवन्तः ।
चञ्चत्पदेषु किल तेषु समागतेषु
यान्त्येव ते दरभरं बहुशो रुदन्तः ॥ ३१ ॥

सन्तो ऽपि सद्गुणगणा विकसन्ति नैव
तत्साधको ह्यवसरो न समेति यावत् ।
यच्छारदे ऽत्र समये ऽननुभूतपूर्वां
हंसाः सुधारसमयीं गिरमुद्गिरन्ति ॥ ३२ ॥

अब्जाऽऽवली विकसतीह जलाऽऽशये चेद्
युक्तं दिवाकरकरोल्लसितेष्वहःसु ।
नाके विकस्वरमथाऽब्जमुदीक्ष्य कस्मा-
ज्जायेत विस्मयभरो न शरन्निशासु ? ॥ ३३ ॥

शस्यं पयोदसमयोत्थमतिप्रशस्यं
घासं च कोमलतरं नितरां चरित्वा ।
पुष्टा वृषाः शरदि गर्जनमाचरन्तो
दर्पोद्धुराः प्रविचरन्त्यलसाः समन्तात् ॥ ३४ ॥

क्षेत्रेषु भक्ष्यमतिभक्ष्य चिरं महोक्षा
भीतिं जनं निदधतो निजगर्जनाभिः ।
ज्ञातिप्रपीडनपरा विगताऽन्यचिन्ता
विप्रा इवाऽद्य विचरन्ति पराऽन्नपुष्टाः ॥ ३५ ॥
भूयः पयो ऽतिमधुरं परिपाययन्ती
नानाविधाऽन्नपरिपाचनभूरिदक्षा ।
प्रौढा शरत् सुखमसीममियं ददाना
मातेव सर्वजगतामधुना विभाति ॥ ३६ ॥
आरक्तचञ्चुशुकपङ्क्तिसमावृता द्यौ-
र्नीलाऽश्मसोदरतनुः परिशोभते ऽद्य ।
शोणाऽञ्चलं सुहरितं वसनं वसाना
मोदात् समागतवती शरदं सखीव ॥ ३७ ॥
आपाण्डुकाशकुसुमाऽऽवलिकेशपाशा
शैथिल्यलम्बितपयोधरहीनकान्तिः ।
भूयश्चलद्द्विजगणा धृतकाण्डदण्डा
वृद्धा शरत् किमपि कौतुकमातनोति" ॥ ३८ ॥
प्रेयोमुखाऽम्बुजगवीनवनीतपिण्ड-
मास्वाद्य नूतनमसीमरसं सुधाऽऽभम् ।
तृप्तिं परामुपगता ऽलसलोचनेयं
संवेशसौख्यमभजल्ललना तदङ्के ॥ ३९ ॥

इति काशिकराजकीयसंस्कृतप्रधानपाठशालाध्यापकतैलङ्गश्रीरामशास्त्रिविरचितः शरद्विलासः समाप्तः ।

तस्मिंस्तथा मगाढं बाढं निद्रापराधीने ।
परितो दृशं किरन्ती तरुणौ भूपाववपश्यद् सा ॥ १४५ ॥
निर्जितनिजरूपनृपद्वितयनिरीक्षाऽपराधान्नु ।
सपदि स्फारितचापः पञ्चशरस्तां क्षिणोति स्म ॥ १४६ ॥
विविधैश्चेष्टितजातैर्निजभावं व्यञ्जयन्ती सा ।
अवतरितुं तरुकोटेर्भूपालौ सूचयामास ॥ १४७ ॥
तच्चेष्टितावलोकाद् रक्षोहतकस्थितेश्च तौ भूपौ ।
विस्मयभयात्तचित्तावप्रतिपत्तेर्वशावास्ताम् ॥ १४८ ॥
आलोक्य निखिलचेष्टा एवं विफलाः सकष्टा सा ।
स्पष्टां शनैरथ गिरं भूमिपती तौ समाचष्ट ॥ १४९ ॥
"यदि नानुमन्यते भोः ! प्रथमः प्रणयो मदीयो ऽयम् ।
सपदि प्रबोध्य रक्षोहतकं सन्दर्शयामि युवाम् ॥ १५० ॥
दृष्ट्वा भयतरुपाशां भयरज्जुं तौ क्षणं मूढौ ।
तत्प्रार्थनानुसरणे चाऽन्ते प्रवणौ किलाऽभूताम् ॥ १५१ ॥
अवतीर्णवतोरुभयो रागान्धा सा शनैरङ्काद् ।
अवतार्य दनुजशीर्षं ताभ्यां सह कुञ्जमथ याता ॥ १५२ ॥
दानवभीतिवशाभ्यां ताभ्यां स्वैरं विहृत्या ऽथ ।
एवं स्वीयमुदन्तं सा ऽन्ते विज्ञापयामास ॥ १५३ ॥
"अस्ति प्रथितसमृद्धिव्यतिकरहासितामरावतीगर्वा ।
सर्वंसहाविभूषा नगरी विदिशेति विख्याता ॥ १५४ ॥
तदधिपतेः प्रियकन्या नाम्ना ऽहं कनककलिकेति ।
या ऽत्राद्य पेटकगता युवयोर्दृग्गोचरो दैवाद् ॥ १५५ ॥
कालेन किल मदीये पाणिग्रहणोत्सवे चलति ।
क्रन्दन्ती करुणतरमपाहृिये रक्षसैतेन ॥ १५६ ॥
आतद्दिनाद् किलैषा दुर्भगजनतासु मूर्धन्या ।

एतत्परतन्त्रतया सुदुःसहं जीवितं धत्ते ॥ १५७ ॥
स्फाटिकपेटकमध्ये निगडितवपुषं किलाऽयं माम् ।
अश्रान्तं मूर्ध्नि वहन् रक्षोहतको ऽनिशं भ्रमति ॥ १५८ ॥
मैनामन्यो ऽद्राक्षीदिति मत्यतेन हतकेन ।
एवं निपीड्यमाना कथमिव न स्यामहं क्रुद्धा ? ॥ १५९ ॥
साम्ना ऽपि या न साध्या वामाः सौन्दर्यकल्पलताः ।
कथमिव ता बन्धनतो वशतामुपयन्तु ? वदतं मे ! ॥ १६० ॥
अतिशयितः प्रतिबन्धः स्त्रीणां शीलं विचालयति ।
प्रतिबद्धो हि तडागो जलपूरौघैः सुसम्पातः ॥ १६१ ॥
स्वाभाविकतीक्ष्णधियां कपटपटूनां किल स्त्रीणाम् ।
किमसाध्यमस्ति लोके ? मूढजनो ऽर्थे ऽत्र सन्दिग्धे ॥ १६२ ॥
न विजानाति किलायं दुर्बोधतरं चरित्रं नः ।
यः पेटके निधानात् स्वस्थं स्वं मन्यते मूढः ॥ १६३ ॥
तत्तत्समयविशेषेष्वधिगत्य युवामिवानेकान् ।
कन्दर्पशरविमोक्षादात्मानं मोचयामि किल ॥ १६४ ॥
यूनो ऽष्टनवतिसङ्ख्याननयं कृतकृत्यतां सा ऽहम् ।
अद्य च शतसङ्ख्या मे युवयोः कृपया सुसम्पूर्णा" ॥ १६५ ॥
उक्त्वैनं निजचेलान्मालामथ सा ऽङ्गुलीयानाम् ।
रत्नमरीचिचयाढ्यां सन्दर्श्यैतावुवाच पुनः ॥ १६६ ॥
"एकैकमङ्गुलीयं तत्तत्प्रणयिभ्य आप्याऽहम् ।
मालामिमामगुम्फं साम्प्रतमुभयोरिहोनत्वम् ॥ १६७ ॥
आश्वासे च भवद्भ्यां स्वे स्वे दत्त्वोर्मिके मह्यम् ।
मत्का मनोरथा इव नूनमियं पूरिता भूयात्" ॥ १६८ ॥
श्रुत्वा तदीयवचनं विस्मयजलधावगाधे तौ ।
पोप्लूयमानहृदयौ तस्यै स्वे मुद्रिके ददतुः ॥ १६९ ॥

अथ सापुनरपि दानवशीर्षं शनकैर्निवेश्याऽङ्के ।
भूपालौ प्रतिगन्तुं नेत्राभ्यां सूचयामास ॥ १७० ॥
मृत्युमुखादिव मुक्तौ भूमिपती तावथ त्वरितम् ।
तस्मात्किल प्रदेशात् पवनजवेनाऽपयातः स्म ॥ १७१ ॥
अध्वश्रमपरिखिन्नौ विस्मयचकितौ च भूपालौ ।
प्रच्छायशीतलतलं न्यग्रोधतरुं क्रमप्यापत्तौ ॥ १७२ ॥
अन्योन्यमुखविलोकनमथ कुर्वन्तौ क्षणं भूपौ ।
मूकाविव मूढाविव तत्र निषण्णौ विषण्णौ च ॥ १७३ ॥
अथ चण्डबाहुरवदन्निजाग्रजं जातवैराग्यम् ।
पुनरपि राज्यप्रवणप्रवृत्तिजातं विधित्सुरमुम् ॥ १७४ ॥
"अपि दृष्टं स्त्रीचरितं साम्प्रतमार्येण सातिशयम् ? ।
अपि नास्ति दुर्भगत्वं रक्षोहतकस्य सोत्कर्षम् ? ॥ १७५ ॥
अभ्युपपन्नमिदं चेत्, तत् स्मर्तव्या प्रतिज्ञा सा ।
भूयो ऽपि राजधानी स्वीया सम्प्रसलङ्कार्या" ॥ १७६ ॥
आकर्ण्याऽनुजवचनं सपदि स्मृतपूर्ववृत्तान्तः ।
प्रतिगन्तुं निजनगरीमनुमनुते स्माऽथ चण्डांशुः ॥ १७७ ॥
तदनु च तौ धरणीशौ निश्चितकृत्यौ गताधियौ ।
क्रमशस्तदेव शिबिरं समाप्नुतां व्याकुलं शून्यम् ॥ १७८ ॥
ज्ञाततदागमवृत्ताः सर्वे राज्ञः सभास्तारा: ।
अहमहमिकया प्रापुस्तमीक्षितुं सङ्घशः प्रोत्काः ॥ १७९ ॥
"दिष्ट्या ऽद्य देवचरणौ पुनरपि नयनोत्सवं कुरुतः ।
फलितं चाऽद्याऽस्माकं निखिलेन कृतेन सुकृतेन" ॥ १८० ॥
इत्यादिवादिनस्तान् यथायथं गीर्भिरभिनन्द्य ।
नगरीं प्रति प्रयातुं सत्वरमाज्ञापयद्भूपः ॥ १८१ ॥
प्राप्याचिराच्च सौधं समेधितक्रोधसंवेगः ।

तत्क्षणमसिलतया ऽसौ महिषीं व्यापादयन्नृपः ॥ १८२ ॥
नैतावता ऽप्युदीर्णः क्रोधः शममाप भूपस्य ।
शुद्धान्त एव सर्वस्तस्याहुतिभावमापेदे ॥ १८३ ॥
'नास्तीह जगति का चिद् पतिव्रते' त्याहितभ्रान्तिः ।
क्रोधान्धमतिरसावथ सन्धामेतां बताकार्षीद् ! ॥ १८४ ॥
"अद्य प्रभृति नवीनां परिणेष्ये प्रत्यहं योषाम् ।
हत्वा च तां प्रभाते परिणयमन्यं विधास्यामि" ॥ १८५ ॥
अत्रान्तरे स्वनगरीमनुजं प्रस्थातुमात्तधियम् ।
प्रास्थापयत्समधिकैर्विभवैः संवर्ध्य चण्डांशुः ॥ १८६ ॥
याते च चण्डबाहौ चण्डांशुस्तद्दिनात् स्वीयाम् ।
सन्धामशक्यबाधां फलेग्रहिं कर्तुमारेभे ॥ १८७ ॥
अविलङ्घ्यशासनभयान्नृपतेर्लोकाः कथञ्चिदपि ।
जानन्तो ऽप्यदसीयां भाविदशामार्पयंस्तनयाः ॥ १८८ ॥
एकैकशः प्रतिदिनं पौरजनानां प्रियाः कन्याः ।
अन्तकसदनाऽतिथितामनयच्चण्डांशुरपकरुणः ॥ १८९ ॥
नाशितनिजात्मजानां करुणो यो ऽभूद्विलापरवः ।
किं बहुना! स हि नूनं प्रस्तरमपि रोदयेदचिरात् ! ॥ १९० ॥
जीवत्तनयास्तु जना आधिव्यथितान्तरात्मानः ।
क्षीणबला हन्त तदा मृतदेशीयाः किला ऽभूवन् ! ॥ १९१ ॥
शोकाम्बुधिमग्नजना शून्यालोका निरानन्दा ।
नृपनगरी लोकानां पितृसदनाभा विभाति स्म ॥ १९२ ॥
एवमवन्ध्यं दिवसं कन्यावधपातकेनैषः ।
कुर्वन्, कतिपयमासान् भूमिपतिर्यापयामास ॥ १९३ ॥
वृद्धा अपि तदमात्यास्तं प्रतिषेद्धुं क्षमा नाऽऽसन् ।
स्वप्राणहापनभयाद्, सिंहमुखे को ऽङ्गुलिं विशतु ? ॥ १९४ ॥

अतः परमेवमेव पुरः पुरः प्रयातैः पुरकुरङ्गनयनापाङ्गपातैः सार्द्धमभिश्रूयमाणजयध्वानमध्वानमतिक्रमतः क्रमतस्तस्य चरणाचर्यागोचरीवभूव वनभुवस्त्रिभुवनशोभनः कश्चन प्रदेशः । तत्र च परिचरत्खड्गिराजि हरिणकुलकृतरुचि कुञ्जरोचितभामि शर्खरीकृतार्यमणि फलपूरकभृति रोचमानपुन्नागधृति शिलीमुखयुतकरवीरमण्डलातिभामि पृथुलताक्रान्तनानाध्वनि मत्ताद्विपपटलनिसृष्टदानवारि लक्ष्यमाणजगतीसमाक्रान्तिकृति विपिने तुलनां दधार तदीयसैन्यमण्डलम् ।

तदनु चाऽत्यार्यवीर्यमदप्रमदमेदुरोद्दामनिनदमुखरीकृतकन्दरापरम्परा नानायुधभारभासुराश्चमूचराः क्षणेन सङ्कुलीचक्रुस्तामटवीतटवीथीम् । सारमेयगलखणखणायमानकिङ्किणीकलक्वणितैर्मोहमन्त्रैरिव विमोह्य कुरङ्गकुलानि सुखं बबन्धुर्वागुरावाहिनः । नवघनस्तनितगम्भीरापूर्वदुन्दुभिध्वानश्रवणमहुङ्कारांगारिदरीनिर्गतान्हारिणाधिपान्द्विधाचक्रुर्निशितनिस्त्रिंशैर्नैस्त्रिंशिकाः । पुरकुञ्जरमदसौरभसमीरसमेधितसंरम्भव्याकुलान् गन्धगजान् वशीचक्रुरङ्कुशैर्निषादिनः । अनवरतलोलमानपांशुध्वजपट्टिकाप्रान्ताभिघातैः पादपात्पादपान्तरं विद्रावयामासुः शाखामृगान् वैजयन्तिकाः । स्वैरसञ्चारप्रतिरोधसंरब्धद्वन्द्वयुद्धसन्नद्धान् भल्लूकतल्लजान् पातयामासुः कुलिशकर्कशचपेटाप्रहारैर्मल्लयोधाः ।

युवराजोऽपि प्रभञ्जनजवमदप्रभञ्जनचतुरतुरगपृष्ठाधिष्ठितः प्रचण्डभुजदण्डभ्रमत्कोदण्डानर्गलच्छरविसरसमाक्रान्तदिक्चक्रवालश्चपलाविलासविजयिविभ्रमः क्षणेन शतशो हिंस्रजन्तून् परेतनाथातिथीचकार ।

मरुद्भ्रमिविडम्बनापटुतरः किमश्वः पुरः ?
किमन्तकविजृम्भितं निशितबाणचक्रं किमु ? ॥

धनुर्द्धरधुरन्धरः किमुत शौर्यलक्ष्मीरिति ?
क्षणं बहु वितर्कितं विपिनदेवताभिस्तदा ॥ ५२ ॥

तस्मिँश्च विस्मयस्तिमितखेचरस्तोमे समये क्षत्रकुलत्रासमोत्पतच्चित्रकायनिकायैश्चित्राङ्कितमिव, अलघुलौहमुद्गराभिघातविशकलितोच्चलितसैरिभविषाणमण्डलैरर्द्धचन्द्रशतसङ्कुलमिव, अतिमात्रवेगविसर्पिहरिणकुलरुधिरारुणमार्गणगणैर्माणिपञ्जरावरुद्धमिव, अतुच्छसंरम्भसमुच्छलदुच्छिन्नपञ्चास्यपुच्छगुच्छच्छटाभिर्विपिनान्तरमिव, अमन्दमदसन्दोहतुन्दिलोद्दामाभिपतत्प्रोत्तुङ्गमातङ्गसङ्घातैर्जङ्गमाद्रिसमाक्रान्तमिव, अखर्वगर्वविसर्पत्प्रौढक्रोडयूथोत्पाटितधरणीरेणुभिस्तमस्तोमवृतमिव क्षणमलक्ष्यताऽन्तरिक्षम् ।

किमन्यत् ?

मोदघूर्णद्धोणिसङ्घगतिघघनभवद्घर्घरोद्घोषघोरः
स्फूर्जद्दुर्जेयसिंहव्रजजयिमनुजोद्गर्जितप्रार्जितौजाः ॥
विस्पष्टभ्राजदत्युत्कटकरटिघटादन्तमङ्घट्टचण्डो
जग्रासे क्ष्मां समग्रां गहनकलकलः कोऽप्युदग्रस्तदानीम् ॥ ५३ ॥

स च नृसिंहः सिंहव्यूहं, भूदारो भूदारनिकरं, महिषीसम्भवो महिषमण्डलं, चित्रकायश्चित्रकायसमुदायं, खड्गी खड्गिवर्गं, परशल्यः शल्यकुलम्, अनेकपोऽनेकपयूथं, हारिणीं तनुं बिभ्रद्धरिणगणं, निःशेषयन्नसाधारणीं किल निजस्थितिं चक्रे ।

ततश्च केचन निशितशरप्रहारजर्जरीकृतमत्तमातङ्गकुम्भस्थलगलितमुक्ताफला यशःकल्पपादपबीजावापप्रवृत्ता इव, केचन समुत्पाटितदन्तिदन्तदण्डकृतवैकक्ष्यका लब्धप्रशस्तिपट्टिकाबन्धा इव, केचन मृगनाभिवासनावासितांशुका वनभूविभ्रमलसत्परिमला इव, केचन प्रांशुभल्लाग्रोन्नमितकाशिकृतय-

स्ताण्डवान्वसरशूलोत्क्षिप्तगजेन्द्रचर्मगिरिशविडम्बका इव, के चन परिहितचित्रमृगचर्मवसना मृगयाक्रतुक्रियादीक्षिता इव, के चन वनमहिषरुधिरकर्दमलिप्तवपुषः शौर्यश्रीरागाङ्किता इव, के चन स्थूणावलम्बितपरेतशार्दूलदेहवित्रासितजम्बुका वञ्चकसमुचिताचारचतुरा इव, के चन भुजभ्रमितसमिद्धनयनकोणशोणच्छविच्छन्नायसयष्टयो गृहीतहिंस्रसत्त्वविध्वंसधूमकेतुज्वालामाला इव, के चन खड्गयुतकरप्रान्तश्रुतश्रमोदबिन्दुधारा निहतनिवापाञ्जलिदानतत्परा इव, के चन निकृत्तचमरीमृगपिच्छभूषितशिरसः प्राप्ताखेटमहोत्सवसमाप्तिस्वच्छसलिलधाराभिषेका इव बभुर्विचित्रालोका वीरलोकाः ।

अथ बहुमृगयाप्रयासखिन्नः शिविरनिवेशितसैनिको ऽध्युवास ॥
मधुमधुरवनान्तदत्तचक्षुः सचिवसखः स रसालशालमूलम् ॥ ५४ ॥

प्रत्युद्गतिं पवनवेल्लितवल्लरीभि-
स्सत्प्रश्नमुन्मदपिकावलिवल्गुजल्पैः ॥
अर्घ्यं परिस्रवदमन्दमरन्दपूर-
स्तस्याऽकरोद्विकासितः सहकारराजः ॥ ५५ ॥

तस्य चेतस्ततश्चेतस्ततः पश्यतः सञ्जहार काऽपि पुन्नागरागतरलीकृतदृष्टिरलकान्तस्थितिमहनीया विलसत्प्रवालमधुरिमधराधरसुभगमुखा गन्धसारपत्रवल्लीमञ्जुलकुचविस्तारतारशोभा नयनयुगानन्दिमध्यभागा विभ्रममुखरितनितम्बपरिणाहस्पृहणीया मत्तमातङ्गगतिरमणीया लक्ष्यमाणमदनोद्रेका विहारमनोहरा श्यामतां दधाना ऽवनीयौवनश्रीरिव वनश्रीः ।

"अयि वयस्याः ! पश्यत वनस्य प्रशस्यतमामवस्थाम्—
इतः शुककुलावलीहरिततोरणैर्मण्डिते
विशालवनमण्डपे मनसिजो जयश्रीयुतः ॥

सगीतिपिककामिनीविधुतपुष्पचूर्णावृतः
परिक्रमति पल्लवाञ्चितरसालशालानलम् ॥ ५६ ॥
इतः कमलकर्णिकाकनकपीठिकाधिष्ठितः
परिस्फुरितकेसरप्रकरपीतवासोवृतः ॥
करोति मधुपः पठन् मधुरमन्त्रमाचार्यकं
मधौ सुहृदि मङ्गले परिणयोत्सवो जृम्भते" ॥ ५७ ॥

इत्येवंविधप्राञ्जलसुरभिसमयप्रशस्तिसूक्तिभिः सुहृन्मनांसि विस्मयस्तिमितीकुर्वाणमुर्वीचक्रचक्रवर्तितनयं तं सांवनयमुपेत्य परिजनवचःकृतपरिचया काऽपि तापत्रयीनिरोधायेव त्रिगुणीकृतजटाजूटबन्धा भस्माङ्गरागव्याजेन व्यञ्जितान्तःशुद्धसत्त्वोद्रेका चेतःप्रवेशाप्राप्तिबहिर्भ्रमद्रजःप्रभाक्रान्तेनेव काषायवाससा कनकचम्पकलतायितमूर्तिरविरतसञ्चारसमासादितसंसारसारकरण्डकमिव कर्पटसमुद्गकं दक्षिणे कक्षे चिद्रसपूर्णमिव कमण्डलुं वामेन बुद्धिवैभवविशोधिततत्त्वसन्ततिमिव स्वच्छस्फटिकाक्षमालामपरेण करेण बिभ्रती, देवहूतिरिव कपिलबालप्रकाशितात्मसम्पत्तिरनसूयेव सदाविनयनोद्बोधनिपुणा गार्गीव विदितलोकावस्थितिररुन्धतीव नानालघुकुलनृपसमुत्कर्षदर्शनलालसाऽनवरततपश्चर्याकृशावयवोज्ज्वलाकृतिविशेषविश्वसनीयमहामहिमसमृद्धिस्तापसी शरीरान्तरुद्गतविमलनिजहृत्कमलप्रभायिताभिः पुरस्फुरद्दशनदीधितिभी राजतसहस्रपत्रमुकुलान्युपायनीकुर्वती—

"सततविजितपुण्डरीकपालीनिदलितकल्मषमण्डलीनिकामम् ।
सुभग! भगवतः स्मितानि पादौ दृगपि निरर्गलमङ्गलाय गाताम् ५८॥
नैकविधागमशाखाश्रयिभिर्बहुभिर्द्विजै रुचिरे ॥
अध्वरहिते ऽत्र देशे श्रीकान्त ! चिरं चरञ्जयसि" ॥ ५९ ॥

# दीपोत्सवः ।



जयति जगतीभर्तुर्वक्षःस्थलोत्तमनर्तकी
नवकमलिनीबन्धुच्छाया सरोजवनासना ॥
यदमलपदस्कन्नालक्तद्रवाङ्कितराजता-
सनमतिकृतः सौधा एते ज्वलन्मणिदीपिकाः ॥ १ ॥
प्रमदनिवहप्राप्तानेकस्ववन्धुसुवासिनी-
करतलमिलन्नानामिष्टान्नसौरभमेदुरः ॥
अविरतभवद्गीतध्वानच्छटामुखरीकृतो
जगति परितो धीरा! दीपोत्सवो ऽद्य विजृम्भते ॥ २ ॥
दधति परितो रम्भास्तम्भाः सदम्भभटाकृतिं
विसृमरसुधाश्वेताः शालाः समृद्धयशोदशाम् ॥
सकलसुजनाश्चाऽद्य स्वैरं दुरोदरसम्भ्रमं,
लसति सुधियः ! का ऽसौ राज्यस्थितिर्वलिभूपतेः ॥ ३ ॥
वहलविसरद्धूपामोदप्रमोदभरावहा
कमलनिलयापूजाघण्टानिनादविनोदिका ॥
विपणिरभितो ऽगण्यैः पण्यैरसौ गहनान्तरा
जनकलरवारम्भव्याजाद् हसत्यमरावतीम् ॥ ४ ॥
मलयजनितक्षोदैर्वक्षोजयोर्द्रुतयावकै-
र्मृदुचरणयोः शोभावत्यो दृशोर्घनकज्जलैः ॥
युवतय इमाः सम्भाव्यन्ते मनोरथमूर्तय-
स्त्रिगुणसचिवं चित्रं सर्वं जगत्सृजतो विधेः ॥ ५ ॥
वहुपरिलसत्तारा कादम्बिनी किमु शारदी ?
हिमगिरितटी किं वाऽऽकीर्णा विकस्वरचम्पकैः ? ॥

उत परिवृता हेमाङ्गीभिः स्फुटस्फटिकाक्षितं- ?
 क्षितिं किममी सौधश्रेणी प्रदीपशतावृता ? ॥ ६ ॥
गिरिशवपुषि स्रस्ता विष्वग् जटाकचमालिका
 धनदसरसीमध्ये स्वर्णारविन्दपरम्पराः ॥
त्रिदशनटिनीतीरे चक्राद्रिजावलयो यथा
 द्युति सुषमां सौधे दीप्तप्रदीपशिखालयः ॥ ७ ॥
कुसुमरचिताः शय्या एता, न सौधासिता गृहाः
 कनकमरुचः कान्ताश्चेमा, न दीपकपङ्क्तयः ॥
इयमपि घनापाङ्गक्रीडा, न धूमतमस्ततिः
 किमिह कुरुषे भ्रातश्चेतःपतङ्गक ! विभ्रमम् ॥ ८ ॥ १
ध्वजपटरदच्छायाचञ्चच्चतुर्दिशमुल्लस-
 त्किसलयमणिस्तोमं सौधद्विपेन्द्रमधिष्ठितः ॥
भुवमुपगतां लक्ष्मीं पश्यत्यसौ किल दीपका-
 वलिवृतशिरःसद्मव्याजः सहस्रविलोचनः ॥ ९ ॥
अयि मनयसः ! प्रोन्मील्येतां श्रमादपि चक्षुषी
 सुखयितुमसौ नानाक्रीडापरं पुरुषोत्तमम् ॥
मणिगणविभाभारस्फूर्जत्फणीश्वरमञ्चिका
 प्रसृमररुचिः काचिल्लक्ष्मीरुपैति सकौतुकम् ॥ १० ॥
निखिलवरदां देवीं लक्ष्मीं प्रसादयितुं मुदा
 पुरवसतयः सर्वे पूजोत्सवाय्रमरे ऽधुना ॥
ददति मिषतो दीपस्फूर्जत्सुधासितसद्मनां
 कुमुदसचिवच्छायां शाटीं सुवर्णपरिष्कृताम् ॥ ११ ॥

(१) मणिदीपकैस्तोरणपल्लवैर्वाऽऽवृतस्य सौधस्य निगरण मनुसन्धेयमत्र ।

त्रिदिवपतिभिर्भूमीलीलावलोकनलालसै-
र्नभसि विधृताः सूक्ष्मा दूरत्वदोषदशावशात् ॥
मणिगणमयाः सँल्लक्ष्यन्ते विमानगृहा इव
स्फुरितरुचयश्चित्रा व्योमप्रदीपकरण्डकाः ॥ १२ ॥
चतुरनवरा दीक्षावन्तस्त एव च ऋत्विजः,
स्फुटमनुगता लक्ष्म्या वेदी, श्रुतेः सुखदो ध्वनिः, ॥
निरुपमसुखं लभ्यं, सर्वस्वमुत्तमदक्षिणा,
स्फुरति तदिदं सत्रं द्यूताभिधं भुवि सम्प्रति ॥ १३ ॥
धनिकमदनद्यूते पाशान् स्फुरन्मणिकुट्टिम-
प्रतिफलवशाद्दृष्ट्वा नानाकृतीन् प्रतिभूजनैः ॥
सपदि विहिते तारं कोलाहले सभिकाः क्षणा-
न्निजकरमृदुस्पर्शैर्निश्चाययन्ति ससान्त्वनम् ॥ १४ ॥
सुरपतिसमान् कन्थाशेषान् क्षणेन च दुर्गता-
नमितविभवभ्राजः कुर्वद् दुरोदरमद्य नः ॥
अघटघटनाकृत्यक्रीडापटुत्ववतो विधेः
समुपदिशति स्वैराचारप्रचारणचातुरीम् ॥ १५ ॥
इदमभिनवोदञ्चद्दीपावलीचरितं समु-
ज्ज्वलयतु विदां चेतोभित्तीः सुधाद्रवचर्चिताः ॥
इति वरयति श्रीमन्नेपालपालकृपालता-
मधुमधुकराकारः श्रीसोमनाथमहीसुरः ॥

इति नेपालदेशीयसिग्द्यालोपनाम-
श्रीसोमनाथपण्डितविरचितो
दीपोत्सवः समाप्तः ।

—:o:—

# वैदेशिकानां समस्यापूर्तयः।

लश्करमहाराजाश्रितवेदभाष्यश्रीकृष्णशास्त्रिणाम्।

दृष्ट्वा पश्यति सन्निधिं न च मुहुर्यान्तं निषेधत्यहो
श्लिष्टापि प्रतिकूलतां न भजते कामं मया ऽसौ सखी।
अस्तित्वं समवैति दूति ! हि यथा नास्तीति या शेमुषी
स्मेरेन्दीवरलोचना हि वशतां नायाति का यातना ? ॥ १ ॥

जयपुरान्तर्गतपण्डितपुरीवासिश्रीगिरिजाप्रसादद्विवेदिनाम्।

देशीयस्थितिसाधनव्यतिकरे वङ्गीयसत्सूरिभिः
प्रत्याशं निहतांस्तथा ऽपि वितथाटोपप्रथासूचकान्।
विद्योद्योतवितानशितमिळद्दृप्यद्दृढद्वेषिणो
वङ्गच्छेदकथाकरान् प्रतिपथं नाऽऽयाति का यातना ? ॥ २ ॥

जयपुरस्थश्रीगोपीनाथशास्त्रिणाम्।

भूत्वा दाशरथिः स्वयं पुनरगाद्गाढं वनान्तं तत-
श्छित्त्वा रावणराक्षसादिनिवहान् गत्वा ततः स्वां पुरीम्।
त्यक्त्वा गर्भवतीं प्रियां च जनताजल्पाद्व्यथामन्वभुद्
मर्त्ये ऽस्मिन् वत सम्भवाद् सुमनसां नायाति का यातना ? ॥३॥

नेपालस्थचालिसे इत्युपनामकश्रीचक्रपाणिशर्मणाम्।

तप्तं नैव तपः, कृतन्न सुकृतं, नो देवताः सेविता,
विप्राणां प्रणयाद्धितं न विहितं, पीतं न गीताऽमृतम्।
विद्या ऽवेदि न वा कृतं न च कदा ऽजर्यं सतां सङ्गतं
यैस्तान्मर्त्यपशूनसून्विजहतो नाऽऽयाति का यातना ? ॥ ४ ॥

---

१ अनुरक्तनायिकावर्णनं, कस्य चिन्नायकस्य दूतीं प्रत्युक्तिः।

२ यातः नकारो यस्याः सा। अयं भावः वेदान्ते नास्ति नास्तीति या बुद्धिः यातना सती निषेधति का यातः नकारो निषेधो यस्या एवं शीला सती वशतां स्वाधीनतां नायाति अपि तु आयात्येवेत्यर्थः।

बडोदाप्रान्तस्थहरिनगरग्रामवास्तव्यश्रीचन्द्रशेखरशर्मणाम् ।

ध्वान्तच्छन्नविलोकनातिविषमारण्यान्तरुज्जृम्भित-
प्रेतेशस्वसृसंप्लवे स्म कियतीं नो वेद या वेदनाम् ।
तामश्वच्छविचन्द्रचन्दनमरुन्मन्दाधिनन्दानने
ऽनायाते मधुसूदने मधुदिने नाऽऽयाति का यातना ? ॥ ५ ॥

जयपुरसंस्कृतपाठशालाज्यौतिषाध्यापकश्रीदुर्गाप्रसादद्विवेदिनाम् ।

साटोपोद्यतपाणिपल्लवमिलद्गाग्जालकारातिथीन्
धर्माधर्मविमोहितान् विदधतः प्रसन्तदेशेष्वपि ।
प्राज्ञंमन्यतया श्रुतिस्मृतिकथाः स्वेच्छापथालम्बिनीः
कुर्वाणान् कलिकर्मठान् विधिवशान्नायाति का यातना ? ॥६॥

जयपुरराजगुरुभट्टपर्वणीकरोपाह्वश्रीनारायणशास्त्रिणाम् ।

ईशं तोषितवांस्तपोभिरलघुं राज्यश्रियं लब्धवान्,
किञ्चासादितवान् सुतं द्युपजितं, व्याख्यातवानागमान् ।
लङ्केशः सुतसूनुतत्सुतसुहृन्मन्त्रिक्षयं दृष्टवान्,
पापैराचरितैर्नृणामहरहो नाऽऽयाति का यातना ? ॥ ७ ॥

भावनगरपाठशालाध्यक्षश्रीछगनलालत्रिभुवनदवेशर्मणाम् ।

लग्नं नास्ति मनः पदाम्बुजयुगे मोक्षप्रदे श्रीपते-
रासक्तिः परमा च यस्य नितरां हा ! पण्यनारीजने ।
नो लब्धं हृदये पदं क्षणमहो यस्यास्ति सद्विद्यया
भूभारं हि (तं) वृथानृविग्रहधरं नाऽऽयाति का यातना ? ॥ ८ ॥

नेपालस्थजोसीत्युपाह्वश्रीरामचन्द्रडोट्यालयानाम् ।

रेतोरक्तयुतप्रसूदरदरीवासे परच्छन्दसा
पाल्ये बाल्यवयस्यनङ्गगहने दुर्यौवने जाग्रति ।

वार्द्धक्ये विकलेन्द्रिये ऽपि निरये क्लेशालये हन्त कं
त्यक्तश्रीशपदारविन्दशरणं नायाति का यातना ? ॥ ९ ॥

कच्छभुज रा. पा. अध्यापकश्रीलक्ष्मीशङ्करभट्टानाम् ।

यैर्नाकारि भवाटवी१भ्रमहरैः पौरञ्जनेहाश्रितै-
रैशं भ्रान्तिनिवर्तकं पुनरिहाऽनावर्तकं राधनम् ।
कार्ये ऽभारि च वैधकर्मनिचयं हित्वा निषिद्धे रति-
स्तेषां पङ्किलचेतसामहहहा नाऽऽयाति का यातना ? ॥ १० ॥

नेपालस्थपौड्यालोपनामकश्रीलेखनाथशर्मणाम् ।

येषामुग्रविषायते हि विषयो भोगो ऽपि रोगायते
सर्वो ऽयं निधनायते धनमहो योगः पुरोगायते(?) ।
साराऽसारविचारता हृदि मुहुर्मुक्ताऽच्छहारायते
ताँस्त्रैलोक्यनतानतान्तहृदयानायाति का यातना ? ॥ ११ ॥

लष्कर राजपौराणिकभट्टश्रीश्रीनिवासशास्त्रिणाम् ।

भ्रंशो राजपदाद्,वनेषु वसतिर्नानाभयासम्पदा,
मृत्युस्तस्य जटायुषः क्षणमभूद्विस्मारको यः पितुः ।
मैथिल्या हरणं, सहोद्धतबलैर्द्वेषश्च रात्रिञ्चरै,-
र्दैवं हन्त ! पराङ्मुखं भवति चेन्नाऽऽयाति का यातना ? ॥१२॥

## अथ काशिकानाम् ।

मार्तण्डोपाह्वश्रीअनन्तरामशास्त्रिणाम् ।

हे मल्लप्रतिमल्ल ! देव ! करुणाकल्लोलिनीवल्लभं
त्वां हित्वा निजभक्तदुःखदलनासक्तं मुदा ये मदा्व ।

१ भ्रमणमयथार्थज्ञानं च । २ भवाटव्याम् ।
३ धनसम्बन्धी क उत्सवः आयातीत्यत्र वर्तमानसामीप्ये भविष्यति लट् । ४ मल्लाख्यदानवाऽरे ! ।

सेवन्ते नवकञ्जमञ्जुलदृशो योषाः परेषां भृशं
ताञ्जन्तूंस्त्रिपुरान्तकाऽन्तसमये नाऽऽयाति का यातना? ॥ १३ ॥

श्रीकाशिराजाश्रितश्रीजीवनशर्मणाम् ।

चन्द्रश्चक्षुषि शर्कराकणभना,त्वच्यग्निजा चन्दनं,
गीतं भर्त्सनजा श्रुतौ, नसि सुमं म्लेच्छामपाक्रोत्थिता ।
जिह्वायां मधुपानमन्नमखिलं क्ष्वेडोद्भवा शूलजा,
काये मन्मथसायको, विरहिणां नाऽऽयाति का यातना ? ॥१४॥

नेपालाभिजनमरासान्युपाध्यश्रीदधिरामशर्मणाम् ।

निःशङ्कं गलहस्तितं श्रुतिवचो नाराधिता देवताः
सेवा नो विहिता गुरोर्न पितरौ वित्तेन सन्तोषितौ ।
दुष्पूरोदरपूरणाय च कृताः क्लेशा न धर्मार्जने
पापिष्ठे यमधाम्नि मय्युपगते नाऽऽयाति का यातना ? ॥ १५ ॥

नेपालाभिजनश्रीदेवीदत्तपराजुलीनाम् ।

बाल्यं बालविलासतस्तरुणतां वाराङ्गनासङ्गमाद्
वृद्धत्वं व्ययितस्वकीयविभवानल्पानुतापान्नयन् ।
मर्त्य! प्राप्य सुदुर्लभां मनुजतां नाऽसेवथा देवताः
पश्याद्यैव परेतराजनगरे नायाति का यातना ? ॥ १६ ॥

का. स. पा. अ. तैलङ्गश्रीरामशास्त्रिणाम् ।

यानायातभयामयातिविततेमायामये ऽस्मिन् भवे
वैयाससात्तु तया तया ऽऽत्मकुनया ऽनीत्या नियसा वशात् ।
काराऽऽकारकमेत्य साऽऽसयममुं कायं कुपूयं पुनः
कामात् कापथयायिनं कुपुरुषं नाऽऽयाति का यातना ? ॥१७॥

१ सम्बोधनम् ।

साहित्याचार्यमानवल्लिश्रीलक्ष्मणशास्त्रिणाम् ।

तातेनेश्वरवैरिणा, ऽधिकरुषा तन्नामसङ्कीर्तनात्,
प्रल्हादस्य नियोजितस्य रभसाद्धालाहलास्वादने ।
ग्रावाग्राद्विनिपातितस्य च बलादासीन्न का चित् क्षतिः,
श्रीमच्छ्रीशपदारविन्दशरणानायाति का यातना ? ॥ १८ ॥

नेपालाभिजनभण्डार्युपाह्वश्रीविष्णुप्रसादशर्मणाम् ।

उत्सङ्गे शिशुपाललाघनमथाऽपूर्वाकृतिर्भारवे-
रुद्यान्ती रदनच्छदे ऽधिरमनं रम्यानुवादौचिती ।
वक्रेन्दौ तत्र कौमुदी लसति सा कण्ठे च मुक्तावली
कान्ते! मध्यपरीक्षणे तु विबुधैर्नाऽयाति का यातना ? ॥ १९ ॥

नेपालाभिजनस्निग्धालोपाह्वश्रीसोमनाथशर्मणाम् ।

हंहो चित्त सखे! सखेदमधुना निर्वापिता मञ्जुवाक्,
गोष्ठी नैव समादृता, न गणिताः सच्चन्द्रिकाद्यास्त्वया ।
सद्रत्नाकर एष चा ऽप्यवमतः, किन्ते तथाप्यञ्जसा
कान्ता सूक्तिसुधा तु विस्मृतिपथं ना ऽऽयाति, का यातना? ॥ २० ॥

१ माघकाव्यस्य अर्भकपालनस्य च चातुर्यम् ।

२ पक्षे व्यक्तम् । पक्षान्तरे उदयकालिकी अपूर्वरूपा अरुणेति यावत् । सूर्यस्य छविः ।

३ ईदृशसर्वसामग्रीसत्वे पण्डितैर्मध्यमपरीक्षा कर्तुं पार्यते ऽन्यस्य, तव तु मध्यपरीक्षणे मध्यदर्शने नाऽयाति नापारि । यतीप्रयत्न इत्यस्माद्भावे लुङ् । अतिसौक्ष्म्यान्मध्यस्यालौकिकशोभावत्वं गम्यते ।

४ विरक्तिं विवर्द्धयिषतः कस्य चिन्निर्वेदोक्तिः ।

## काश्यां शिल्पप्रदर्शनी ।

गतविजयादशमीतः प्रतिरविवारमादिविश्वनाथमन्दिरसमीपे नूतननाट्यशालायामभिनवाभिनवव्यवहारोपयोगिवस्तुजातस्य छ्रसङ्कटः प्रचलति यत्र च विदेशीयशिल्पापेक्षया निजोत्कर्षं विवर्द्धयिषवो ऽनल्पाः शिल्पिन उत्तरोत्तरं सपरिश्रमं सोत्साहं नवतवं नैकविधं स्वस्वकरकौशलं जनलोचनानां गोचरीकृत्यापूर्वभागधेयोदयमात्मनो मन्वानाः परं लाभं समुपार्जयन्ति। लोकाश्च निजदेशानुरागतः सबहुमानमहमहमिकया विदेशीयवस्तुतो न्यूनमूल्यलभ्यानि चिरस्थायीनि पवित्रतराणि च परिधानीयोत्तरीयप्रभृतिवस्तुजातानि क्रीणन्ति समुपयोजयन्ति च व्यवहारेषु सादरं । को नाम च सनातनधर्मावलम्बी भारतस्नेही सचेतास्तत्र गत्वा किमपि वस्तुजातमगृहीत्वैव रिक्तौ हस्तावधिरथ्यं समान्दोलयन् सदनं प्रति परावर्त्तेत । अपि च दिसेम्बरमासे भविष्यन्त्याः काङ्ग्रेसनाम्न्याः सभायाः कृते विस्तीर्णे राजघट्ट(राजघाट)परिसरे सविस्तारं सभाभवनं निर्मीयते ।

## सनातनधर्ममहासभा ।

एतन्नाम्नी सभा प्रयागे आगामिमाघकृष्णे ११ शुक्ल ५ पर्यन्तं भविष्यति। अस्यां च सनातनधर्मसम्बन्धी विचारः सम्यक्तया प्रस्तोष्यते ये च सनातनधर्मपथपथिका महानुभावाः पर्वणि तत्र स्नातुं समागमिष्यन्ति तैरेषावश्यमेव द्रष्टव्या सनातनधर्मविषये निजनिजाभिप्रायं प्रकटीकृत्य मानसिकदुराग्रहपङ्कोत्थितं शारीरं च पङ्कं प्रक्षालयितुं सुमहानवसरो यं सद्धर्ममर्मजिज्ञासूनां भारतीयानाम् ।

## विचित्रं कन्यायुग्मम् ।

सम्प्रति पुण्यपत्तने ऽत्यद्भुते कन्यके दृश्येते तयोर्हि करचरणाद्यो ऽवयवास्तु पृथक् २ लक्ष्यन्ते परं पृष्ठदेशो द्वयोरेक एव। ते वागमिष्यतो युवराजस्य नयनगोचरीकर्तुं मोहमय्यां नेष्यत इति श्रूयते ।

Registered. No. A. 270.

# स्वदेशीयवस्त्वनुरागः ।

न खलु न विदितं केषामपि जनानां, प्रथमत एव दाक्षिणात्याना स्वदेशभागद्वयीभावोद्बुद्धविवेकदृष्टीनां वङ्गदेशीयानामन्येषामपि बहुदेशीयानां प्रायः समस्तानामेव भारतवर्षीयाणां स्वदेशीयवस्तुव्यवहार एवेहामुत्र च श्रेयस्करोऽस्माकं, सर्वथा परिहर्तव्य एव विदेशीयवस्तुसंसर्ग इति तारतारः कोलाहलः प्रसरतीति । एतदर्थमेव सम्प्रति मोहमयीमद्रराजकलिकातादेहलीमथुराविभागेष्वन्येष्वपि प्रदेशेषु प्रतिनगरं प्रतिग्रामं प्रतिगृहं पारेदशसहस्रैः पारेपञ्चसहस्रैः सहस्रैर्वा यथासम्भवं सङ्घीभूतैः स्वदेशानुरागिभिर्बहुशः सभाः क्रियन्ते प्रोद्घुष्यन्ते चाऽऽपामरचेतः कर्षणक्षमवचोभिरेकस्वरेण "गहनोऽस्माकमनादिसिद्धः सनातनधर्मः शरीरव्ययेनाऽपि सर्वथा रक्षणीयः ततश्चाऽस्माभिरितः परं विदेशीयवस्तूनि परिहर्तव्यानि नाऽन्यथा समुदेति भगवान् धर्मः, रचयन्तु चाऽस्मद्देशीयाः शिल्पिन उत्तमोत्तमानि व्यवहारवस्तूनि, अनुसृताश्च समेत्य वयमधिकाधिकस्वीयशिल्पविद्योत्कर्ष" इति, स्थापयितुमिष्यन्ते च बहुशः स्वदेशीयशिल्पिनः प्रोत्साह्य नानोत्तमवस्तुसम्पत्तये द्विलक्षाधिकैरपि द्रव्यैः कोशाः, प्रतिदिनमुत्तमोत्तमानि वस्तून्यपि कल्पयन्ति शतशः शिल्पिनः क्रीणन्ति च तान्येव सानुरागोन्मेषं, पीडयन्ति च स्वदेशीयानीति प्रतार्य वैदेशिकानि विक्रीणतो वणिग्जनान् धर्मदृष्टयः, सन्ति चाऽस्मिन्नवश्यकर्तव्ये कर्मणि बहवो महोदया बद्धकक्षाः, प्रतिदिनमुद्दीप्यते सर्वान्तरङ्गे एष विवेकदीपः, नास्ति स देशो यत्रैतद्विषये कैश्चिदपि न कृतो विचारावसरः । अहो अद्यापि करालेन कलिहतकेन समन्तान्निवार्यमाणोऽपि भगवान् धर्मः सनातनपथानुयायिभिर्बहुभिः कुलोत्तंसैः कृतावलम्बो गर्जति सर्वतस्तारतारम् । पितृपितामहप्रभृतिभिः सर्वैः कुलपुरुषैराद्रियमाणं सनातनधर्मवर्त्मनि को नाम सचेताः स्पृहयेत्कण्टकानां प्रसराय । सदनेषु देवमन्दिरेषु महानसेषु जठरकोटरेष्वपि निर्विशङ्कं प्रविशद्भिः समीभूतगोपुरीषमदामांसैर्वैदेशिकवस्तुभिः किन्नाम धर्मसोपानारोहेषु न विरुध्यते, लुप्यते पवित्रैः पदार्थैः कर्त्तव्यः संस्कारः, अवशिष्येत च दन्तेष्वेव द्विजत्वम् अतः कर्त्तव्य एवैतद्विषयकः प्राणैरपि प्रयास इति केषां विपश्चितां पाश्चात्यम् । यो नामाऽस्माकमतिमृदुलमूर्तिर्धर्मस्तृणेनापि वैकल्यमुपयाति स कथं नाम श्रुत्यैव कर्णशूलवेदनामनुभावयद्भिर्वैदेशिकवस्तुभिर्व्यवहरतामानुकूल्यं भजेत ।

Vol. XXXV. DECEMBER—JANUARY, 1906-7. No. 9—10.

ओं

# विद्योदयः

( संस्कृत-मासिक-पत्रम् ) ।

Registered No. 75.

चरतु राजसुखं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भोलोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्यादविद्यातिमिरं भुवि ॥

भट्टपल्लीतः
श्रीहृषीकेशशास्त्रिणा सम्पादितः ।

पौष-माघयोः १३१३ ।

CONTENTS.

विषयाः ।



PRINTED BY UPENDRA NATHA CHAKRAVARTI,
AT THE SANSKRIT PRESS,
No 5, NANDAKUMAR CHAUDHURY'S 2nd LANE, CALCUTTA.

# स्मार्त्तव्यवस्थार्णवः ।

—:०:—

## प्रथम उत्तरङ्गः ।

तत्र ब्रह्मपुराणीयवचनात्तिथिकृत्ये गौणचान्द्रादरः। विवाहादिसंस्कारकर्म्मसु, राशिविशेषविहितस्नानादौ, नवान्नादौ, जन्ममासनिषिद्धकर्म्मणि[1] च सौरमासादरः[2]। अशौचग्रहणादौ, यज्ञादौ च सौरसावनमासादरः। (मासिकादिश्राद्धकालग्रहणे चान्द्रसावनादरः, तद्भिन्नकृत्यमात्रे मुख्यचान्द्रादरः )[3] ।

दैवकृत्ये पूर्व्वाह्णः प्रशस्तः। मनुष्यकृत्ये मध्याह्नः। पितृकृत्यविशेषेऽपराह्णः। पैतृककर्म्मविशेषे तु,—दिनस्य प्रथममुहूर्त्तत्रयं प्रातःसंज्ञकं, ततो मुहूर्त्तत्रयं सङ्गवसंज्ञकं, ततोमुहूर्त्तत्रयं मध्याह्नसंज्ञकं, ततोमुहूर्त्तत्रयमपराह्णसंज्ञकं, ततोमुहूर्त्तत्रयं सायाह्नसंज्ञकं, सायाह्नो रात्रिश्च राक्षसी वेला—सा सर्व्वकर्म्मसु गर्हिता, अष्टमो मुहूर्त्तः कुतपनामा, नवमोमुहूर्त्तो रौहिणनामा, मुहूर्त्तश्च दिनमानस्य पञ्च-

---

(१) (क) पुस्तके तन्त्रविहितकर्म्मस्वित्यधिकपाठः ।

(२) "सौरे मासि शुभा दीक्षा, न चान्द्रे, न च तारके" इति वचनादित्यधिकः (क) पुस्तकपाठः ।

(३) (—) वन्धनीमध्यस्थः पाठः (ख) पुस्तके नास्ति।

दशांशः, घटिकापि तस्य नाम, तत्र वृद्धिश्राद्धादौ प्रातःकालः प्रशस्तः, शुक्लपक्षविहितनवान्नादियुगाद्यादि-पार्व्वणश्राद्धेषु सङ्गवः, एकोद्दिष्टेषु मध्याह्नः, कृष्णपक्षविहितपार्व्वण-मृताह-विहितपार्व्वण-सपिण्डीकरणेषु अपराह्णः। अचिरोदितमुहूर्त्तं, रात्री, सन्ध्याद्वये च, श्राद्धं निषिद्धं। राहुदर्शन-संक्रान्तिविवाह-पुत्रजन्मनिमित्तकश्राद्ध-स्नान—दान-मरणनिमित्तकस्नानादि-सर्व्वकर्म्माणि च रात्रौ निषिद्धकालेऽपि कार्य्याणि॥

अथ पूर्णतिथौ निःसंशयमनुष्ठानम्। उभयपक्ष-दशमी-त्रयोदशी-कृष्णचतुर्द्दशीनामुभयदिने कर्म्मयोग्यप्रशस्तकाले मुहूर्त्तान्यूनलाभे, दैवकृत्ये, आपराह्णिकेतरपितृकृत्ये च, शुक्ल-पक्षे, परदिने, कृष्णपक्षे पूर्व्वदिने कर्त्तव्यत्वम्। आपराह्णि-कदर्शेतरकृष्णपक्षपार्व्वणे, उभयपक्षसपिण्डने, मृताहनिमित्त-कपार्व्वणे च तथात्वे, पूर्व्वदिने। दैवकर्म्मणि तु उभयपक्ष-योर्युग्मक्रमेण व्यवस्था। यथा,—द्वितीया-तृतीययोः, चतुर्थी-पञ्चम्योः, षष्ठीसप्तम्योः, अष्टमीनवम्योः, एकादशीद्वादश्योः, चतुर्द्दशीपौर्णमास्योः, प्रतिपदमावास्ययोः, परस्परयोगेन व्यवस्था। तेनोभयदिने प्रशस्तकाले द्वितीयालाभे, तृतीया-युतैव ग्राह्या, न प्रतिपद्युता। एवमन्यत्र। उपवासे तु परदिने त्रिसन्ध्याव्यापित्वे, पूर्व्वदिने युग्मतिथिसम्बन्धेऽपि परदिने व्यवस्था॥

---

## अथ प्रतिपत्।

सा च कृष्णा द्वितीयायुता ग्राह्या, शुक्ला त्वमावस्यायुता। कृष्णाप्युपवासे द्वितीयायुता न ग्राह्या।[1] कार्त्तिके शुक्ला द्यूतप्रतिपत्। मार्गे कृष्णा रोहिणीयुता गङ्गास्नाने बहुशत-सूर्य्यग्रहसमा। अत्र गौणचान्द्रेण मार्गशीर्षमासोल्लेखः।

## अथ द्वितीया।

सा च शुक्ला परयुता, कृष्णा प्रतिपद्युता। एवमुपवासेऽपि। आषाढ़शुक्ला रथद्वितीया। श्रावणे कृष्णा अशून्य-शयना। कार्त्तिके उभयदिने पञ्चमार्द्धयामे प्राप्तप्राप्तिभ्यां परदिने, एकदिनमात्रप्राप्तया तद्दिने, शुक्ला भ्रातृद्वितीया। प्रेतपक्षानन्तरं शुक्लद्वितीयायां, कोजागरानन्तरं कृष्णायां, चैत्रावल्यनन्तरं कृष्णायाञ्च द्वितीयायामनध्यायः।

## अथ तृतीया।

सा च रम्भाव्रते द्वितीयायुता ग्राह्या। तदितरदैवकृत्ये चतुर्थीयुता ग्राह्या। वैशाखे शुक्ला अक्षयतृतीया, युगाद्या च। सर्व्वत्र युगाद्यानिमित्तकस्नानादौ युग्मादरो नास्ति[2]। ज्यैष्ठे शुक्लायां पूर्व्वयुतायां रम्भाव्रतम्। भाद्रे शुक्ला मन्वादिः। चैत्रे शुक्ला मन्वादिः।

---

(१) (क) पुस्तकेऽत्र "आश्विनशुक्लायां प्रतिपदादिकल्पः तत्र षष्ठीपर्य्यन्तं युग्माद्व्यवस्था।" इत्यधिकः पाठः।

(२) बन्धनीमध्यस्थः (ख) पुस्तकपाठः।

## अथ चतुर्थी।

सा च पञ्चमीयुता ग्राह्या। शुक्ला भौमवारयुता अक्षया। विनायकव्रते तु तृतीयायुता ग्राह्या। ज्यैष्ठे शुक्ला उमाचतुर्थी। सिंहार्के शुक्ला हरितालिका। उभयपक्षयोस्तत्र चन्द्रदर्शनं निषिद्धम्। माघे शुक्ला वरदा।

## अथ पञ्चमी।

सा च चतुर्थीयुता ग्राह्या। आषाढ़े हरिशयनानन्तरं कृष्णा मनसापञ्चमी। भाद्रे शुक्ला नागपञ्चमी। माघे शुक्ला श्रीपञ्चमी।

## अथ षष्ठी।

सा च सप्तमीयुता। ज्यैष्ठे शुक्ला अरण्यषष्ठी। भाद्रे शुक्ला अक्षया। आश्विने शुक्लायां सायं देवीबोधनम्[1]। मार्गशीर्षे शुक्ला गुहषष्ठी। चैत्रे कृष्णा स्कन्दषष्ठी पूर्व्वविद्धा।

## अथ सप्तमी।

सा च षष्ठीयुता ग्राह्या। परदिने त्रिसन्ध्यव्यापित्वेऽपि (परदिने)[2] नोपवासः। रविवारयुता शुक्ला विजया, अक्षया च। वैशाखे शुक्ला जह्नुसप्तमी। आषाढ़े शुक्ला

---

(१) तत्र पूर्व्वदिवसे नक्षत्रयुक्तायां सायं प्राप्तामपि षष्ठीं त्यजेत्, यदि तत्परदिने पत्रीप्रवेशो न भवेत्। कृष्णनवम्यां कृतबोधने तु आमन्त्रणाधिवासमात्रम्। इत्यधिकः क्वचित् पाठः।

(२) बन्धनीमध्यस्थः (ख) पुस्तकपाठः।

# विद्यासुन्दरम्।

(पूर्व्वांनुवर्त्ति)

---

मह्णि० हा वच्छे! इदं ते माणसे आसी। (मूर्च्छति)

उभे। (ससम्भ्रमं) समास्ससेदु। (वस्त्रान्तेन वीजयतः)

मह्णि०। (समाश्वस्योत्थाय च) हा देव्व! एरिसो ते णिक्करुणदा। (क्षणं विचिन्त्य) पड़िहारि!

प्रतिहारी। (प्रविश्य) एसा म्हि देइ!

मह्णि०। पड़िहारि! णिवेदीअदु महाराओ "जइ ण भअदो कज्जाउलदा वट्टेदि, तआ अविलंवं दंसणदाणेण कदत्थीकरणीआ देई" त्ति।

प्रति०। जं देई आणवइ। (निष्क्रान्ता)।

मह्णि०। (ललितामालत्यौ प्रति) वच्छे! जइ महाराओ आअच्छे, ता तुम्हे ओसरेध दाणीं।

उभे। जं आणवेदि अंवा। (निष्क्रान्ते)।

ततः प्रविशति प्रतिहार्य्या दर्शितमार्गो राजा वीरसिंहः।

प्रति०। इदो इदो देओ।

राजा। (स्वगतं) कथमकस्मादेवाहूतोऽस्मि देव्या, न तावद् विभावयामि कारणमस्य।

किं वत्सा सहसा कयापि रुजया भुङ्क्ते परां यातनां ?
किंसा मानवशात् स्वकर्म्मविरता देव्याथवा भर्त्सिता ? ।
किं केनापि दुरात्मना नु विहिता वान्तःपुरे धृष्टता ?

( निमित्तं सूचयन् )

जातं मे महदप्रियं किमपि, यद् वामेक्षणं स्पन्दते ॥

( प्रकाशं ) प्रतिहारि ! तदादीयतां पुनस्ते स्वकार्य्यम् ।

प्रति० । जं आणवइ देओ । ( निष्क्रान्ता )

राजा । ( महिषीमालोक्य स्वगतं ) अये चिन्ताकुलेव लक्ष्यते महिषी, न जाने किमप्रियमद्य श्रावयिष्यतीयं मां । (महिषीमुपसृत्य प्रकाशं ) देवि अपि कुशलमयी वार्त्ता ?

महि० । ( राजानमालोक्य ससम्भ्रमं प्रणम्य सास्रु ) अज्ज-उत्त ! हदाम्हि पापिणीए विज्जाए ।

राजा । ( सात्यौत्सुक्यं ) कथमिव ?

महि० । ( कर्णे कथयति ) ।

राजा । ( श्रुत्वा सविषादचिन्तं) हा हतोऽस्मि मन्दभाग्यः । ( ललाटे कराघातं कृत्वा ) कथमेतादृशः परिणामः । ( क्षणं विचिन्त्य ) अहो किमभाग्यं मम ।

कन्या च चिन्ता युगपत् प्रभूता,
वृद्धिं गता चेन्दुकलेव तुल्यम् ।
आद्यात्मदोषेण विनाशमाप्ता,
नान्या विनष्टा पुनरेति वृद्धिम् ॥

( क्षणं तूष्णीम्भूय स्वगतं ) ( सदुःखं )

कल्लोलिन्यः पतिविरहिताः कन्यकाश्चातिलोलास्,
तुल्यं भावं दधति नितरां-निन्दनीयप्रभावम्।
आद्या वायोर्विपुलरभसस्येत्य सङ्गं स्वकूले,
अन्याः कामस्य च, निजकुले सन्ततं पातयन्ति ॥ (१)

महि०। हा अम्हाणं सब्बला ज्जेव आसा णिम्मूला दाणीं।

राजा। ( सदुःखं ) अयि देवि! न केवलमावयोराशालता निर्म्मूलेत्यवेहि। किन्तु।

पापेन पुत्त्ररहितेन मया प्रदत्तं,
पिण्डं विलोक्य पितरोऽपि विदूरिताशाः।
अद्य प्रभृत्यविरतक्षरदश्रुधारं,
नूनं रुदन्ति वत माञ्च पुरा शपन्ति ॥ (२)

( मूर्च्छति )।

---

(१) अस्यार्थः। कल्लोलिन्यः ( नद्यः ) अतिलोलाः ( अतिचपलाः ) पतिविरहिताः कन्यकाश्च, नितरां ( सातिशयं ) निन्दनीयः प्रभावोयस्य तादृशं तुल्यं ( समानं ) भावं ( अवस्थां प्रकृतिं वा ) दधति। तुल्यभावधारणमेव व्यक्तीकरोति आद्या इत्यादिना। आद्याः ( कल्लोलिन्य इत्यर्थः ) विपुलरभसस्य ( महावेगस्य ) वायोः सङ्गं ( सम्पर्कं ) एत्य ( प्राप्य ) स्वकूले ( निजतटद्वयं ) सन्ततं ( सदा ) पातयन्ति ( पतिते कुर्व्वन्ति )। अन्याः ( पतिविरहिता अतिलोलाः कन्यकाः ) कामस्य च, सङ्गमेत्य निजकुले ( स्वकीयमातापितृकुले ) सन्ततं पातयन्ति ( नरकगामिनी कुर्व्वन्ति )।

(२) प्रदत्तं ( अर्पितं ) पिण्डं। अतावश्यं हास्यमानतया भविष्यदर्थेऽपि

महि० । (सास्रु ससम्भ्रमञ्च) समस्ससेदु अज्जउत्त ! समस्ससेदु, णक्खु अह्मीरेहिं होदव्वं भवादिसेहिं । (वीजयति) ।

राजा । (किञ्चित् समाश्वस्यचोत्थाय) आः ! एवमेव क्लिश्यन्ते विषयभुजगदष्टाः संसारिणः । (क्षणं विचिन्त्य) देवि ! तदधुना गम्यतां भवनान्तरमहमिदानीममात्य-माकार्य्य किञ्चित्परामृश्यामि ।

महि० । अस्मोह्रदे घरे किं जलसेअणोवाएण ।

राजा । देवि ! न प्रतिकार्य्यमेतत् किन्तु सर्व्वथास्य वेदि-तव्यमेव कारणं, तदेवाधुना अन्वेषणीयम् ।

महि० । जं आणवेदि भवं । (प्रणम्य निष्क्रान्ता) ।

राजा । कः कोऽत्र भोः ।

(प्रविश्य) प्रतिहारी । किं आदिसदि देओ ।

राजा । दौवारिकि ! विज्ञाप्यतामसमात्यः सत्वरं देवसमीप-मुपस्थातव्यमिति ।

---

भूतप्रयोगः । अथवा दानानन्तरं दर्शनस्य सावकाशत्वेनातीतप्रयोगः । दायमानं पिण्डमित्यर्थः । एतावत्कालपर्य्यन्तं पितृणां मद्दौहित्र-दायमानपिण्डलाभरूपा सम्भाव्याशासीत्, किन्तु इतः प्रभृति सापि तेषां निर्म्मूलेति सूचनाय "अद्य प्रभृति विदूरिताशा" इति विशेषणं दत्तम् । यद्यपि किञ्चित्कालपूर्व्वावधि पितृणामाशात्यागोजात-स्तथापि राज्ञोऽद्यैव एतद्वृत्तश्रवणादद्यपदप्रयोगः । "रुदन्ति शपन्ति" इत्यत्र पुरा योगे भविष्यति लट् ।

प्रति०। जं देश्रो श्राणवद्र। (निष्क्रम्यामात्येन सह पुनः प्रविश्य) इदो इदो श्रमच्चो। (निष्क्रान्ता)।

श्रमा०। (राजानं दृष्ट्वा स्वगतं) श्रये कथमिदानीं देवः करतलावलम्बितकपोलतलोनिश्चेष्ट एव वर्त्तते।

दुर्ब्बोधतत्त्वविषयो विषयस्य कश्चि-
दुत्पादयत्यतिरुजां हृदये किमस्य।
किं पारिवारिकममङ्गलवृत्तमस्य
किञ्चिन्, मनस्तपति वा कुमुदं यथार्कः॥

यथास्तूपसृत्य सर्व्वमेवावगमिष्यामि। (उपसृत्य) देव! अभिवादये।

राजा। (दृष्ट्वा) श्रये सिद्धमन्त्र। उपविश्यताम्।

सिद्ध०। (उपविश्य) देव! कथमद्याप्रकृतिस्थ इव लक्ष्यते भवान्?

राजा। (सास्रु) सिद्धमन्त्र! यदसमीक्ष्यकारिणा मया विद्यासम्प्रदाने शपथः कृतस्तस्यैवेदानीं फलमुपभुज्यते।

सिद्ध:। देव किमिव नावगच्छामि, किं वत्सयैव स्वतन्त्रया स्वीकृतः कोऽपि?

राजा। अमात्य! न केवलं स्वीकृतः पापया, किन्तु श्रूयताम्। (कर्णे कथयति)।

सिद्ध०। (श्रुत्वा सदुःखं) अहह निदारुणं व्यथितोऽस्मि भवदीयवचनाशनिना। (दीर्घं निश्वस्य) देव तत् किमत्र करणीयं?

राजा। ननु भवानेवात्रोपदेशकः।

सिद्ध०। (क्षणं विचिन्त्य) देव! प्रथममत्र सुनैपुण्येन वेदितव्यो वत्सायाः अभिमतोजनस्ततस्तस्यासजातीयतायाः सजातीयतायाः वा प्रतिपत्तौ निरूपयितव्ये कर्त्तव्याकर्त्तव्ये इत्युदेति मे मनसि, तथाप्यत्र व्यवस्थाजटिलतया धर्म्माधर्म्मस्य प्रष्टव्य एव भवता पुरोधाः।

राजा। ननु तस्य साजात्ये वैजात्ये वा किं फलं?

सिद्ध०। देव! पूर्व्वपक्षे गान्धर्व्वविवाहस्य शास्त्रसिद्धतया तयोरविरोध एव समागमः। परपक्षे तु प्रमाणमेव देवपादाः।

राजा। तथास्तु पृच्छ्यतामिदं तावत् पुरोहितः।

राजा। प्रतिहारि!

प्रति०। (प्रविश्य) इअम्हि देओ।

राजा। मद्वचनादादिश्यतां शुभदासो "दर्शनमिच्छति देवः पुरोधसस्तत् त्वया सविनयमाहूयतां स" इति।

प्रति०। जं आणवइ देओ। (निष्क्रान्ता)

सिद्ध०। देव! पृच्छामि किं स्वयमेव प्रत्यक्षीकृता वत्सायास्तादृगवस्था? उत परचक्षुरेवात्र प्रमाणं?

राजा। वत्सायाः सखीजनेन निवेदितया देव्यैवाहं निवेदितोऽस्मि।

सिद्ध०। कथं बालाजनवचसि प्रत्ययः?

राजा। (सदुःखं) अयि मन्त्रिन्! युज्यत एव मे बाला-

## बङ्गभाषायां संस्कृतशब्दानामर्थान्तराणि।

सम्प्रतिहि प्रचलितबङ्गभाषायां संस्कृतशब्दप्रचार-बाहुल्यं दृष्ट्वा केचिदिदानीन्तना: कृतविद्या बङ्गभाषाया: साक्षात् संस्कृतप्रभवत्वमनुमान्ति। आपातदृष्ट्या बङ्गभाषेयं विभक्तियोगशून्या संस्कृतभाषैवेति प्रतीयते च। किन्तु वय-मत्रोदासीना इव न मतमिदं सम्यक् समर्थयितुं समर्था:। सत्यपि बङ्गभाषायां संस्कृतशब्दप्रयोगबाहुल्ये, बहव एव संस्कृतशब्दा अत्र भिन्नार्थेषु प्रयुक्ता एव दृश्यन्ते। यदि नाम भाषेयं साक्षात्संस्कृतभाषाप्रभवाऽभविष्यत्, तदाऽत्र संस्कृतशब्दा न कदाप्यसदर्थेषु प्रयुक्ता अभविष्यन्, तेषां तथा व्यवहार एव भाषाया अस्या: संस्कृतभाषात: स्वातन्त्र्यं विस्पष्टं प्रकटयति। अथेदानीं दृष्टान्तविधया दिङ्मात्र-मुदाहृत्यास्मन्मतं समर्थयाम:।

रागशब्दस्य तावत् संस्कृतभाषायां प्रेमरुधिरादिगत-लौहित्यार्थयोरेव प्रयोगो "लग्नं रागावृताङ्ग्या सुदृढमिह यये" त्याद्युदाहरणपरम्परया सततं सन्दृश्यते, किन्तु बङ्ग-भाषायां शब्दोऽयं क्रोधार्थ एव भूरिश: प्रयुज्यते, नहि पूर्व्वं 'अनु'शब्दस्य योगमन्तरेण कदाप्ययं शब्दोबङ्गभाषायां प्रेमार्थ-मभिव्यनक्ति, लौहित्यार्थे त्वस्य प्रयोगो बङ्गभाषायां प्रविरल एव, क्रोधार्थे पुनरस्य प्रयोगबाहुल्यमा बाल्यात् प्रत्यक्षी-कुर्व्वद्भिर्बङ्गीयैर्बालविद्यार्थिभि: "क्रुध्यती"त्यत्र" रागं

करोति, "तस्य सुमहान् क्रोध उत्पन्न" इत्यत्र च सुमहान् राग उत्पन्न, इत्येवंरूपाणि वाक्यान्युपन्यस्यन्ते। द्वितीयः सुतरां शब्दः संस्कृतभाषायां 'निरीक्षमाणः सुतरां दयालु-" रित्याद्युदाहरणपरम्परातोऽतिशयार्थवाचकतया प्रसिद्धोऽपि वङ्गभाषायां 'अतएव' 'ततएव' 'कायेकायेइ' इत्यर्थं एव भूरिशः प्रयुज्यते, येन बङ्गीयबालविद्यार्थिनामपि तस्य संस्कृतभाषायां व्यवहारावसरे सुमहान् भ्रमः समुत्पद्यते। तृतीयस्तु नष्ट-शब्दः, संस्कृतभाषायां शब्दोऽयं "अदृष्टः" "पलायितः" इत्याद्यर्थं एव प्रसिद्ध इति "क्षणदृष्टनष्ट" इत्यादि भूरिप्रयोगत एव विज्ञायते। किन्तु शब्दोऽयं वङ्गभाषायां यदा मनुष्यविशेषणतया प्रयुज्यते, तदा "धूर्त्त, शठ" इत्याद्यर्थमेवाभिव्यनक्ति। अपरद्रव्य-विशेषणतया व्यवहृतस्तु शब्दोऽयं नाशं गत इत्यर्थस्यैव वाचको भवति। चतुर्थो 'दिव्य' शब्दः संस्कृतभाषायां "अलौकिकः, स्वर्गीयः, सुन्दर" इत्याद्यर्थेष्वेव प्रसिद्धः, किन्तु वङ्गभाषायां शब्दस्यास्य शपथार्थं एव भूरिप्रयोगो दृश्यते। इत्थं गोलशब्दः संस्कृतभाषायां वृत्ताकारवस्तुमात्रवाचकोऽपि वङ्गभाषायां नानार्थानभिधत्ते, यथा (१) वृत्ताकारवस्तु, (२) दुर्ब्बोधवस्तु (३) कलकलः, (४) बहुजनसम्मर्दश्च। तथा नादशब्दस्य संस्कृते उच्चैरुच्चरितनिःस्वनार्थत्वेऽपि वङ्गभाषायां गोमहिषादिपुरीषार्थे प्रसिद्धिरेव।

---

सुप्रसिद्धकविपण्डितानुक्रमणी।

बि: ए, उपाधिधारी श्रीयुत पिटर पिटसन् साहेब

महोदयसङ्कलित—

## सुभाषितावलीत: बाहुल्येन संगृहीता।

(१)

अमरुक:, केचित् कविमिममम्मरुरिति च कथयन्ति, तेषाम्मते 'अमरुक' इति नाम्न: कापि सार्थकता नास्ति, वयं पुन'रमरु' इत्यस्य च सार्थकत्वं न साधु विद्म:। वस्तुतस्तु अमरनाथस्यामरु इत्यपभ्रंश: सम्भाव्यते, दृश्यते च स्वर्णकारादीतरजातीयानां संस्कृतनामापभ्रंशीकरणस्य तादृश्येव प्रथा, यथा दीननाथस्य"दीनु"रिति। कविरय"मम्मरुशतक" नाम्ना प्रसिद्धस्य पद्यनिबन्धस्य रचयिता। आनन्दवर्द्धननाम्ना सुप्रसिद्धेन कविना स्वकीयनिबन्धे कवेरस्य काश्चित् कविता: समुद्धृता:, नाम च समुल्लिखितं। ततश्च कविरयमानन्दवर्द्धनस्य पूर्व्ववर्त्तीति विज्ञायते। कस्याञ्चिदमरुशतकटीकायां कविरयं स्वर्णकारकुलभूषण आसीदिति सुस्पष्टं लिखितमस्ति, यथा—

"विश्वप्रख्यातनाड़िन्धमकुलतिलको विश्वकर्म्मा द्वितीय:"। (क)

अमरुकृतानि पद्यानि लोकविख्यातान्यपि तेषु केचिदत्रोद्ध्रियन्ते॥

(क) भगवान् शङ्कराचार्य्य: किलैकदादिमरसतत्त्वं बुभुत्सुरमरुनाम्न:

अच्छिन्नं नयनाम्बु बन्धुषु कृतं, तापः सखीष्वाहितो
न्यस्तं दैन्यमशेषतः परिजने, चिन्ता गुरुभ्योऽर्पिता।
अद्य श्वः किल निर्वृतिं व्रजति सा श्वासैः परं खिद्यते
विस्रब्धोभव विप्रयोगजनितं दुःखं विभक्तं तया॥

अन्योन्यग्रथितारुणाङ्गुलि-नमत्पाणिद्वयस्योपरि
न्यस्योच्छ्वासविकम्पिताधरदलं निर्वेदशून्यं मुखम्।
आमीलन्नयनान्तवान्तसलिलं श्लाघ्यस्य निन्द्यस्य वा
कस्येदं दृढ़सौहृदं प्रतिदिनं दीनं त्वया स्मर्य्यते॥

असद्वृत्तो नायं नच खलु गुणैरेष रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपतितः।
गृहाणेमं मुग्धे व्रजतु तव कण्ठप्रणयिता-
मुपायोनास्त्यन्यस्तव हृदयसन्तापशमने॥

आ दृष्टिप्रसरात् प्रियस्य पदवीमुद्वीक्ष्य निर्व्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
दत्त्वैकं सशुचा गृहं प्रतिपदं पान्थस्त्रियाऽस्मिन् क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम्॥

आलोकयति पयोधरमुपमन्दिरमभिनवाम्बुभरनीलम्।
दयितारचितचितानलधूमोद्गमशङ्कया पथिकः॥

---

कस्याश्चिद्राज्ञः शरीरं प्रविश्यान्तःपुरसम्भोगेनाभीप्सितवस्तुनि सञ्जाताभिप्रोऽमरुघातकं निर्ममौ इत्यपि किंवदन्ती प्रचरतितरां, परं न सा श्रद्धेयेत्युपेक्षिताऽस्माभिः।

आश्लिष्टा रभसाद्विलीयत इवाक्रान्ताप्यनङ्गेन या
यस्याः कृत्रिमचण्डवस्तुकरणाकूतेषु खिन्नं मनः।
कोऽयं काहमिति प्रवृत्तसुरता जानाति या नान्तरम्
रन्तुः सा रमणी स एव रमणः शेषौ तु जायापती॥

अमरुकविकृततया चिरप्रसिद्धान्यपि भूयांसि पद्यानि साम्प्रतमपरकविकृतित्वेन विज्ञातान्यभवन्। यथा—

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया।
आस्तां जीवितहारिणः प्रवसनालापस्य सङ्कीर्त्तनं
मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा॥

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि, किमधिकत्रासोत्कम्पा दिशः समुदीक्षसे॥

एते द्वे अगटनामधेयस्य कवेः कृतिरिति,

प्रहरविरतौ मध्ये वाह्नस्ततोपि परेण वा
किमुत सकले याते वाह्नि प्रियत्वमिहैष्यसि।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सवाष्पझलज्झलैः॥

श्लोकोऽयं वासुदेवकवेः कृतिरिति,

एकत्रासनसंस्थितिः परिहृता प्रत्युत्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः।

आलापोपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥
श्लोकोऽयं पुलिनाख्यकवेः कृतिरिति,
भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः।
तव यदि तथा रूढं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले का नः पीड़ा गते हतजीविते॥

पद्यमिदं भदन्तधर्म्मकीर्त्तेः कृतिरिति च साम्प्रतं विज्ञातमभवत्। सन्त्यन्यान्यप्यन्यकृतानि, यानि पुनः पद्यान्यमरुकृतितयैवैतावत्समयपर्य्यन्तं प्रसिद्धानि।

(२)

अमृतदत्तः भागवतामृतदत्तापरपर्य्यायकः। कविरयं साहबुद्दीननामधेयस्य इसलामधर्म्मावलम्बिनः कस्यचिन्नरपतेः सभापण्डित आसीत्। स च नरपतिः १३५२ खृष्टाब्दे काश्मीरमण्डलं शशासेति कानिङ्हाम सहोदयकृतपुरातत्त्वनिबन्धाद्विज्ञायते।

एतत्कृताः श्लोकाः प्रसिद्धा एव, तत्र केचिदत्रोद्ध्रियन्ते।

अत्यन्तशीतलतया सुभगस्वभावः
सत्यं न कश्चिदपि ते तरुरस्ति तुल्यः।
छायार्थिनामपि पुनर्विकटद्विजिह्व—
सङ्गेन चन्दन, विषद्रुमनिर्व्विशेषः॥

अपूर्व्वेयं धनुर्व्विद्या भवता शिक्षिता कुतः।
मार्गणौघः समायाति गुणोयाति दिगन्तरम्॥
आहते तव निःसाणे स्फुटितं रिपुहृद्घटैः।
गलितं तत् प्रियानेत्रैराजंश्चित्रमिदं महत्॥

अमरैरमृतं न पीतमब्धे-
र्न च हालाहलमुल्वणं हरेण।
विधिना निहितं खलस्य वाचि
द्वयमेतद्बहिरेकमन्तरन्यत्।

उद्वृत्तदैत्यपृतनापतिकण्ठपीठ-
च्छेदोच्छलद्बहलशोणितशोणधारम्।
चक्रं क्रियादभिमतानि हरेरुदार-
दिग्दाहदारुणनभःश्रियमुद्वहद्वः॥

एवं चेद्विधिना कृतोऽस्युपकृतौ कस्यांचिदप्यक्षमः
कामं मोपकृथास्ततस्तव मरो वाच्यं न धीरोभव।
किन्त्वाराद्भृगतृष्णयोपजनयन्नम्भोमुचां वञ्चनां
प्रेम्णा कर्षसि तर्षमूर्च्छितधियोप्यन्यानतः शोचसे॥

अस्तु तदत्तरचितः वक्ष्यमाणः श्लोकोऽयं शाहावुद्दीनभूमीन्द्रेण काश्मीरमागन्तुकामं मीरशाहाख्यं भूपतिं प्रति प्रेषितः—

किमेवमविशङ्कितः शिशुकुरङ्गलोलक्रमं
परिक्रमितुमीहसे विरम नैव शून्यं वनम्।
स्थितोऽत्र गजयूथनाथमथनोच्छलच्छोणित-
च्छटापटलभासुरोत्कटसटाभरः केसरी॥

श्लोकमेतमधीत्य तदानीं मुसलमानधर्म्मावलम्बिनोनरपतयोऽपि परस्परं प्रति संस्कृतभाषयैवावश्यकपत्रादिव्यवहारान् चक्रुरित्यनुमीयते।

सन्ति खल्वस्मतदत्तरिरचितान्यन्यान्यपि भूयांसि सरसानि पद्यानि, स्थानाभावान्नास्माभिस्तान्युद्धृतानि।

(३)

अगंटनामा कविः (राजपुत्र इत्युपाधिकः)। कवेरस्य

"वपुरनुपमं नाभेरूर्द्धं विधाय मृगीदृशो
ललितललितैरङ्गन्यासैः पुरा रभसादिव।
तदनु सहसा खिन्नेनेव प्रजापतिना भृशम्
पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली॥

कवितेयं रुद्रटकृतकाव्यालङ्कारटीकाकारिणा श्रीमता नामसाधुना समुद्धृता च, टीकेयं ११२५, ११७६ सम्वति वा, निर्म्मिता, ततश्च कविरयं तत्पूर्व्वमेव सञ्जात इत्यनुमीयते।

एतत् कृताः केचित् श्लोकाः—

अतितेजस्व्यपि राजा पानासक्तोन साधयत्यर्थम्।
तृणमपि दग्धुं शक्तो न वाड़वाग्निः पिवन्ननिशम्॥
तापयिता गतिरागान्न चयमाप्नोति सूर्य्यवन्नृपतिः।
सुखयन्नपि तद्द्वेषी चिप्रं चयमेति सोम इव॥
गुणिनः समीपवर्त्ती पूज्योलोकस्य गुणविहीनोपि।
विमलेचणप्रसङ्गादञ्जनमाप्नोति काणाच्चि॥

दानपरोत्युन्नतिमान् भूभृत्कटकेषु भेदमपि कुर्व्वन्।
स्त्रीव्यसनात् परवश्यो भवति नरेन्द्रः करीन्द्र इव॥
नम्रीभूय परेषां सकृदपि यः परिभवं नरः सहते।
अब्धिरिव वृष्टिसानैः स पूर्य्यते परिभवैरेव॥

एतत्कृतानि कानिचित् पद्यानि अमरुकृतिमध्ये प्रविष्टानीति पूर्व्वमेव प्रदर्शितम्।

---

## निशीथ-स्वप्नः।

१

शेफालिका-कुसुमदाम-शयान-मूर्त्ति-
स्तन्वी तुषारसितिमैकनिधानरूपा।
राकाशशाङ्ककिरण-प्रति-भासिताङ्गी
स्वप्ने मयाद्य खलु काचन सा व्यलोकि॥

२

वीणागुणारणनलग्न कराङ्गुलीनां
कान्त्या प्रवालशकलान् दधती समन्तात्।
संमूर्च्छनाञ्चित-मनोज्ञ कलस्वरेण-
कण्ठेन दिव्यमिव रागमुदञ्चयन्ती॥

---

* एष स्वप्न षोड़शवर्षदेशीयेन कविना (संवत् १९५० पौष कृष्णदशम्यां) दृष्टः, परेद्युः प्रभाते संस्कृतपद्यैर्यथादृष्टं वर्णितश्च। कविरयं वैद्यकुलालङ्क-

३

आदर्शनिर्म्मलसरःसलिलं पुरस्ता-
दाकर्णिता कुसुदिनीभिरपेततन्द्रम्।
उन्निद्रवन्यहरिणीनयनप्रभाभि-
र्न्निर्ज्जित्य पार्श्वचरतामिव लम्भयन्ती॥

४

स्वच्छावदातकलधौतवितानशुभ्र-
कौषेय-वस्त्र-समलङ्कृतकान्तदेहा।
विद्युत्प्रभाप्रतिम-मौक्तिक-दाम-भूषा
त्रैलोक्यभूषणमिव प्रतिभासमाना॥

५

प्रत्यग्रफुल्लशतपत्रधिया समन्तात्
सम्पातिषट्पदकुलैरिव चूर्णकेशैः।
सान्द्रानुविद्धवदनच्छविरम्बुजाक्षी
सौन्दर्य्यसार-रचितेव नवेन धात्रा॥

---

रत्नभूतः श्रीगणनाथसेननामधेयः कलिकाताराजकीयसंस्कृतपाठशाला-ध्ययनसमयेऽस्मत्सकाशे कानिचित् काव्यान्यलङ्कारञ्चाधीतवान्। तदानी मेवास्य संस्कृतगद्यपद्यरचनासु कापि वैदग्धी प्रादुर्भूता। अतिशैशवादे वास्यायुर्व्वेदशास्त्रेषु प्रगाढ़व्युत्पत्तिश्चिकित्सानैपुण्यं च सञ्जातम्। अथायं संस्कृतविद्यालयात् एफ्. ए. परीक्षोत्तीर्णः सन् मेडिकल्कलेजाख्यविद्या-लये यथारीति पञ्च वर्षाण्यधीत्य पाश्चात्यचिकित्साशास्त्रेष्वपि सम्यक् नैपुण्यं लेभे। इदानीमयं प्राच्यपाश्चात्यचिकित्साविद्ययोः परस्परमैक्य-मनैक्यञ्च यथायथं विचार्य्य तत्र सुफलमभिलक्ष्यैव चिकित्सामाचरति।

६
कीयं तडागतट-भूमिज पद्मिनीव
सद्यः समाप्तरचनेव शशाङ्कलक्ष्मीः।
इत्यद्भुतं सपदि चेतसि चिन्तयन्तं
सा मां दविष्ठमपि दृग्विषयीचकार॥

७
चम्पाप्रसूनरुचिराभिरथाङ्गुलीभि-
र्वीणासखित्वमपहाय च नैकताना।
आकार्य्य मामथ तदीय-पदारविन्दे
बिम्बाधरादमृतमित्थमियं ववर्ष॥

८
"एह्येहि वत्स परमप्रिय मा प्ररोदीः
संवत्सरा दश गतास्तव मां विनैव।
अत्यन्तदुःसहशुचा परिभूयमानं
त्वां वीक्ष्य तात नितरां स्वयमस्मि खिन्ना॥

९
अत्यन्त बालमपि बुद्धिविबोधहीन-
मप्येकपुत्त्रमपि रोगविशीर्णदेहम्।
सन्त्यज्य दारुणविधातृविधानयोगाद्
यन्निष्ठुरं त्वयि कृतं न च तत्क्षमार्हम्॥

१०
संसारसागरविलोलतरङ्गराशि-
संप्लाव्यमान इति विक्लवतान्तुमागाः।

एकः प्लवस्तव पिताद्य दिवं प्रयातः
कैशोरकोऽपि ननु सन्तरणक्षमोऽसि ॥

११

"बालोऽस्मि वित्तरहितोऽस्म्यसहायकोऽस्मी-"
त्येवं मतिं परिहराद्य शुचं कथा मा।
अत्यन्तकातरजनार्त्तजनोपकार-
पुण्यव्रतैकशरणस्य कुतोनु दुःखम्?॥

१२

मोहं महाव्यसनजं विजहीहि तस्मा-
देतर्हि जागृहि, चिरं तमसा न भाव्यम्।
नीहारलग्नगगनादुषसः पुरस्ता
दाक्रान्तसर्व्वहरिदन्त उदेति भास्वान्॥

१३

उत्तिष्ठ पुत्र गुणसम्पदमर्ज्जयेथाः
विद्वत्कुलेऽतिविमले ह्यसि लब्धजन्मा।
एकोऽसि नाम कुलतन्तुरसौ च पूर्व्वे
त्वामेव साग्रहदृशा पितरः श्रयन्ते॥

१४

सत्याशिषो भुवमवेहि गुरूंस्त्वदीयान्
तेषां तवास्ति च मनोगतमस्तु पूर्णम्।
दध्या दृढं परिकरं भवितासि काले
त्वद्वंश्यपूर्व्वजनपुण्यपदाङ्कवर्त्ती॥

१५

इति मधुरमुदारं दिव्यसङ्गीतसारं
प्रतिरणित मिवासीत्तद्वचो दिक्षु यावत्।
अभिगगनमुदग्रं तावदह्नाय किञ्चित्
स्थिरतडिदुपमानं ज्योतिरिद्धं दिदीपे॥

१६

तेजःप्रदीप्तपरिवेषविशेषशोभां-
स्तत्रान्वपश्यमतिभासुरदिव्यदेहान्।
वर्षात्ययाच्छजलदावृतभानुभासः
सद्यः समर्च्चितपदं जनकं पितॄंश्च॥

२७

सोत्कण्ठवीक्षितविलक्षमुखारविन्दान्
धन्यानधन्यमभि मां करुणार्द्रदृष्टीन्।
हर्षाद्भुतस्थगितचित्तमुदश्रुनेत्रं
रोमाञ्चिताखिलतनुः किल तानुदीक्ष्य-

१८

यावत् प्रणाम-विधिसंयतपाणिरासं
तद्वक्त्रचन्द्रवचनामृतविन्दुलुब्धः।
तावत् प्रभातचरपक्षिकुलारवेण
क्वापि क्षणेन सकलं विलयं जगाम॥

१९

जालान्तरप्रहितभानुमरीचिभासा
काकेति यां विहसतेव च वायसेन।

द्राग्वीतनिद्र उदतिष्ठमुदीर्णशोकं
निःसीमसंस्मृतिपयोधिवदायमानः ॥

इति विद्यानिधि-कविभूषण-एल्. एम्. एस्.
इत्युपाधिकस्य श्रीगणनाथसेनकविराजस्य

---

अथ

# विल्वमङ्गलकाव्यम्।

प्रारभ्यते—

श्रीगणेशाय नमः।

जयति गुह(१)शिखीन्द्रपिच्छमौलि-
र्मणिगिरिगैरिककल्पिताङ्गरागः।
व्रजयुवतिविकीर्णसून(२)वर्ष-
स्नपितविभूषितकुन्तलः कुमारः ॥ १ ॥

मातर्नातःपरमनुचितं यत् खलानां पुरस्ता-
दस्ताशङ्कं जठरपिठरीपूर्त्तये नर्त्तितासि।
तत् क्षन्तव्यं सहजसरले वत्सले वाणि कुर्य्याम्
प्रायश्चित्तं गुणगणनया गोपवेशस्य विष्णोः ॥ २ ॥

यो लोकभारोद्धरणाय चक्री चक्रेऽवतारं वसुदेवगेहे।
गोपीमनोनन्दकरो मुकुन्दः पायात् स वो यादवराजसिंहः॥३॥

---

(१) षडाननवाहनमयूरपुच्छकृतशेखरः।
(२) पुष्पवृष्टिः।

आवबन्ध मुकुटं कुटुम्बिनी तत्र मूर्द्धनि मुकुन्दजन्मनि।
यत्र रङ्गचितपुष्पपल्लवैर्ब्बल्लरीभिरपि पर्य्यचीयत ॥ ४ ॥
उपासतां ब्रह्मविदः पुराणाः सनातनं ब्रह्म निरुद्धचित्ताः।
वयं यशोदासुतबालकेलिकथासुधासिन्धुषु मज्जयामः ॥ ५ ॥

विहाय पीयूषरसं मुनीश्वरा
ममाङ्घ्रिराजीवरसं पिबन्ति किम्?।
इति स्वपादाम्बुजपानकौतुकी
स गोपबालः श्रियमातनोतु वः ॥ ६ ॥

ईषदङ्कुरितदन्तकुड्मलं भूषणं भुवनमङ्गलश्रियाम्।
घोषसौरभमनोहरं हरेर्वेषमेव वयमाद्रियामहे ॥ ७ ॥

चरणयोररुणं करुणार्द्रयोः
कचभरे बहलं विपुलं दृशोः।
वपुषि मञ्जुलमञ्जनमेचकं
वयसि बालमहो मधुरं महः ॥ ८ ॥

मुनिसदनकुशूलं[1] मोक्षवृक्षैकमूलं
दनुजहृदयशूलं सर्गस्थलादितूलम्।
अतुलजलतलौकं बल्लवीस्पृष्टशोकं
दलयतु दुरितं मे नन्दगोपालतोकम् ॥ ९ ॥

आकर्णयाकर्णविशालनेत्रे
नेत्रेण लक्ष्मीपतिरात्मजस्ते।

---

(१) मुनीनां सर्व्वकामप्रदम्।

मध्येन दामोदर एष भावी
करेण सूतः[2] स्वरेण दूतः[3] ॥ १० ॥

यं वेद वेदविदपि प्रियमिन्दिरायाः
यन्नाभिनीरुरुहगर्भगृहो न धाता।
गोपालबाललललना वनमालिनन्तं
गोधूलिधूसरशरीरमरीरमंस्ताः ॥ ११ ॥

यो योगभाजां हृदयैकवश्यः
सुरासुराणामपि यो नमस्यः।
यो गोपकान्ताचरणेषु दृश्यः
स पातु गाण्डीवभृतो वयस्यः ॥ १२ ॥

रत्नस्थले जानुचरः कुमारः
संक्रान्तमात्मीयमुखारविन्दम्।
आदातुकामस्तदनाप्तिदुःखा-
द्विलोक्य मातुर्मुखमारुरोद ॥ १३ ॥

घटोदकेषु प्रतिमाशशाङ्कं
निरीक्ष्य कृष्णो नवनीतबुद्ध्या।
आदातुकामस्तदलाभखेदा-
द्विलोक्य धात्रीवदनं रुरोद ॥ १४ ॥

माल्यपाणिपरिलम्बिलम्बितं
मन्दमन्दचलचारुनूपुरम्।

---

(२) अर्ज्जुनसारथ्यं चारितम्।

(३) युधिष्ठिरदौत्यं लक्षितम्।

तानवाञ्छितसुरागरागिणं
रिंगिणं नमत देवकीसुतम् ॥ १५ ॥
शैशवार्पितधिया शनैः शनै-
र्मातुरङ्कमभिवीक्ष्य सादरम् ।
रिङ्गमाणमरविन्दलोचनं
जानुना हृदय तं भजानिशम् ॥ १६ ॥
किङ्किणीकिणिरिणिरणितैः
रङ्गणपरिरम्भणैः सङ्घटन्तम् ।
कुङ्कुमनिभंकरयुगलं
कङ्कणशोभनकरं हरिं वन्दे ॥ १७ ॥
नन्दहस्तमवलम्ब्य पाणिना
मन्दमन्दमरविन्दलोचनः ।
सञ्चरन्मुखरकिङ्किणीरवः
सन्ततं मम तनोतु मङ्गलम् ॥ १८ ॥
त्रिपदकलितमासीद् येन विश्वं समस्तं
लुठति पतति भूमौ देहलीलङ्घने सः ।
इति हलधरहास्ये लास्यमालम्बमानः
संततमवतु कृष्णः शैशवालङ्कृतोवः ॥ १९ ॥
ओष्ठं गृह्णन् शिशुरिति धिया चुम्बितोवल्लवीभिः
कण्ठं जिघ्रन्नकथितपदं गाढ़मालिङ्गितात्मा ।
दोष्णा लज्जापदमभिमृशन्नङ्कमारोपितोऽसौ
धूर्त्तः स्वामी हरतु दुरितं दूरतो बालकृष्णः ॥ २० ॥

आलोलकुण्डलमलङ्कृतपांशुलील-
माकर्णपूर्णनयनं नवनीतचौरम्।
आरूढ़पुण्यफलमाकृतिलोभनीय-
माद्यं महः शरणमाश्रयते मनो मे ॥ २१ ॥

पीठे पीठनिषण्णबालकगले तिष्ठन् स गोपालको
यन्त्रान्तःस्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टारवम्।
वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन् यः पयः
पायादागतगोपिकानयनयोर्गण्डूषफुत्कारकृत् ॥ २२ ॥

कस्त्वं बाल, बलानुज,स्त्वमिह किं, मन्मन्दिराशङ्कया
युक्तं तन्नवनीतभाण्डविवरे हस्तं किमर्थं न्यसेः ?।
कर्त्तुं तत्र पिपीलिकापनयनं, सुप्ताः किमुद्बोधिताः
बाला,वत्सगतिं विवेक्तुमिति संजल्पन् हरिः पातु वः ॥२४॥

वदने नवनीतगन्धवाहं
वचने तस्करचातुरीधुरीणम्।
नयने कुहनाश्रु[1]माश्रयेथाः
चरणे कोमलताण्डवं कुमारम् ॥ २४ ॥

गुणाधिका भूः किल भूतवर्गतो
गुणाधिकोऽस्या भवितास्मि सेवया।
इतीव सङ्कृष्णखेलने रतं
बलानुजं बालमुपास्महे महः ॥ २५ ॥

---

(१) कुहनं घटः। नयनेऽस्य घटप्रमाणं जलमस्तीति कविना हास्यच्छलेनोक्तम्। कृष्णो हि यदैवेच्छति तदैव रोदिति।

कृष्णेनाद्यगतेन वर्णमनसा मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण, कएवमाहमुषली, मिथ्या, नु पश्याननम् ।
व्यादेहीति, विदारिते तु वदने, दृष्ट्वा समस्तं जगत्
माता यस्य जगाम विस्मयपदं पायात् स वः केशवः ॥२६॥

वत्स जागृहि विभातमागतं
कृष्ण जीव शरदां शतं शतम् ।
इत्युदीर्य वचनं यशोदया
चुम्ब्यमानवदनं भजे महः ॥ २७ ॥

प्रातः स्मरामि दधिघोषविधूतनिद्रं
निद्रावसानरमणीयमुखारविन्दम् ।
हृद्यानवद्यवपुषं नयनाभिराम-
मुन्निद्रपद्मनयनं नवनीतचौरम् ॥ २८ ॥

मन्थानमुज्झ मथितुं दधि न क्षमस्त्वम्
बालोऽसि वत्स विरमेति यशोदयोक्तः ।
क्षीराब्धिमन्थनविधिस्मृतिजातहासो
वाञ्छास्पदं दिशतु वो वसुदेवसूनुः ॥ २९ ॥

भजे महः कामगवीनवीन-
हैयङ्गवीनाशनवद्धतृष्णम् ।
उलूखले शृङ्खलितं रुदन्तं
कर्मान्तरव्यग्रधिया जनन्या ॥ ३० ॥

---

(१) परस्मैपदिनोऽपि शीलार्थे शानच् । 'मन्तु' निघ्नानः' इतिवत् ।

यशोदया गाढ़मुलूखलेन
गोकण्ठपाशेन निबध्यमानः।
संमर्द्दयन् पाणितलेन नेत्रे
रुरोद मन्दं नवनीतचौरः॥ २१॥

नक्षत्रमित्र[२] नवनीतकणावकीर्ण-
वक्षःस्थलोदरसगोचरमागमानाम्।
वाष्पाम्बुगर्भिततरङ्गितपद्मनेत्रम्
ब्रह्म स्मरामि दृढ़बद्धमुलूखलेन॥ २२॥

घोषस्य मोषशमनाय मिथो गुणेन
मध्ये ववन्ध जननी नवनीतचौरम्॥
उद्बन्धनं त्रिजगतामुदराश्रयाणा-
माक्रोशकारणमहो नितराम्बभूव॥ २३॥

यशोदायशोदावपुण्यप्रभावम्
प्रभा-वञ्चितादित्यचन्द्रानुभावम्।
नृशावं दृशा वन्दितं बल्लवीना-
मलंबालकं बालकं नौमि नित्यम्॥ २४॥

परमिममुपदेशमाद्रियध्वम्
निगमवनेषु नितान्तचारखिन्नाः॥
विचिनुत भुवनेषु बल्लवीनाम्
उपनिषदर्थमुलूखले निबद्धम्॥ २५॥

---

(२) तारकासमा ये नवनीतकणाः, तैः परिव्याप्तं वक्षस्थलोदरं यस्य तत्।

कथं यशोदाकरपल्लवाभ्याम्
बद्धोऽसि मध्ये त्वमुलूखलस्य ॥
आचक्षते त्वां महतोमहीयान्
अणोरणीयानिति वेदवादाः ॥ ३६ ॥

नृत्यन्तमत्यन्तविलोकनीयम्
कृष्णं मणिस्तम्भगतं मृगाक्षी ॥
निरीक्ष्य साक्षादिव कृष्णमग्रे
द्विधा वितेने नवनीतपिण्डम् ॥ ३७ ॥

नीतं नवनीतम् केन च पीतं पयः क्क मे मुरली ॥
इति समुदीर्य्यं लुठन्तम् भूमौ बालं नमामि गोपालम् ॥३८॥

नवनीलमेघरुचिरः परः पुमा-
नवनीतले विहितगोपविग्रहः ॥
नवनीयमूर्त्तिरमरैरपि स्वयम्
नवनीतभिक्षुरधुना स चिन्त्यते ॥ ३९ ॥

बालाय नीलवपुषे तनुकिङ्किणीक-
ध्वानाभिरामजघनाय दिगम्बराय ।
भास्वत्तरक्षुनखभूषणभूषिताय
नन्दात्मजाय नवनीतभुजे नमोऽस्तु ॥ ४० ॥

कन्दुक्रीड़ाविगलितघनखेदमुग्धाननश्रीः
कच्चिद्दृष्टः कुवलयदलश्यामलः कोऽपि बालः ।
पृच्छन्त्येवं पथि पथि ययौ व्याकुला नन्दपत्नी
तीरे तीरे तपनदुहितुः कृष्णमन्वेषयन्ती ॥ ४१ ॥

सम्बाधे सुरभीणामम्बामायासयन्तमनुयान्तीम् ॥
लम्बालकमवलम्बे तम्बालं तनुविलग्न-लम्बालम् ॥४२॥
अहो भाग्यवती देवी यशोदा नन्दगेहिनी।
या स्वाङ्के कृष्णमादाय मुखं चुम्बति सादरम् ॥४३॥

कालिन्दीपुलिनोदरेषु मुषली यावद्गतः खेलितुं
तावत् कर्व्वुरिकापयः पिव हरे वर्द्धिष्यते ते शिखा।
इत्थं वालतया प्रतारणपरं शृण्वन् यशोदावचः
पायात् स्वस्य शिखां स्पृशन् प्रमुदितः क्षीरेऽर्द्धपीते हरिः ॥४४॥

करवाणि किमेकपाणिना
मयि कोदृक् तव वत्स मत्सरः।
इति नन्दवधूरधूनयत्
प्रणिपातेन तदात्मदुष्कृतम् ॥ ४५ ॥

यशोदया नन्दगृहे सुगोपितम्
हरिं विरिञ्चाद्यमरेशवन्दितम्।
त्रिलोकनाथं जगदेकसाक्षिणम्
नमामि भूयोभवरोगभेषजम् ॥ ४६ ॥

यद्देवदैत्यमुनिभिर्मनसाप्यगम्यं
यन्नेति नेति च वदन् नहि वेद वेदः।
आस्तामविक्रयकृतां शुकृतानि कानि
तद्ब्रह्म वालमिव यत्परिपालयन्ति ॥ ४७ ॥

अलकं मिलितं कपोलमूले
तिलकं चन्दनबिन्दुमादधानः।

दिवसे दिवसे विशेषशाली
वनमाली मुदमाततान पित्रोः ॥ ४८ ॥

स्नुषैव भाण्डानयनार्पणक्रियाया-
च्छलेन लोलोन्नतयोनतभ्रुवः।
श्वा त्वरितः कृष्णमुखावलोकने
मुहुर्यशोदासदनं समाययुः ॥ ४९ ॥

मन्दस्मितस्नपितमुग्धमुखारविन्दे
मन्दानिलाकुलितकोमलकाकपक्षे।
गो-गोप गोपवनिताजनपुण्यपूरे
गोपालबालतिलके रमतां मनो मे ॥ ५० ॥

शैशवं मनसि शार्ङ्गिणश्चिरं
जृम्भतां निरुपमं परात्परम्।
नारदादिमुनिचित्तसेवितम्
भूषणं जगति मे मुहुर्मुहुः ॥ ५१ ॥

शैशवोल्लसितकोमलाकृतिं
किल्बिषान्तकरमिन्दिरापतिम्।
पश्य मे हृदय सन्ततं धिया
नन्दगोपतनयं मुहुर्मुहुः ॥ ५२ ॥

विरणन्मणिनूपुरं व्रजे
चरणाम्भोजमपास्य शार्ङ्गिणः।
स्वरसेन हि किं श्रियावृतम्
कथनं वा कलहंसनादितम् ॥ ५३ ॥

# प्राप्तिस्वीकारः।

वयमतीवानन्दोत्फुल्लहृदयेनाद्य श्रीमद्बन्धुवराभ्यामास्ति-विद्यावाचस्पतिसम्पादिताम् सूनृतवादिनीं नाम साप्ताहिकीं संस्कृतपत्रिकामधिगम्य धन्यम्मन्याः स्मः संवृत्ताः। इतः पूर्व्वं भारतभूमावस्यां 'पण्डिता'परपर्य्यायकं काशीविद्यासुधानिधिनामकमेकमेव वाराणसीनगरे संस्कृतमासिकपत्रं प्रादुर्भूतम्। परं तत्र केवलं प्राचीनसंस्कृतनिबन्धाः प्रकाशिता अभवन्। ततश्च तदनुसरणं कृत्वा श्रीमता सत्यव्रतसामश्रमिणा पण्डितवरेण "प्रत्नकम्रनन्दिनी"नामिकां कामपि संस्कृतमासिकपत्रिकां कलिकातानगरात् प्रकाशयितुं प्रयत्नः कृतः। नामैवास्याः प्राचीननिबन्धप्रकाशनपरतां सूचयति। अथ पञ्जावविश्वविद्यालयप्रबन्धकर्त्तारस्तदानीं लोकवृत्तानुशीलनपरं किमपि संस्कृतमासिकपत्रं प्रचारयितुमुद्यता विद्योदयस्यास्य १८७२ खृष्टाब्दे प्रकाशं कृतवन्तः। ततश्च लौकिकवृत्तानुशीलने विद्योदयोऽयं प्रथमसंस्कृतमासिकपत्रतया प्रादुर्भूतः। अथ क्रमेण विद्योदयप्रदर्शितं पन्थानमनुसृत्य प्रादुर्भूतानि बहूनि संस्कृतमासिकपत्राणि संस्कृतचन्द्रिकाप्रभृतीनि, साम्प्रतं भारतभूमेः प्रदेशविशेषेषु प्रचरन्तितराम्। परमेतावत्कालपर्य्यन्तं संस्कृतभाषालिखितायाः लौकिकवृत्तसमाचारानुशीलनपरायाः साप्ताहिक्याः पत्रिकायाः, सम्यगभाव एवासीत्। 'सूनृतवादिन्या'ऽनयाऽद्य तदभावो निराकृतः। इयमेव प्रथमा साप्ताहिकी संस्कृतपत्रिका घोरेऽस्मिन् संस्कृतविद्याविलोपिनि कलियुगे प्रादुर्भूता, स्वप्र-

काशकस्य श्रीमतः अप्पाशास्त्रिमहोदयस्याविनश्वरां कीर्त्तिं लोकेऽस्मिन्नुद्घोषयति। पत्रिकैषा सामाजिकेभ्योयथोचित-श्रुतसाहमधिगम्य चिरं जीवत्वित्यस्माकमाशंसा वरीवर्त्ति।

इयत्कालं यावद्वाचस्पत्युपाधिकश्रीमदप्पाशास्त्रिणः संस्कृतलेखनैपुण्यं चन्द्रिकयैवोद्भासितं सहृदयानां हृदयोल्लासं जनयति स्म। इदानीन्त्वनया सुनृतवादिन्या सूनृतवादप्रिय-त्वमपि समुत्पादयिष्यतीत्यत्र कः सन्देहः ?। दृश्यतां ताव-दधस्तात् सूनृतवादिन्याः सम्भाषणरीतिः।—"वत्सरेस्मिन् कलिकातायामेव भारतीयवस्तूनां प्रदर्शनं भविष्यतीति विदित एवायमर्थः सर्व्वेषाम्। प्रदर्शनमेतत् स्वदेशीयानामेव वस्तूनां, न पुनस्तेषामिव वैदेशिकानामपि। उद्देश्यं चास्य स्वदेशीयवाणिज्याद्युन्नतिरेव। अस्मिन् हि समवस्थापितानि तानि तानि वस्तून्यवलोक्य समुत्सहेरंस्तथाविधानि निर्म्मातुं भारतवर्षीयाः शिल्पिनः।" इत्यलं विस्तरेण।

---

## उद्भटकविताः। दरिद्रवचनानि।

लज्जा मानमहाशयस्य तनया भिक्षापि दैन्यात्मजा
दैवेनापि तयोर्द्वयोरपि मया स्वामित्वमङ्गीकृतम्।
एका तातसमाश्रयाद्बलवती भिक्षा प्रगल्भाऽभवत्
तत्सोढुं नसहा मम प्रियतमा तातेन लज्जा हृता॥
दारिद्र्य हृततातो निवसति भवने दुर्गतिर्नाम माता
पङ्गू च द्वौ जघनरहितौ भ्रातरौ दुःखशोकौ।

क्षुत्तृष्णे द्वे भगिन्यौ पतिसुतरहिते ते मदीयावलम्बे
चिन्ता कान्ता, त्यजति च न मां स्नेहवान्मोहपुत्रः ॥
अन्नं लभ्यं दिनान्ते कुरुवकसदृशं पानपात्रं कराग्रं
तैलं देहोपकारि श्रुतमिति, शयनं संस्तरे मे तृणानाम्।
ज्ञातं दैत्येन्द्रनाथे लवणमिति पदं, दूरतः पूगवार्त्ता
पूजातुष्टः कपाली निजवसनमदात् तेन वस्त्रान्वितोऽहम् ॥
नीता कान्तिकुटुम्बिनी, प्रमुषिता विद्याविहारस्थली,
छिन्ना कीर्त्तिलता, चिरप्रियसखोधर्म्मोऽपि निर्म्मूलितः।
दारिद्र्येण कृतामिमां निजदशां, वक्तुञ्च शक्नामहे
त्वञ्चेच्छास्तिकरो न चेत् प्रकुरुषे, रोषेण किं वाऽपरम् ॥
मद्गेहे मुषलीव मूषिकवधूर्मूषेव मार्जारिका
मार्जारीव शुनी शुनीव गृहिणी वाच्याः किमन्ये जनाः।
मूर्च्छापन्नशिशून्सून् विजहतः संप्रेक्ष्य झिल्लीरवै-
र्लूतातन्तुवितानसम्वृतमुखी चुल्ली चिरं रोदिति ॥
वाप्यां वात्यालकोटिः कुपिठरजठरे मक्षिकाणाञ्च कोटि-
र्गात्रे विष्फोटकोटिः कतितटविलसत्कर्पटे ग्रन्थिकोटिः।
कोटिर्गण्डूपदीनां मम गृहपटले मस्तके यूककोटिः
षस्रां कोटीश्वरोऽहं तदपि वद कथं गन्तुमन्यत्र राजन् ॥
भिक्षा मे जननी स्वयं मृतवती, सीमन्तिनी दुर्गति-
र्दुर्गत्यामशिवस्वरा समभवत् चिन्ताभिधाना सुता।
आधिर्व्याधिरनादरास्च तनया नैते प्रवासक्षमाः
शान्तिर्नाम ममायसीति वनिता बन्धोः कुले तिष्ठति ॥

# NOTICE.

VIDYODAYA. Annual subscription payable strictly in advance for foreign countries,

| | | |
|---|---|---|
| including postage ... ... ... | Rs | 3 0 |
| Do Do for India ... ... | ,, | 2 0 |
| Single copy ... ... ... ... | ,, | 0 4 |

RATES OF ADVERTISEMENT.

| | | |
|---|---|---|
| Full page per month ... ... ... | Rs | 3 0 |
| Half page per month ... ... ... | ,, | 2 0 |

---

## विज्ञापनम् ।

विद्योदयस्य वार्षिकमूल्यं छात्राणामसमर्थानाञ्च प ह्येकरौप्यम्, तदन्येषान्तु रौप्यद्वयम्, मूल्यप्राप्तिमन्तरेण कस्यचिद् विद्योदयः प्रेर्य्यते । यदि कश्चिद् विद्योदयमूल्ये समस्मानकषट्क ( ।√० ) मधिकं प्रेरयेत् स सटीकसानुवा मेघदूतस्य खण्डमेकमाप्नुयात् । विद्योदयग्राहका एवो मूल्येन तथाविधं मेघदूतं लभेरन् नान्ये । विद्योदय कार्य्यालये प्राप्तव्यानां पुस्तकानां सूची—

| पुस्तकम् | मूल्य |
|---|---|
| श्रुतबोधः ... ... ... | /१ |
| कोषत्रयी ... ... ... | ।√० |
| क्षितीशवंशावलीचरितम् ... ... | ।० |
| लिङ्गविवेकः ... ... ... | ॥० |
| सुपद्मव्याकरणं सटीकम् ... ... | २॥० |
| शाण्डिल्यसूत्रं सभाष्यवङ्गानुवादम्... ... | १॥० |

श्रीहृषीकेश-शास्त्री

विद्योदय-सम्पादकः

१।६, पटुयाटोलालेन हारिसनरोड पोः कलिकाता

॥ श्रीः ॥

# मधुरवाणी.

( संस्कृतमासपत्रिका. )



संपादकः—गळगळी रामाचार्यः

सहसंपादकः—बुळीं श्रीनिवासाचार्यः

# अनुक्रमणिका




*Printed at Shri Ramtatva Prakash Printing Press, Belgaum by its proprietor C. S. Mailgol. and Published by Shrinivasacharya Burli at House No. 1693 Bogarves, Belgaum.*

श्रीशः शरणम् ।

# मधुरवाणी.

सुधानिष्यंदिन्या मधुरमधुरालापकलया ।
चिरावज्ञामूर्छांभरमपहरंती सुरगिरः ॥
मनोज्ञालंकारा रसिकजनचेतांसि सहसा ।
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

वर्षे ) शके १८५८ कार्तिक ( १ संचिका

## मंगलम् ।

राधाधरमधुस्यंदमिलिंदाय मधुद्विषे ।
कृष्णापटकुविंदाय गोविंदाय नमोऽस्तु नः ॥ १ ॥

वृंदारण्यविहायसे विहरणव्यापारलोला मुदा ।
संसारातपतापलोपनपटुः सद्बर्हिणानंदिनी ॥
शामा नः कनकाभगोपललनासौदामिनीभासुरा ।
प्रेमासारमनारतं विकिरतात् सा कापि कादंबिनी ॥ २ ॥

घोषे यस्य मुखारविंदगलितं गीतामृतं कामिनी- ।
प्रेमांभोधिविवर्धनाय समभूद्वंशीरवोल्लासितम् ॥
घोरेऽथो समरांगणे रिपूगणाकूपरसंशोषकं ।
शंखध्वानविजृंभितं च भगवान् स स्यान्मुकुंदो मुदे ॥ ३ ॥

वंदेऽरविंदनयनं शरदिंदुवक्त्रं ।
मंदेरितस्मितमनोहरमिंदिरेशम् ॥
नंदेननंदनधिया कलितानुबंधं ।
तं देवदेवमघवृंदहरं मुकुंदम् ॥ ४ ॥

कल्याणकारी कमलाविहारी ।
कलिंदकन्यापुलिनाधिचारी ॥
कांतानुसारी कलुषापहारी ।
करोति शौरिः करुणां मुरारिः ॥ ५ ॥

## मांसावतरणिका.

दोषाकरोऽपि विमलीभवतिं प्रकामं ।
धत्ते प्रसादमतुलं च जलाशयोपि ॥
दामोदरप्रियतमे किल कार्तिकेऽस्मिन् ।
सत्साहचर्यमहिमा वचसाप्यगम्यः ॥ ६ ॥

## अन्योक्तिः ।

काशीं यासि गयामुपैषि न कुरुक्षेत्रं तथा मुंचासि ।
कांचीं संचिनुषे गतेन मधुरामाधुर्यमप्यश्नुषे ॥
धूमस्यंदन नो तथापि भवता कालुष्यमुन्मुच्यते ।
प्रायो नैजगुणं त्यजंति न खलाः सत्साहचर्यादपि ॥ ७ ॥

## सुभाषितानि

कांत हंत निरंतरं शमरते वेदांतमभ्यस्यति ।
कांताऽत्यंतपरिस्फुरत्तरुणिमा तांता मनोजन्मना ॥
आहारे शयने च भोगकरणे वैराग्यमालंबते ।
शास्त्रेषु श्रुतकार्यकारणविधेः कोयं विचित्रः क्रमः ॥ ८ ॥
आयाता प्रतिपच्चिराभिलषितेत्यंतः प्रमोदस्फुर ।
त्स्मेरोल्लासमनोहरांबुजमुखी क्षौमं वसाना नवम् ॥
यावत्तल्पमकल्पयत्तदवधौ सुप्ते गृहे वल्लभे ।
यां बालानुबभूव दुर्धरदशां सा केन वा वर्ण्यते ॥९॥

श्रीशः शरणम् ।

# नववत्सरारंभः

अद्य किल वत्सा मधुरवाणी भगवतः श्रीवत्सलांछनस्याचलया वत्सलतया शुभंच्छोरमत्सरिणो वाचकवृंदस्य समुच्छलत्सौहार्दया कटाक्षच्छटया नव वत्सरे पदमादधातीति निवेदयितुं नितातमुत्सहामहे नवनवोत्कर्षसमुत्सुका वयम्। विभ्रमरोदासभावगहनांधकारे विरोधकघूकनिकरघूत्कारभयंकरेऽस्मिन्समये गीर्वाण वाणीमय्या. सुरवाण्या जननं तत्राऽपि नैकसंकटककुटिलतमं प्रथमवर्षपथमतिक्रम्य द्वितीयवर्षे पदप्रक्षेपणं नामास्याः कस्य वा प्रेक्षावतः सुरसरस्वतीप्रणयिनश्चेतसि न चेतयेत्कौतुकमनल्पमानंदसहचरम् । कोट्यधिकसाक्षरप्रजेष्वपि जनपदेषु नैकाः प्रचलितदेशभाषामयपत्रिकाः प्रतिदिनं विलयपथमुपयाता उपयांतीश्च विलोक्याऽपि मुष्टिमेयसंस्कृताभिज्ञे अंगुलिपरिगणनीयामरवाणीप्रसारप्रणयिनि सुलभेतरनवसाहसकौतुके विरलतरवाचकप्रपंचे सावग्रहवदान्यानुग्रहे च समयेऽस्मिन् सुरभाषामयपात्रिकासंपादनसाहसमुपहासास्पदमभिलषितविदूरमनिष्टापादकं चेति केचन हितचिंतकाः परावर्तयितुमस्मात्साहसादस्मान्प्रायंतत प्रेम्णा। साहसमिदं गौरीशंकरशिखरारोहणमिवापारसागरतरणमिवाशक्यतमं मन्यमाना अपि हितचिंतकोपदेशस्यावितथतामेकांततो जानंतोऽपि 'साहसे श्रीः प्रतिवसति ' इत्यमभियुक्तोक्तिमनुसृत्य कार्यस्यास्यैकदाऽनुभवं गृह्णीम इति चिरंतनोत्कलिकातिशयेन बलवद्यंत्रिता नाधुनाऽपि समूलं विलीनः सुरभारतीपुण्यगरिमेति नाद्याऽपि सर्वे मातृहत्योन्मुखा इति अद्यापि विद्योतंते संस्कृतैकप्राणा विद्यावंतः संप्रत्यपि सन्नद्धाः संति सुरवाणीसमुन्नत्यै धारावर्षमभिवर्षितुमात्मनः संपदमपारां

दातार इति विश्वसंतश्च पावार्तिष्महि वयं दुस्सहेऽस्मिन्साहसे सहसा। निर्वदवितु मिदमामोदामहे यत्सहायकपोषकानुग्राहकाणां वदान्यतायष्टिमवालंब्यैव कथमप्य-तिक्रांतवती निरंतरायं कृतवाचकसेवा मधुरवाणी प्रथमं वर्षमिति । कथनामिदं नाशंतोऽपि समाश्रयेदतिशयोक्तिसीमानम् । केषांचनोदाराणां अस्थिरदातृतापे-क्षया बहुवाचकानां शाश्वतकृपैव पत्रिकाणां प्रतिष्ठायाः समुन्नतेश्च निदानमिति विदितमेव विश्वेषाम् । अतो वयमाशास्महे द्वितीयवर्षे मधुरवाण्या वाचकवैपु-ल्यम्। संति किल देवावतारभागधेयं करतलामलकवदखिलमवलोकितवतां मुनीनां चिरकालनिवासपावनेऽस्मिन्भरतखंडे कोटिशः संति संस्कृतस्य वक्तारः प्रण-यिनश्च । परं तेषु संस्कृतपत्रिकाभिः सहस्रसंख्यास्पर्शिनो ग्राहका नासाद्यंत इति महाविस्मयास्पदं विषादावहं लांछनांद्धोषकं च । अधीतसंस्कृतानां कुतो वैता-दृशी स्थितिरिति चिरं विचारयंतोऽपि न पारमधिगच्छामः । वस्तुतः संस्कृता-भ्यासो हि मनस्संक्रांतिहेतुरिति प्राचीनविदुषां विमलतरचरितेनावगम्यते । अधुना तद्विपरीतमेव संवृत्तम् । काव्याध्ययनेन भव्यविचारो साहित्याभ्यासेन सौहित्यनिरेकः शास्त्रपरिचयेन प्रशस्तकल्पनाचस्तमुपयाति किमिति संशेत मनः। यदगणितक्लेशमनाकलितस्वनिकेतनव्यवस्थमनाश्रितव्यवसायांतरमनालोचितधन-व्ययमनाशंसितस्वार्थलेशं केवलं सुरसरस्वतीमातुः प्रसारसंवाये सततं बद्धपरि-कराणां संपादकानामस्तु दूरतो योगक्षेमविचारः परं पत्रिकासंपादनानुकूल्यमपि विधातुमीहंते परिचितसंस्कृतवाचः । केचन भाषादोषमिषेण नाभिलपंते पत्रि-काम् । केऽपि विषयवैरस्यव्याजेन वर्जयंति दूरतः । कतिपये च मसृण तमपत्रविरहापदेशेन प्रत्यादिशंति महाशयाः । परे चाकारसौंदर्यवैकल्यछलेन छलयंति । अपरे भाषाकाठिण्यकैतवेन निराकुर्वंति । अन्ये भाषासरलतानिमित्तेन समुत्सृजंति । किं बहुना यं कमपि तथ्यं हास्यास्पदं वा हेतुं पुरस्कृत्य पत्रिका-दूरीकरणेन निदर्शयंत्यात्मनो मनोवैशद्यम्। विनामूल्यमपेक्षते केचनात्मनः प्रेक्षा-वत्तायाः प्रतिफलतया । दोषज्ञाः केऽपि संस्कृतपत्रिकावाचनमप्यात्मनो मान-

क्षतिकरं मन्वंते। किं पुनस्तस्या. हस्तावलंबनदानम्। वैदिशिकविद्याविशदीकृतचेतसस्तु संस्कृतपत्रिकाणां निस्सारतां निरर्थकतां चैव मन्यंते सनासिकाभंगं पंडितम्मन्यमानाः। एवं च प्राचीनावाचीनविद्यापरिचितेषु केनाऽपि हेतुना सदूरमपसर्पमाणेषु कंवावलंब्य समुत्पत्तुमुपजीवितुं वाऽऽकांक्षरन्नुत्सहेरंश्च संस्कृपत्रिकाः। न खलु न वयं जानीमो यदमीभिर्निर्दिष्टदोषांशतोऽप्यस्पृष्टा इमाः पत्रिकाः इति। नैतेपि किल न विदंत्येव यत् "सर्वारंभा हि दोषेण धूमेनाग्निरिवावृता इति। हंत जानंतोऽपि सुरभारत्या दुर्दैववशात् न हि न हि अमरलोकेऽपि प्रसृमरयससोस्याः कुतो दुर्दैवलवसंपर्कः- भारतीयानामेव दौर्भाग्यवशेन न प्रकटयंत्यात्मनश्चोदारमनस्कतामानुकूल्यमावहंतो धनसंपन्ना अपि नितांतमितरकार्येषु जलमिव धनमनल्पं व्ययीकुर्वंतोपि स्वच्छंदम्। सदोषाः खलु पत्रिका जनितुं जीवितुं च नार्हंतीति यद्यमीषां मतं तर्हि प्रायः सर्वा अपि देशभाषा पत्रिकाः प्रारंभदशायां सदोषतया कुतो वा लोकाश्रयदारिद्र्येण उत्पन्नविनष्टघटा इव उत्पत्तिक्षण एव नाभजन्विनाशम्। कुतो वा वृद्धिमवापुः। स्तनंधयाः शिशवो लालादिमलकलुषिता इति किं विप्रकृष्टमुत्सृज्यंतेऽमीभिर्महानुभावैः सदैव निर्दोषतामन्विच्छद्भिः। अस्तु 'दानं दातृजनाधीनमिति विज्ञातवंतो नाधिकलेखनेन श्रामयामो लेखनीमात्मीयां वयम्। परमेतदावेदनं नाप्रशस्तं मन्यामहे यत् किंचित्कालमपि वा बाल्यसहजान्दोषानविगणय्य गुणैकपक्षपातितया यदि संस्कृतपत्रिका निरीक्ष्येरन्हृदयालुभिर्यदि च सक्रियसहानुभूत्या समाद्रियेरंस्तर्हि क्रमेणाभिलषितैर्गुणैरेधमाना देशभाषापत्रिकासाधारण्येन ततोऽप्यतिशये न वा लभेरन्प्रतिष्ठामसंशयमिति। शास्त्रीयविषयैकप्रणयिनः केचन विचक्षणाः। साहित्यमात्रस्पृहयालवः परे विपश्चितः। विमर्शैकप्रियाश्चान्ये संख्यावंतः। केवलं गद्यकांक्षिणोऽपरे सूरयः। परं पद्यापेक्षिणः केऽपि विबुधाः। सुधारणोद्बोधकवाङ्मयपाणाः कतिपये कवयः भाषासारल्यपक्षपातिनः केचन प्राज्ञाः। प्रौढसरणिमन्विच्छंतश्च परे मनीषिणः। एवं भिन्नरुचीन्सर्वानपि वाचकान्न

काऽपि तोषयितुमलं पत्रिका॥ अतोऽपूर्वसाहसकौतुकाद्वा सुरसरस्वतीसरसतास्वादनकुतूहलाद्वा प्राचीनभाषापालनकर्तव्यप्रेम्णा वा अवश्यं रक्षणीयाः पोषणीयाश्च संस्कृतपत्रिका भव्यकामैर्भारतीयैरिति साग्रहमावेदयामः। अस्तु अलं प्रसक्तानुप्रसक्तया चिंतया। प्रकृतमनुसरामः।

अधुना नववर्षे नववेषभूषिता बाला मधुरवाणी वाचकवरेण्यानां वरदहस्तैर्लालनमन्विच्छंती समुपागच्छति सविधम्। प्रथमवर्षांते यथानिवेदितमियमभिवृध्धाकारा विविधलेखालंकारा मधुरवाणी बालेति वा नवसाहसोद्यतेति वा सर्वथा समाद्रियतां पाठकप्रकांडैः।

पुरा किल यस्मिन्दिने भगवती पावनचरिता वामनमूर्तिस्त्रैविक्रमरूपेण विवृध्धा व्याप्नोत्त्रिलोकीं विहतकंटकां हंत तस्मिन्नेव मंगलमये वासरे गृहीतजनुर्मधुरवाणी पुनर्द्वितीयवर्षे वृद्धिमियायेति यत्सत्यं 'विश्वसिमो निर्विशंकं' भगवतः कमलापतेः करुणाकटाक्षसरणिमन्वारूढाऽचिरादेव व्याप्नुयादखिलमेव जगतीतलमियमिति। जानीमश्च श्रीजानिकृपा वाचकद्वारैवाभिव्यज्यत इति। तानेव शरणीभवनाय प्रार्थयते मधुरवाणी सविनयम्। प्रार्थना सफलीकरणीया चास्या बालाया इति वयमपि साग्रहमावेद्य प्रियपाठकमहाभागान् तथा प्रथमवर्षे दत्तसाहाय्यपोषणानुग्रहवित्तानां ग्राहकाणांच गैर्वाणीपरिचरणाय वितीर्णवित्तानां संस्मृत्य महतीमुपकृतिं पुनरधिकानुग्रहमाशास्यच व्यापारयामो लेखनीं विषयांतरे वयम्।



# स्वभाव परिज्ञानम् ।

एकदा रामलक्ष्मणौ पंपासरोवरस्य तीरे उपाविशताम् । तदा कश्चन बकः पक्षी आहारार्थं मत्स्यान् अन्वेषयितुं जलसमीपवर्तिनि सोपाने शनैः शनैः पदानि निक्षिपन् संचरति स्म । तदानीं बकं दृष्ट्वा रामो लक्ष्मणमुवाच । 'पश्य लक्ष्मण पंपायां बकः परमधार्मिकः ॥ शनैर्निक्षिपते पादान् प्राणिनां वधशंकया ' इति । इत्थं रामस्य वचनं श्रुत्वा जलांतस्थो मत्स्य उवाच । भो भगवन् रामभद्र येन बकेन अहं निर्वंशः कृतः येन मम बहवो बांधवाश्च संहृताः कवलीकृताश्च तं नृशंसं परमधार्मिकमिति किं वर्णयसि इति । ततः पुना रामो लक्ष्मणमवदत् । आम् ज्ञातम् । मत्स्यमांसलुब्धोयं बकः शनैः शनैः पदानि यत् निक्षिपति तत् मत्स्याविहिंसार्थमेव । अहं तु अन्यथा संभावितवान् । अरे लक्ष्मण अत इत्थं कथयामि । ' यथार्थतः स्वभाव परिज्ञानाय चिरकाल सहवासोऽवश्यमपेक्षितः । साधुः सरलस्वभावः सर्वमपि साधु मन्यते । सर्वमपि धवलं द्रवपदार्थं क्षीरं मन्यते । ततः चिरं सहवासे जाते यथावत् जानाति । अतएव पंडिता वदंति । " शीलं संवसता ज्ञेयं तच्च कालेन भूयसा " इति ।

# अतिलोभो विनाशाय ।

——0000——

लोभं प्रधियः किमर्थं दुर्गुणं वदंति तत् किंचिद्विवृणुमः । लोभ एव अस्मिञ्जगति मनुजन्मनां कायानघ्यूषिवान्महानवगुणोऽस्ति इति न केवलं देहभृतो वदन्ति किन्त्वाद्यशंकराचार्यादयो मीमांसाचार्याः तथैव मन्यन्ते । जीवनाशा धनाशाच जीर्यतोऽपि न जीर्यति इति नीतिशतकप्रणेत्रा भर्तृहरिणा तारस्वरेणोच्यते । लोभो नाम शरीरिणाम् असंयम्यमानो मनोविकारः । देहवत्सु लोभ सदृशाः कामक्रोधमोहमत्सरादयोऽन्येपि अजेया मनोविकाराः सन्ति । एते सर्वे विकाराः प्रयत्नतः दुर्दमनीयाः आक्रामन्ते । किंतु अयं लोभः अदत्तावकाशः नियंत्रणस्य । यतः एते विकाराः मनसः व्यापाराः सन्ति ततः ते यावज्जीवं अविरतोद्यमा वर्तेरन् । तानि तानि देहव्यंगानि मनुजेन प्रयत्नतः तथा दृढनिश्चयेन दूरीक्रियन्ते । किंतु न तस्य नरस्य मनोव्यापार–नियंत्रणे गतिः । यथा ते सर्वे नियंत्रणातीताः । केन नाम नरेण रुधिराभिसरणनिरोधः कृतः । यथा रुधिराभिसरणं तथा लोभो नाम मनोव्यापारोऽपि दुर्दम्यः । आलोक्यतां तावद्यदाद्यशंकराचार्या आहुः । तत्र भवद्भिर्विरचिते चर्पटपंजरिकास्तोत्रे लोभस्याशेति नामांतरं कृतम् । पाश्चिमे वयसि वर्तमानमपि नरं न आशा परित्यजति । भृतिदानुसारिणी योषिदिवादेहान्तं तमनुसरतीयमाशा । त्यक्तपरिवारमपि न तस्याशा नाम सपत्नी तमायाचितमनुयाति । कदाचिन्नरः संसाराङ्गारततः प्रियजनान्परित्यज्य काषायांबरं वसित्वा चतुर्थाश्रममाश्रयेत् किन्तु तत्रापि तं नरमाशा कृतापराधं मत्वा पुण्यकृतं मत्वा वा तमनुसरेत् । भार्या तु नरं तस्यादेहपातमनुसरति । उपरते च तस्मिन्किंचित्कालमाक्रुश्य धवं परित्यक्तुमन्विच्छति । नेदृश्यवस्थाऽऽशायाः । अनयाऽऽशयाऽवसानं प्राप्तोऽपि नरो जीवितुमपेक्षते ।

लोभो नानाविधः। रमालोभस्तथा रमणीलोभः क्वचिन्नरं प्राणघातं-नाशयति। सर्वश्रुता हि सीतावांच्छिनो रावणस्य कथा। भगिनीप्रेरितो-सौ सपरिवारो लोकान्तरं प्रविवेश। रामालोभाकृष्टोसौ पतंगदीपिकान्यायेन ममार। केवलं वनितावासीर्षाभिभूत इन्द्रो हल्यापतिशप्तः सहस्रच्छिद्रत्वं गतः। तिलोत्तमामोहेन सुन्दोपसुन्दौ पंचत्वं गतवन्तौ। भस्मासुरनाशिनीं मोहिनीं दिदृक्षुः शूली सदस्यैरुपहास्यतां जगाम। विश्वामित्रेण ऋषिणा कृच्छ्रादाच-रितानि तपांसि कांतालोभेन तत्यजिरे। अन्यभार्यामोहिताः केचिद्गतराजवैभवा नृपा अर्वाचीनकालेऽपि भरतखण्ड एव विद्यन्ते। एभ्य उदाहरणेभ्यः कियान् श्रेयस्करोसौ लोभोस्ति तत्कोऽपि नरो जानीयात् अनेन लोभो नाम विनाशा-यैवेति ज्ञायतैवेति अलम्।

---

महतामाशीर्वचनं।

क्रमांकः
३७२
१८५८

## श्रीशंकरो विजयते।

श्रीमज्जगद्गुरु श्रीशंकराचार्य संस्थानमठ

संकेश्वर व करवीर

मुक्काम द्वादशीक्षेत्रात् ( बार्शी )

श्रीमत्सु मधुरवाणीसंपादकमहाभागेषु सांजलिबंधं सानुरागं चावेदयति। अध्यगामि युष्माभिः प्रहितं श्रीसंकेश्वरकरवीरमठसंस्थाने मधुरवाणीसध्रीचीन पत्रम्। निवेदितं श्रीचरणचरणाणोंजपरिसरेषु। भवत्पत्रस्थविज्ञप्तिहृदयं साक्षात् कृतं च श्रीचरणैर्मधुरवाणीपत्रनिचयम्। सर्वतः प्रसृमरेऽस्मिन् युगधर्मे वैदेशिक विद्याविवशीकृतांतरंगा इव अस्मच्छास्त्रसुकृतचेतसोप्यहर्निशं प्रयतंते प्रनष्टुं किल सनातनं धर्मं। किमु वक्तव्यं द्विषंति हि संस्कृतभारतीं धर्मसंसर्गादेवेति। सर्वथा विषमतमे काले सम्यगुपक्रांतं तत्र भवद्भिर्गैर्वाण्यां वाण्यां मधुरवाण्याः प्रकाशनं। तेनास्माकं जीवातुभूतस्य सनातनधर्मस्योज्जीवनंचेत्यवबुध्यातिमात्रं धिनोत्यंतरंगं श्रीचरणानां। तादृक्षाशीर्वादमनुभवंतो मधुरवाणी सुचिरतमप्रका-शनेन समुत्सारयेयुर्धर्ममालिन्यमिति बलवदाशासे। किमधिकेनेति शम्।

श्रीचरणनियोगानुवर्ती.

जेरे इत्युपाह्वः श्रीपादशर्मा।

# अभिनंदनम् ।



गीर्वाणवाणीप्रसारणपरायणाया मधुरवाण्याः श्रेयसे करुणया बद्धपरिकराः परमोदारा बहवोनुकरणीयामितरैरादरणीयां सरणिमनसुरंति । तेषामविस्मरणीयामुपकृतिं स्मारं स्मारं शतशो धन्यवादान् प्रयच्छामः । तेषु किल हंत सुप्रसिद्धाः अखिलेपि दक्षिणे भारते नैजामराज्यांतर्गतश्रीकृष्णवेणीतरंगिणीपरिपूतचित्तापुराधिवसतयो महानुभावविद्वच्चक्रवर्ति श्रीमदुत्तरादिमठाधीश्वरश्रीमत्सत्यपराक्रमश्रीचरणपौत्राः शमदमोपेताः विद्वद्वरेण्या वांईइत्युपाव्हाः श्रीश्रीनिवासाचार्यमहोदयाः मधुरवाण्याः पोषकतामंगीकृत्य गीर्वाणवाण्यामनितरसाधारणं प्रेमगरिमाणमाविश्चक्रुः। एवमेव विजयपुराधिवासिनो बी.ए.एल्.एल्.बी. उपाधिधारिणोंत्रेकरेत्युपाव्हाः श्रीराघवेंद्राचार्यशर्माणो महाभागाः सरससुरभारतीप्रसारप्रणयिनो मधुरवाण्याः श्रेयोभिवृद्धये अनुग्राहकतामंगीकृत्यातितरामुपचक्रुः। तथा श्रीमद्गलगलीकुलालंकारा बी. ए. एल्. एल्. बी. पदवीधराः प्रासिक्यूटर इन्स्पेक्टरमहोदया अप्पणाचार्यशर्माणो विजयपुरकृतवसतयो मधुरवाण्यां प्रेम्णा सहायकतामुररीचक्रुः । एवमेव श्रीमंतो जेनापुरेत्युपनामानः श्रीभीमाचार्यमहोदयाः आयुर्वेदनिष्णाताः श्रीरंगनाथराववैद्यमहाभागाश्च देववाण्यामनुपमेनानुरागेण सहायकतामभ्युगम्य मधुरवाण्या श्रेयसे प्रायतंत । आर्याः प्रियपाठकवरेण्या एवमेव यर्हि सर्वे प्रयतेरन् तर्हि मधुरवाणी परं श्रेयः समवाप्य निखिलेपि जगति आदर्शरूपा पत्रिकेयं स्यादित्यत्र नास्ति संशयलवोपि । प्रत्येकमंकैकमपि ग्राहकं ग्राहका यदि संगृण्हीयुस्तर्हि महीयानेवोपकारो मधुरवाण्यां कृतः स्यादिति अवश्यं तथा कर्तव्यमिति च सांजलिबंधं साग्रहं सादरं सविनयं सबहुमानं च संप्रार्थयामहे ।

स. संपादकः



# वीरकुमारी तारा ।

अस्ति कर्णाटके पुराविगतयवनराजधानीपदं विजयपुरं नाम नगरम् विशिष्टैर्विस्मयावहैर्गोलगुमटादिभवनैर्भग्नावशेषैर्दुर्गपरिखादिभिश्च संप्रति अपि देशविदेशगतजनविश्रुतं वर्तते । ततोपि बहुपुरातनकाले वातापिपुरीयचालुक्याधिराज्यसमयेपि तत्र सुप्रसिध्धो वीराग्रेसरः कश्चन मांडलिकेषु परिगणितः केशववर्मा नाम राजकुमारो वीरनरपतेर्जगज्जंतुश्चक्रवर्तिनः पुलकेशिमहाभागस्य शूरकेसरिणो बांधव्यमुपगादितोवांतरसेनाधिपत्यनियुक्त आसीत् । स च बहुषु संग्रामेषु प्रकाशितपराक्रमश्चातस्यैवैकः कोपि दायादो मदनवर्मानाम परनारीसंभोगलालसः पराक्रमविधुरोऽनवरतमदिराप्राशनप्रनष्टसारासारविचारस्तादृशपरिवारपरिवृतो दिवानिशं स्त्रीरत्नान्वेषणकुतूहली निविधकपटतंत्रनिर्माणपरायणो भ्रमतिस्म एकदायमेकाकी सविधं एव गिरिगव्हरप्रदेशे विविधतरुवृंदसांद्रे स्वमित्राणि पंचषाणि उपवेष्टुमुपदिश्य किमपि रमणीयं तपोवनमुपागच्छत् । निशीथः समयः । प्रशांता नीरवा च रजनी । चलत्सलिला सरिद्वरा घटप्रभा कल्लोलानां कलकलारावेण मधुरतरं किंचिदिव शांतताभंगमाचरितुं समुत्कंठेव संलक्ष्यते स्म । तरंगिणी सा गिरिपार्श्वतः प्रवहंती उभयतटारूढविविधतरुवृंदविराजमाना सुमधुरसुविमलसलिला तापत्रयोत्तप्तहृदयानपि कंचित् कालमपि प्रशांतहृदयान् करोति स्म । प्रदेशोयं वशिष्ठाश्रम इति कदंबवनमिति च पुराणेषु संवर्णितः सुप्रसिद्धश्च । संप्रत्यपि कपित्थतिंत्रिणीमहीरुहकंदरो घटप्रभाभासुरो ऋष्याश्रम इव द्योतते । समये च तस्मिन् कदंबवनं विलसत्सुरभितुल-

सीतरुवृंदमनोहरं सुगंधकुसुमाकरतरुलताश्रयः मंत्रोद्गारिशुकपिकसारिकाश्रय-विविधशाखोद्भासितरुवृंदसांद्रं परमपावनमासीत्। पुराणेषु वसिष्ठाश्रमतया संवर्णितोपि वसिष्टमुनिदिदृक्षया समागतानां हृदयानि सामान्यतो निराशाभग्नान्येव संभवंति स्म। कलिकालकलुषितस्वांतानां चतुराननांगसंभूतः कलशोद्भवो मित्रावरुणनंदनो वा वसिष्ठः कथं कुतो वा संदर्शनेन नयनानंदनो भवेत्। कालेयकलुषचक्षुषामगोचरः क्वापि गिरिगव्हरेतपस्तप्यन् स्यात्। आर्याः प्रियपाठकमहोदयाः दुर्व्यसनलोलो मदनवर्मा निशीथे तपोवनं संप्रविष्टः कामपि मनोनयननंदिनीं संददर्श सा च पुंजीकृतसौंदर्यराशिरिव वराप्सरोरूपा वयसा च षोडशवर्षदेशीया सुवर्णवर्णा वीरकुमारी तारा। तामपहर्तुमभिलषन् मध्यरात्रे समुपासर्पदयं कामातुरो नराधमः पापः। दृष्टा च सा सुगंधभराहूतमिलिंदानि सुंदरतराणि कुसुमानि राशीकृत्य करंडिकायां अग्रतः संस्थाप्य मालाग्रथनकर्माणि प्रवृत्ता मंजुलरवेण गीतेन पशून् पक्षिणश्च परमानंदयंती स्वयं च परमानंदनिमग्ना शिलातलमेकमलंकृत्य समुपविष्टासीत्। सहसैवाग्रतः समुपस्थितं मदनवर्माणमुद्वीक्ष्य संभ्रातापि वीरकुमारी धैर्यमवलंब्य किमालपति किमाचरति किमयमेकाकी उत परिवारपरिवृतः सर्वमपि केवलं तर्कयंती तूष्णीमासीत्। ततश्च स समुपसृत्य अयि मनोहारिणि तारे धन्येयं रजनी यदहं स्वर्गीयाप्सरोरत्नधिक्कारदक्षं असदृक्षं रूपं प्रत्यक्षीकृतवान्। सुमंगले तवांगसंगप्रदानेन कृतार्थय माम्। अहमस्मि वीरकेसरिणः पुलिकेशिसार्वभौमस्य सेनापतिः मंडलेश्वरश्च। विजयपुराभिधाना मे राजधानी श्रुतपूर्वास्यास्तव। तत्र सुंदरे मंदिरे स्वामिनीं विधाय त्वां दासीभावमुपगतः समुपस्थातुमभिलषामि। नाम्ना मां मदनवर्माणमाहुरिति चंचलाक्षिभ्रूविक्षेपमाचरन्नब्रवीत्। सधीरमाह

सा ललना। राजकुमार योस्तु कोस्तु वा भवान्। पिता मे सविधे एव श्रीकृष्णवेण्यास्तरंगिण्याः ससस्रोतःपरिपूते वीरकपिक्षेत्रे कमपि मंत्रजपमनुष्ठितुमुद्युक्तः। प्रायः पर्यवसितानुष्ठानः श्वः परश्वो वा पुनस्तपोवनमिदमलंकुर्यात्। तदागमनानंतरं समागत्य भवान् भवदभीप्सितमाचष्टां। अवला बाला तदभिमतिमंतरा कथमहं भवेयं पाणिगृहीती। तमोबहुला निशीथिनी। महर्षिसंचारपूतं तपोवनं। अहमपि भगवत्या महिषासुरमर्दिन्या दुर्गायाः प्रातः पूजोपहाराय हारमिमं रचितवत्यास्मि। ततः पर्णकुटीरे निद्रासुखमनुभवामि। अपसर्पतु भवानित इति। ततः स खलो मनसि किमपि विचिंतयन् निष्क्रम्य तस्मात् प्रदेशात् स्वमित्रावासभूमिमागच्छत्, तानुवाच। भोःसखायः निर्मक्षिकं तपोवनं। केवलमेकाकिनी तारा नारीमणिः। अतो रभसाकर्षणे दूषणे च विघ्नकरणाय न कोप्यत्र भवति। अतो वयं पंचषा अपि युगपदेव तस्याः समीपमुपसर्पाम प्रहारभीता भवेदेवेयमस्माकमनुकूला नास्त्यत्र भीतेरवकाश इति मदनवर्मणो वचोजातमुपनिशम्य मित्रेषु कश्चनाब्रवीत्। रे रे मा साहसं कुरुत। वीरकुमारी सा शस्त्रनिकरेण प्रहृत्य नः यमनगरातिथीनेव कुर्यात्। न केवलमन्यथा कुमारीमेकाकिनीं ललनां तपोवने निर्जने विहाय गंतुं अभिलषेत् पिता। विचारयत किंचिदपि। शस्त्रप्रहारपरंपरया प्रहृतेष्वस्मासु यमनगरगामिषु किं लभ्येत। अंगविकलेषु पतत्सु वेदना अनुभवत्सु कः स्यात् चिकित्सिता। अत एकाकिनीनिवासादेव तस्याः शौर्यमपारमुपलक्ष्य गंतव्यमितोस्माभिरधुनैव। परापतिते तस्मिन् तपस्विनि जनके विहितपथैव तद्विवाहार्थं प्रयतनं श्रेयसे भवेत् इति। वस्तुतो हितोपदेशं अपथ्यमेव मन्वाना ते आहुः। किमरे ईदृशः सुखकरः प्रसंगो न लभ्यते सर्वथा। अवलां बालां तां

पंचषाः सशस्त्रा वयं निगृहीतुं किमसमर्थाः स्याम। केवलमयं भीतो जल्पति। अत एतदुदीरितमनुपयुक्तं। सत्वरमेवोत्थाय कार्यसिद्धिं प्राप्स्याम इत्यामंत्र्य तत् काल एव सर्वेपि निशितशस्त्रहस्ताः कदंबवनोपगतं तपोवनमभ्यागच्छन्। तावदियं तारा समापितहारा धीरा पर्णकुटीरे समास्तीर्यास्तरणमधिशिश्ये। मदन वर्मणो नामश्रवणात् किंचिदिव भीता परांगनासंगलोलुपतां खलस्वभावतां साहसप्रवणतां पापप्रवृत्तिं च स्मृतिमभिनीय तूष्णीं प्रयातोयं परिवारपरिवृतः किमुपेयात् उत जनकागमनानंतरमेव तं मामुपयाचितुमागच्छेत् आहो स्वित् सैन्यमपारमानीय मामुपेत्य स्वसमीहितं साधयेत् इत्यादिविविधचिं-तनपरायणा विनिद्रा विलुठतिस्म। निस्सारितांतरांधकारो दीपः प्रज्वलन् तस्या धैर्य मुद्दीपयतिस्म। सा च मनोहरा बाला सहसैवोत्थाय निशितमेकं करवालं तूणीरं च शरपूर्णं दिव्यं धनुश्च पार्श्वतो गृहीत्वा पुनः शिश्ये। ततो ह्यचिरादेव पंच-षाणां पदध्वनिराश्रावि। युद्धसन्नद्धा समभवद्बाला। नृशंसो दुराचारो द्वारदे-शमभ्येत्य तारे मनोहारिणि द्वारमपावृणुष्व इत्यभाणीत्। चपला सा बाला अरे नरपशो राजवंशकलंक तूष्णीमितोपसर्प। मूर्खा दुराचारिणोस्य सहायकरणे किं न लज्जध्वम्। यर्हि सत्वरमितो न गच्छथ तर्हि वः सर्वेषां सर्वशो रक्तेन भूमि-मिममार्द्रीकुर्याम्। इत्याक्रुश्य सा सशरं तूणीरं बाहूमुले निधाय भास्वरं करवाल मतिनिशितं करे गृहीत्वा बहिरुपागता तेष्वेकं तत्क्षणेएव पातयांचक्रे। मा साहसं कुरुत यमनगरातिथयो भवेमेति यः प्रागाह स एव छिन्नविछिन्नगात्रो गतप्राणो न्यपतत्। ततश्च सा महिषासुर-मर्दिनी भगवती दुर्गेव रक्तनयना रुषातिपरुषा अचिरादेव सर्वानपि संहृत्य मदनवर्माणमतिविचित्रयाहिंसया तत्कृतदुराचारान् स्मारयंती नेत्रे नासिकायां कर्णे हृदये उदरे एवमेव तत्र तत्र मर्मसु च निशितकृपाणेन प्रहृत्य गतप्राणम-

करोत् । पर्णकुटीरपरिसरप्रदेशो रक्तमयो विच्छिन्नगात्रमलिनश्चाभवत् । ततस्तारा सलिलप्रवाहमभ्येत्य सरिति प्रक्षालितकरालकरवालकरा च निर्भया किंचन शिलातलमलंचकार । तावच्च प्राभातिको मातरिश्वा मंदमावहन् निशांतसमयम-सूचयत् । मूर्खो व्यसनाधीनो मदनवर्मा नरपशुः स्वं पराक्रमिणामलंकारस्य पुण्यात्मनो जगज्जेतुः पुलकेशिमहोदयस्य सेनापतिं ब्रूते निर्लज्ज इति स्वं विजय पुराधीश्वरं मंडलेश्वरं च ब्रूते क्लीब इति तमपहसंती विजयोत्साहपरवशा पातकि प्रायश्चित्तविधानपरितुष्टांतरंगा पुनः कोपि किं परापतिष्यतीति परीक्षणाय कदंबवनं परितः संचरंती कमप्यपश्यंती पर्णकुटीरभागात् । ततो भगवतः सहस्रकिरण-स्यागमनमचिरादेवेति संसूचयन्नरुण उदियाय । तारा स्नानसाधनमुपादाय कृत-पादशौचा निर्मले सलिलप्रवाहे समवागाहत । सुस्नाता धृतधौतवसना गृहीत-पूजासाधना भगवतीं दुर्गादेवीमभिवंदितुं गिरिशिखरगतं देवालयमगच्छत् । तत्र शुचिर्भूतः कोपि महीसुरो लक्ष्मीसूक्तं परिपठन् षोडशोपचारैः संपूज्य देव्या तारया विरचितं हारं समर्प्य देव्यै देव्याः प्रसादं नारिकेलफलं निर्माल्य-पुष्पाणि मालां सौभाग्यद्रव्यं च मंगलं भवतु इति वदन् तारायै समर्पितवान् । प्रसादादि सभक्ति गृहीत्वा तारा प्रणम्य देव्यै विप्राय च संप्रार्थ्य पुनराश्रममुपागच्छत् । ततश्च प्रहरादर्वागेव सुधांशुशुभ्रजटावलयो वल्कल-वस्त्रधरो वृध्धः कश्चन करगृहीतजलपूर्णकलशः पार्श्वनिक्षिप्तकृष्णाजिनः करकलिताक्षमालया रामनामजपं संसूचयन्नागात् । एत्य रक्तमांसा-स्थिविछिन्नगात्रदूषितं तपोवनं निरीक्ष्य संभ्रांत इव तारे इत्युच्चैरुदगिरत् । तद्वचनश्रवणसंतुष्टा तत्क्षणे एव बहिरुपागता तारा पितृचरणयोरुपरि पतित्वा तध्धस्ततः कलशादि वस्तुजातमुपादाय यथास्थानं निहितवती । शुचौ तपो-वनप्रदेशे कृष्णाजिनमास्तीर्य उपवेष्टुमभ्यर्थयांचक्रे । उपविष्टं तं तातमनामयम-

पृच्छत्। मंदंमंदमुपहसन्नेव स वृद्धः पर्यपृच्छत्, किमेतत् रक्तमांसादिकामिति मनोनयननंदिनीं नंदिनीं तारां। सा यथाभूतं सर्वमपि वृत्तांतं समवर्णयत्। वृद्धः स तदानीमेव पत्रिकामेकां विलिख्य श्रीमंत विजयपुराधीश्वराय मंडलेश्वराय केशववर्मणे संप्रेषयामास। तत्र चेत्थंलिखितमासीत्। स्वस्ति श्रीमद्विजयपुराधीश्वराय वीरनरपतये केशववर्मणे मंडलेश्वराय जगद्विजयिसामंतनरेश्वरशिरस्समाराधितपदारविंदस्य श्रीपुलकेशिमहाभागस्य चालुक्यवंशविभूषणस्य सेनापतिपदे नियुक्ताय निरंतरं निरंतरायं अनंतवेदोक्ताशीर्वादपुरस्सरमिदमावेद्यते। अहमस्मि कश्चन महीसुरो वेदवेदांगपारगो विदितवेदांतरहस्यो निखिलपुराणगणाध्येता नैष्ठिकब्रह्मचारी श्रीकृष्णशर्मानाम तपस्वी वृद्धः। अहमेकदा श्रीरामेश्वरदिदृक्षया दक्षिणे देशे पादचारी प्रवसन् जनप्रचारविधुरे कांतारे कावेरीतीरे दूरत एव कस्याश्चन अनाथाया इव अबलाया रोदनध्वनिमशृणवम्। तं निशम्य किमिदमिति जिज्ञासुः तत्र तत्रान्वेषयन् रोदनध्वनिं पुनरनाकर्णयन् चकितो यदा भ्रमन् कावेरीतीरमागाम् तदा मंदहाससुंदरं सुवर्णवर्णभासुरं शिशुमेकमपश्यम्। ततः किमिदमाश्चर्यमिति सर्वतश्चक्षुरक्षिपं तदा अगाधे सलिलप्रवाहे मज्जंतीं कामपि नारीमपश्यम्। तत्क्षणे एव तामुद्धर्तुमनाः प्रविश्य सलिलप्रवाहे मग्नामेव तामनालोक्य समुद्धर्तुं प्रयातोपि चिरायान्विष्यापि तां नालभे। तल्लाभमंतरा न सर्वथा प्रत्यावर्तेयमिति निश्चित्य साहसैकप्रीतिर्यदातिशयं प्रयत्नमकरवं तदा तस्या केशपाशमवलंब्य समुध्धृत्य तीरमानयम्। तामुछ्वासयितुं बहुधा प्रयत्यापि अपूर्णमनोरथः किंकर्तव्यता मूढो मृत्युंजयमंत्रादिना किमपि फलं लभेतेति प्रायते। तथाप्यलब्धाभिलाषो विगतप्राणामेव सम्यगवलोक्य तां पुनस्तथैव सरित्प्रवाहे निपात्य शिशुसमीपमागच्छम्।

तत्र शिशोः समीपे कामपि पत्रिकामेकामवलोक्य कुतूहली तामपश्यं । अहमस्मि काचन दुर्भागधेया नारी शिशोरस्य माता प्रियवल्लभं संग्रामहतमाकर्ण्य तद्विरह-मसहमाना जगद्रक्षकलक्ष्मीपतये समर्प्य कन्यारत्नं कावेरीसलिलनिमग्ना प्राणान् परित्यज्य पतिसालोक्यमाधिगंतास्मि । यः कोपि वा शिशुमेनमवलोकयेत् स एव कारुणिको भूत्वा संरक्ष्य कस्मैचिदपि वीरकुमारायैव समर्पयेत् नाथमायेति समभ्यर्थये इति । ततोहं शिशुमानीय तपोवने संरक्षन् षोडशवार्षिकीं सरूपां शस्त्रास्त्रविद्यापारंगमामप्यकरवम् । वीरकुमारी भवतो नरकेसरिणः पाणिगृहीती भवितुमाकांक्षते । परमहमस्याः प्रतिकूलं दैवमपाकर्तुमनुष्ठानपरायणः कालमत्य-वाहयम् । परं कुलपांसुलस्त्वद्दायादी नराधमः पातकी परिवारपरिवृतो दूषयितु माकांक्षमाणो निर्जनं तपोवनमवलोक्य ह्यो निशीथे वीरकुमार्या तारया शूरया निशितासिप्रहारप्रहृतः प्राणानत्याक्षीत् । विदितमिदमस्तु भवते । सा तु वीरा तारा भवंतं पतिमन्विच्छति । प्रतिकूलं दैवमपि मंत्रानुष्ठानबलात् परास्तमेव । अत इतो यदुचितं तत्करोतु भवानिति । पत्रमिदमनुवाच्य स वीरकुमारो नरा-धमस्य विहितमेव प्रायश्चित्तमभवदिति सुमंगले मुहूर्ते वीरकुमारीं तारामवश्यं पत्नीत्वेनांगीकरोमीति शुभमुहूर्तमपि महर्षिकल्पैर्भवद्भिरेव सूचनीयमिति च हंते-दमतिप्रहर्षस्थानं महानेवानुग्रह इति च प्रत्युत्तरप्रेषणेन प्रहर्षयामास तारां तद्र-क्षितारं महीसुरमपि । मान्याः प्रियपाठकमहाभागाः वीरकंठीरवः केशववर्मा महीसुरानुमोदिते सुमुहूर्ते विजयपुरे तारापाणिग्रहणमहोत्सवमंगलं बहुविजृं-भणमकरोत् । धीरया शूरया सुरूपया प्रमदया तारया समं सरससंल्लापसुधारस-मास्वादयन् विविधविलासरसिकः केशववर्मा प्रमोदगिरिशिखरस्य परां कोटि-मधिरूढः कालमतिवाहयन्नासीत् । वृद्धो महीसुरः कृष्णशर्मापि कृतार्थमात्मानं मन्यमानः तपस्तपस्यन् भगवदनुग्रहमवाप । वंगविजेतुश्चालुक्यकुलशेखरस्य

चक्रवर्तिशिरोमणेः कर्णाटकयशोरत्नस्य भारतभूरवेः पुलकेशिमहोदस्य सविधे केशववर्मणः सदृक्षा वीराः सहस्रश इति अतो विशेषतो वीरस्यास्य नाम इतिहासे विशिष्ठतया नाकर्ण्येतेति। यदि लभ्येत तर्हि संशोध्यमिति इतिहाससंशोधकेषु विज्ञप्य विरमामो विस्तरादिति शिवम् ।

आर्याः प्रियपाठकमहोदयाः तारायाश्चरित्रेणानेन प्राक्कर्णाटके यादृश्यो वीराः कुमार्य आसन्इति विज्ञायते।वीरै राजकुमारैः वीराभिः कुमारीभिश्च परिपूरितोयं कर्णाटकः कीर्त्या विभ्राजमानो देशविदेशवासिनां कर्णेषु ताटंकायमानो विभ्राजते स्म । एतादृश्यो बह्व्यः राजकुमार्यः पराक्रमशालिन्यो वीरराजकुमाररमण्यो भूत्वा रमणान्स्वर्गीयसुखसागरे विविधहावभावविलासैः रमयंति स्म । तथा खलानामनेकेषां पापिनां योग्यं शासनमपि विदधतिस्म । एतास्वेव प्रमुखतया परिगणिता वीरनारीमणिरियं तारा आधुनिकनवशिक्षणोद्यतानां नारीणामादर्शरमणी विधेया इत्यभिप्रायेण चरितमस्या वयं प्राकाशयाम । संप्रति तु शस्त्रादिविद्यावैधुर्येपि पातिव्रत्यरक्षादीक्षाभिः मदनवर्मसदृक्षान् शिक्षयितुमवश्यं दक्षाभिर्भवितव्यमित्यस्मदभ्यर्थना ।

स. संपादकः

पं.—बुर्ली श्रीनिवासाचार्यः



# परलोकविद्याप्रचारस्यावश्यकता ।

वयं भारतवर्षीयाः श्रद्धया आत्मनः अस्तित्वं तथा अमरत्वं विश्वसिमः। एतद्विषये बहूनि प्रमाणानि धर्मग्रंथेषु उपलभ्यन्ते । किन्तु अद्यतने चिकित्सा-युगे केवलं प्राचीनवचनैः जनानां संतोषो न भवति । अस्मिन् विषये अपि ते विज्ञानसदृशं प्रमाणं वांच्छंति । प्रत्यक्षमेव प्रमाणं मन्यमानानां एतेषां भौतिकशास्त्रपारंगतानाम् विश्वासः कथमुत्पाद्यः । एतावती महती आपत्तिः धार्मिकजनानामुपरि आपतिता प्रतीयते । ये च परलोकस्य अस्तित्वं विश्वसन्ति तेऽपि अस्मिन् विषये अतीव अनभिज्ञास्तथा उदासीनाः दृश्यन्ते । एतद्विषयकं तेषां अज्ञानं अनुकंपनीयम् । परलोकः कुत्रापि अस्ति एवमेव ते कथयन्ति । किन्तु तत्सम्बंधं स्वल्पमपि ज्ञानं प्रदातुं ते असमर्थाः अनुभूयन्ते । तत्र न वा पीयते न वा अश्यते इति विक्रमोर्वशीये उल्लिखितस्य विदूषकस्य वचनमनु-सृत्य पारलौकिकस्थितिः कल्पनामयी कर्मविरहिता च इति केषांचिन्मतम् । स्वर्गादिलोकांना अस्तित्वं स्वीकर्तारोपि केश्चित् वचनैः स्थूलदेहपातानंतरं तृणंजलौकान्यायेन शीघ्रं जन्मांतरंभवति इति प्रतिपादयन्ति ।

एवं सति मरणोत्तरावस्थायाः यथार्थ ज्ञानस्यावश्यकता सहजं प्रतीयते । तेनैव मतानां विभिन्नता अस्तं गमिष्यति । अन्येच लाभाः संभवेयुः । यतः परलोकज्ञानेन मृत्योर्भयं बव्हंशेन क्षीणं स्यात् तथा च तत्स्थितप्रियजनैः सह कृतेन संवादेन विरहदग्धानां महान् संतोषः समुत्पद्येत । जडवादखंडनाय अयमेव अनुत्तमः उपायः । अन्यथा ' यावज्जीवेत् सुखं जीवेत् ' इत्यादि चार्वाकवचनं अनुसर्तॄणां सूक्ष्मजगदस्तित्वविषये विश्वासः कथमुत्पाद्यः ।

पाश्चात्यपंडितैरस्य विषयस्य गरिमाणं मनसि कृत्वा तत्प्रचारार्थं च ते बद्धपरिकराः संजाताः । आंग्लदेशे एव शतशः परलोकविद्यासभा वर्तन्ते । अन्तर्राष्ट्रीयपरलोकविद्यापरिषदः अधिवेशनं प्रति तृतीये वर्षे भवति । भारत वासिनः एता वार्ताः प्रायः न जानन्ति । केचित् ज्ञात्वापि तदर्थं स्वल्पमपि कार्यं कर्तुं नेच्छन्ति । एतत् श्रुत्वा कस्य मनः न दुःखितम् स्यात् ।

...

सूत्रधारः—त्वामेव प्रतीक्षमाणस्य कथमधिक्षेपः क्रियते ।

नटः—( सविनयं ) एवं तर्हि आरभ्यतां परंतु किमारभ्यतां

सूत्रधारः—शृणु ।

एतस्मिन् समये कलिः किल बली कामादिभिः संवृतो ।
वेदांतश्रवणादि सर्वमकरोन्निर्वीर्यमुर्वीतले ॥
तेन व्यासपराशरप्रभृतिभिर्दीनै दयासिंधुभिः।
श्रेयस्साधनमभ्यधायि बहुधा श्रीकृष्णभक्तिः परा ॥ ४ ॥

तामिमां श्रुतिस्मृतिपुराणार्थमवबुध्य श्रीकृष्णभक्तिचंद्रिकाभिधानं निबंधं स एव कविर्निर्मितवान् । तमिममस्यां सभायामभिनीय प्रदर्शयावः ।

नटः—निबंधाभिधानं तु सुंदरं श्रीकृष्णभक्तिचंद्रिकेति ।

सूत्रधारः—

प्रायेणोत्तमवस्तूनां नामान्यर्थानुसारतः ।
सुवर्णमिति शीतांशुरिति कांतेचि च स्फुटं ॥ ५ ॥

अपि च ।

नाम स्फुटं स्फुरति कामधुगेव सद्यः ।
कृष्णेति लोकमुखनिर्गतमेव दैवात् ॥
श्रीमत्तदेतदुपसर्जनतामुपैति ।
यस्मिन् किमस्य सुभगत्वमुदीरणीयं ॥ ६ ॥

किंचेदं नामान्वर्थमिति स्पष्टमेव ज्ञायते । तथाहि ।

सद्यः श्रमं सकलमत्र शमं नयंती ।
चित्तस्य निर्वृतिमतीव च निर्वहंती ॥
श्रीकृष्णभक्तिरिह भूरि विवर्धमाना ।
स्पष्टं परिस्फुरति चंद्रिकया समाना ॥ ७ ॥

नटः—

शीलेन सर्वविद्यानां घनानामपि चार्जनं ॥
सर्वलोकप्रतिष्ठायां यतंते बहवो जनाः ॥ ८ ॥

तदेतदाश्चर्यं । यदयं कविः स्वहृदयं पुनः पुनः श्रीकृष्णभक्तिप्रवणं कुरुते ।

सुत्रधारः—उचितमेव कुरुते । यतः ।

अनेन खलु जंतुना सकलशास्त्रमभ्यस्यताम् ।
घनं विपुलमिष्यतां सकलसभ्यता लभ्यताम् ॥

परंतु

नतावदयमश्नुते हृदयसौख्यमात्यंतिकम् ।
न यावदवलंबते यदुपतेः पदांभोरुहम् ॥ ९ ॥

प्रत्युत । विद्यादित्रितयस्य ।

अर्जने बहवः क्लेशाः अर्जितस्य च पालने ।
असहिष्णुकृतेर्ष्यार्ति विषादश्च प्रतिक्षणं ॥ १० ॥

नटः—एवं तर्हि कृष्णभक्तिः सर्वेभ्यः किमिति न रोचते जनेभ्यः ।

सूत्रधारः—विचित्राः खलुः वासनाः पश्य ।

सर्वलोकपरितोषकारिणि ।
खधुनीविमल वारिणि स्थिते ॥
पूतिगंधवति पल्वलोदके ।
सूकरः सुखमतीव मन्यते ॥ ११ ॥

रोचते चैषा तिरस्कृत भवदुःखपरंपरेभ्यः धुरंधरपुरुषेभ्यः । तथाहि ।

नित्यं स्वधर्मविषये विहिताभिमुख्याः ।
चित्ते तृणीकृत गृहादिसमस्तसौख्याः ॥
श्रीकृष्णनाथपदपंकजबद्धसख्याः ।
श्रूयंत एव बहवो बलिभीष्ममुख्याः ॥ १२ ॥

एवं सति यदि केषांचिदत्रानादरस्तावतापि न काचित् क्षतिः । यतः ।

गोविंदसेवनमिदं यदि नाद्रियंते ।
दुष्टा निकृष्टमतयो विषयैकनिष्ठाः ॥
किं तावता ज्वरवतामरुचेर्न जातु ।
दुग्धस्य नित्यमधुरस्य विदूषणं स्यात् ॥ १३ ॥

नटः—अये कोयं कृष्णभक्तेरुत्कर्षे यद्वैदिकेभ्योपि कर्मभ्योमुमेवादरः क्रियते ।

सूत्रधारः—सिद्ध एवोत्कर्षः । सकलवैदिककर्मभूतत्वात् । यथा ।

संसारिणां सुखनिधावपि गोपनाथे ।
भक्तिः प्रभूतसुकृताचरितेन साध्या ॥
संजायते ज्वरवतां रुचिरुत्तमान्ने ।
नानारसायनकषायनिषेवणेन ॥ १४ ॥

अन्योप्युत्कर्षः श्रीकृष्णभक्तेः ।

अतीव खेदः खलु कर्मकाले ।
को वेद भावीनि सुखान्यमुत्र ॥
कंसारिसंसेवनकाल एव ।
संसारिखेदः प्रशमं प्रयाति ॥ १५ ॥

अपिच ।

यज्ञे पश्य विशस्यमानपशुभिः स्पष्टैव बीभत्सता ।
ग्लानिर्देहगता व्रतेन महता हानिर्धनस्यापि च ॥
श्रीकृष्णस्य निषेवणं तु विविधक्लेशप्रणाशं नृणां ।
सद्यः संतनुते मनश्च मनुते संतोषमंतेप्सितं ॥ १६ ॥

नटः—अये सेवनेन परोपसर्जनतया कालपरिकलने प्रत्येक्षतः क्लेशः परिहश्यते दूरापास्तः संतोषः श्रीकृष्णसेवने तु कथं वैपरीत्यमुच्यते ।

सूत्रधारः—अन्येषां सेवने क्लेशपरंपरैव ।
येषां परिक्लेशमयः पतिः स्यात् ॥
तेषां कुतः क्लेशपरिक्षयः स्यात् ।
कुतश्च शुष्कं तरुमाश्रितानां ।
विहंगमानामिह सौख्यलाभः ॥ १७ ॥

श्रीकृष्णस्तु पादनखाग्रमारभ्य यावच्छिखाग्रं परमानंदरूप एव ।
गोविंद एष सुखसिंधुरिति श्रुतीनाम् ।
संशीलनादवगतं शतशो महद्भिः ॥
किंचास्य चिंतनकृतां तनुरंचितैव ।
रोमांचितैर्भवति हर्षजलं च नेत्रे ॥ १८ ॥

ततश्च तमनुसरतां भक्तजनानां कुतः क्लेशसंभावना ।

नटः—अये तेषामपि विद्वेषिजनेभ्यः क्लेशसंभावना अस्त्येव ।

सूत्रधारः—नास्त्येव ।
क्षुद्रा अपि प्रभुजना निजसेवकानां ।
नान्याहितं परिभवं सहसा सहंते ॥
लोकत्रयादिपतिरेष दयासमेतः ।
किं वा सहेत परपीडनमात्मभक्तेः ॥ १९ ॥

अपिच— ब्रह्मांडकोटिघटनापटुरेष कृष्णः ।
कृत्स्नं प्रसादयति कांक्षितमाशु येषां ॥
लोकत्रयेपि च स कश्चन भाति धृष्टो ।
यो वक्रदृष्टिमपि ते पुरुषो विदध्यात् ॥ २० ॥

नटः—तथापि निंदंति बहवः !

सूत्रधारः—किं तावता । पश्य ।
मंदा विदधाति निंदां निपुणो हरिपादसेवनंतनुते ।
मंडूकेषु रटत्स्वपि मधुपः सरसिजरसं न संत्यजति ॥ २१ ॥

अपिच— कुर्वंति केपि यदि केशवपादभक्त
निंदां तथाप्यनपराधिन एव तेमी ॥

यतो बाला इव तेऽनभिज्ञाः ।

तथाहि— विश्रांतिमस्य हृदयांतरभिस्फुरंतीं ।
किं ते कदाप्यनुभवंति हि पुण्यशून्याः ॥ २२ ॥

नटः—न केवलं विश्रांत्यनुभवाभावः प्रत्युत विद्वेष एव प्रादुर्भवत्यमीषां संततसुखसंभारे भगवद्भक्तिप्रचारे तदाश्चर्यं ।

सूत्रधारः—किमाश्चर्यं । पश्य ।

नेत्रोत्सवो भवति सर्वजनस्य येन ।
सूर्योदयेन हतसंतमसोच्चयेन ॥
तेनैव दैवविहतस्य विहंगमस्य ।
नक्तंचरस्य नयनांध्यमुदेति गाढं ॥ २३ ॥

हरिभक्तौ हरिभक्ते च दुष्टानां द्वेषो भवतीति किमाश्चर्यं । यतः ।

पाखंडान्यवलंब्य भग्नमतयः प्रौढाभिमानान्धयः
स्वल्पज्ञा बहुदुःखिनः स्फुटतरं कालस्य भक्ष्याश्च ये ॥
द्वेषं ते दधते सुखात्मनि हरौ नाम्ना भवाब्धेस्तरौ ।
कांक्षाकल्पतरौ जगत्त्रयगुरौ विश्वंभरौजस्यपि ॥ २४ ॥

तदास्तामेतत् । किंतु ।

विविधविषयभोगभ्रांतचित्ताः शृणुध्वं ।
भवदुपकृतिहेतोः प्रब्रवीम्येतदुच्चैः ॥
सकलसुखसमीहापूरकः सेवकानां ।
यदुपतिरयमेकः सेव्यतां किं ततोन्यैः ॥ २५ ॥

( नेपथ्ये )

आः कोयमनल्पं जल्पति यदुपतिरयमेकः सेव्यतां किं ततोन्यैरिति ।

सूत्रधारः—अये प्रस्थानांतरं दृश्यते । तदलमावाभ्यां यदुपतिगुणकथनप्रियाभ्यामितोपसर्तव्यामिति ।

(निष्क्रांतौ । इति प्रस्तावना ) ।

श्रीशः शरणम् ।

# देवी वासंती

विजयतां महाराजः ।

## प्रकरणं १.

सकलभुवनतलललामायमाने रामणीयकपराजितपुरंदरपुरे करदीकृतनिजनिखिलैश्वर्यसारे महीमंडलविभ्राजमानाप्रतिमशूरैकायतनतयाऽन्वर्थितनामधेये-कर्णाटकक्षोणीकर्णताटंकायमाने महीशूरनगरे महता समारोहेण संप्रवृत्तो विजयदशमीमहोत्सवः । महोत्सवमेतमुद्दिश्य निजनयननलिनसफलीकरणकामाः सहस्रशः समाजग्मुर्देशविदेशतः सपरिवारा जनाः । इदानीमिवासत्यपि मार्गसौकर्ये विद्यमानायामपि विविधाननुकूलतायां प्रयाणप्रवणतं निदर्शयति स्म वैदेशिकानां नववस्तुदर्शनकौतुकं साहसिकतां तदितरेषां च राजभक्तिमतुलाम् । सर्वतो जनसंकुलेस्मिन्पुरे स्थातुमक्षमतयेव सुदूरमपससार निरुत्साहता । सहकारतरुनवपल्लवतोरणसमलंकृता वीथयः प्रजानां प्रेमसहकारमभिव्यंजंतीव । रंभाकोमलोरुतुलितरंभास्तंभा महोत्सवारंभसमारंभसमुत्सुकता विजयस्तंभायमाना दिदृक्षागतजंभारिस्तंबेरमशुंडां विडंबयंति स्मा प्रतिगृहद्वारं निहिताः पूर्णकुंभा हृदयपूरणावशिष्टं प्रजानुरागजलं बिभ्रतीव व्यदृश्यंत प्रेक्षकाणाम् । निबिडतरतोरणानि तेजस्विनोऽपरस्य प्रवेशासहनतयेव भगवतो मरीचिमा-

लिनोऽपि नावकाशमदुः किरणैः प्रवेष्टुम् । परमपूर्वोत्सवदर्शननिरतिशयोत्कलिकयेव चोरमार्गेणाप्यंतराधिगतावसरो भानुमान् करनिकरमर्पयामास। मंदमारुतांदोलिता अंबरतलचुंबिन्यः पताका गगनतलसंचारिणां सुपर्वणां राजधान्युल्लंघनापराधमसहमाना निवारयामासुरिव । गणनातीतजनजनितहर्षकोलाहलरवबधिरीकृतश्रवणं पुरंदरं पराभूय परापतदिव सुरलोकश्रीर्महीशूरपुरं पट्टकरणराजवरणमाकांक्षमाणा। इतस्ततः संचरत्सु पुनःसरभसं पुरोधावत्सु सम्मुखागतजनान्वेत्रलतया सनिर्भर्त्सनं निवारयत्सु राजभटेषु, उभयपार्श्वतः पंक्तिशो गच्छत्सु रश्मिनिग्रहव्याजेन महाराजदिदृक्षयेव वक्रीकृतवक्त्राणां वाजिनां नियमनव्यग्रेषु सादिषु दानजलधारानिर्जितशरणागतधाराधारपरंपराविभ्रमकारिणीषु करिघटासु निरीक्षणोत्सुकप्रासादतलारूढविलासिनीजनानुसृतगमनेव मंदंमंदं पुरः प्रयांतीषु दानोदकप्रस्रवणेन समुपार्जितमहाराजोपमासु, शौर्यादिगुणैरात्मनः पश्चिमतां निदर्शयत्स्विव पश्चात्प्रयाणोन्मुखेषु तुरंगमातंगपुंगवसमारूढेषु सामंतभूपालेषु वाद्यमानेषु मंगलवाद्येषु, नरीनृत्यमानासु वारविलासिनीषु, घोषयत्सु वेदमंत्रान्विप्रवर्येषु, संस्तुवत्सु बंदिषु, जयजयकारं कुर्वंतीषु भक्तिपरवशतया प्रजासु, कटाक्षविक्षेपच्छलेन प्रेम्णा नीलकमलमालां मंदस्मितरुचिविकिरणव्याजेन नवमाल्लिकास्रजमिवार्पयंतीषु, लाजाकुसुमवर्षणेन निर्मलमात्मनो मानसमुपहारीकुर्वंतीष्विव पौरललनासु दर्शनोन्मुखेष्वपि घनवृष्टिभारावनतमस्तकेषु याचकवृंदेषु, सरससंगीतभंगीमंगीकुर्वाणासु सुमकोमलांगीषु, शुभमाशीर्वदत्सु ज्ञानतपोवृद्धेषु, भृशमंतस्तप्यमानेषु बंदीकृतवैरिजनेषु, सादरमुपचरत्सु सार्थवाहेषु सुवर्णमालालंकृतस्य विजयनाम्नो वारणवरेण्यस्योपरि शोभमाने कनकमंडपे गृहीतमणिमयासनः विविधरत्नसारखचितकिरीटमंडितमौलिस्तनुरुचाऽमरीसमचारुचामीकरचामरग्राहिणीवीजनवायुविचलितचारुदुकूलो महाराजः श्रीमांश्चा-

मराजः प्रजासातिशयसत्कारप्रमुदितस्वांतः कमलमुकुलानुकारिणांजलिना वर्षीयसः सम्मानयन्, कुंदकुसुमरुचिस्यंदिना मंदस्मितेनाभिनंदयन्नखिलजनवृंदं प्रतिवीथि प्रत्यापणं सादरं स्वीकृतसत्क्रियः प्रतिगृहं लावण्यापहसिताप्सरोभिः सारसाक्षीभिः स्नेहप्रज्वलितेन दीपेन हृदयेन च नीराज्यमानः स्वाराज्यसुखमिहैवानुभवन्क्रमेणोपससाद प्रासादद्वारं प्रसादद्वारमिव राजलक्ष्म्याः।

आधोरणसंकेतसंकुचितोन्नमितजानुतले दंतिवरे निधाय पादमेकं यावदवतरति महाराजस्तावदेव प्रज्ञोत्कर्षपराजितसुरदेशिकः सचिववरः प्रज्ञाकरो नाम ससंभ्रमं सविनयमुपागत्य दत्तहस्तावलंबः शनैः शनैः प्रवेशयामास विशालतमं सुधर्मोपमं सभामंदिरम्। तदा मुहुर्मुहुः प्रजानां करताडनध्वानाद्द्विगुणितश्चालोकशब्दो लोकालोकाचलमतीत्य भगवंतं क्षीरसागरशायिनमुद्बोधयति स्म किल। पुरः प्रधावतां कुंचुकिनां करतलनिवारितोभयपार्श्वजनेन सांजलिबंधं प्रत्युद्गतो मणिमयसिंहासनमध्यारुरोह दिवाकर इवोदयगिरिशिखरम्। महाराजस्य निदेशेन यथोचितमासनमलंकुर्वाणेषु निखिलसभ्येषु मृदुहासविकसितकपोलतलो महीपालो व्याजहार भावगभीरां गिरम्। अयि गुणलोभ्याः सभ्याः समस्तशास्त्रपारदृश्वानोऽमात्यवर्याश्च अद्य खंडेंदुमंडलचूडामणेर्दोर्दंडगृहीतकोदंडमंडितरिपुमंडलस्याखंडलादिसुरजेगीयमानस्य चंडिकाप्रणयिनश्चामुंडेश्वरस्याखंडकृपाप्रभावेण प्रकृतिपेशलानां प्रकृतीनां सहजस्नेहमहिम्ना च निरंतरायमेवोदजृंभत सीमोल्लंघनमहोत्सवः। राजनिष्ठासमाचीर्णसत्कारभारेण धन्यमात्मानमाकलयामि। नेदं मानमस्या व्यक्तेः किंतु पूर्वराजर्षिप्रतिष्ठितसिंहासनस्यैवेति जानाम्यहम्। भवतां सहकारेण निर्जिता नैकशः प्रतिद्वंदिनः। अद्य निष्कंटकं राज्यमिदम्। वायच्छक्यं प्रजासुखाभिवृद्धये प्रायते प्रयतिष्ये च सोत्साहम्। प्रजा नाम सुरक्षिताः कल्पपादपायंते अरक्षिताश्च कल्पांतपावकायंते चेति त्रिकालतथ्यमिदं

तत्वं बाढं जानामि। न किल न वेद्मि प्रजापालनव्रतमुभयलोक श्रेयस्करमिति । निर्जरलोकसामीप्यसूचकया मनस्याशाकार्पण्यं शिरसि श्वेतिमानमुपजनयंत्या जरयाऽऽक्रम्यमाणोऽपि अचिरोपचितभवदीय भक्तिरुचिरोपचारसमुदितप्रमोदभररसायनोपभोगेन नवतरुण इदानीमस्मि संवृत्तः । पुरेव पुरोऽपि केनाऽपि हेतुना सिंहासननिष्ठा वो नैव शिथिलीभावमावहेदिति द्रढीयान्नः प्रत्ययः। राज्यांकुरवृध्धेः प्रजाप्रेम जलसेचनमेव निदानमिति विदंत्येव भवंत इति। ततो विरतवचसि राजनि प्रमोदातिरेकपरवशीकृतचेतसां निजानुमतिसूचककरतलध्वनिमुखरितदिगंतानां प्रजानां मुखेभ्यो युगपदेवाविर्बभूव तारस्वरेण ' विजयतां विजयतां महाराजः समेधतां समेधतां राज्यं चिरं जीयतां चिरं जीयतां कर्णाटकसिंहासनेन, इति गगनतलभेदी ध्वनिः। प्रियपाठकमहाभागाः धन्यः किल स राजर्षिः यः प्रजारंजनलब्धवर्णः। धन्यास्ताः प्रजा याश्च स्वप्रजा निर्विशेषमुपलाल्यन्ते क्षोणीभृता। धन्या सा वसुंधरा या राजन्वतीसंज्ञामति गच्छत्यसुलभाम्। अतो वयमपि संगिरामहे सममेव विजयतां कर्णाटकमुकुटमणिर्महाराज इति।



श्रीशः शरणम् ।

# श्रीमज्जीवाजिराव शिंदे महाराजानां

# राज्यारोहणमहोत्सवः ।



समशेरवहाद्दरेत्याद्यनेकान्वर्थविरुदभूषिता शिंदेकुलसिंधुकुमुदबांधवा धिषणाविशेषसमीकृतजीवाः सुधीजनोपजीव्या आत्मवदवगतसकलजीवा श्रीजीवाजिरावमहोदया महाराजकुमारा नवांबरमासस्य द्वितीयदिने वैभवविशेषेण राजसिंहासनमध्यारुहन्प्रथममेव समारूढप्रेमप्रभाभासुरप्रजामानससिंहासना इति नितांतमभिनंदामो वयम् । विशलेऽस्मिन्जगतीतले पुरा नैके समारुहन्सिंहासनं राजानः । अरोहंत्यधुना । आरोक्ष्यंति च पुरतः । परं यस्य सिंहासनसमाश्रयेण समकालमेव प्रजाः प्रजायंत महोत्सवप्रदर्शितसुखा अंतरप्यधिगतविप्लवविरहजनितपरमसुखाः तस्यैव सिंहासनारोहणं महोत्सवपदधिगच्छेत् । वयमामोदामहे नितरामिदमावेदयितुं यत् श्रीजीवाजीराव सिंहासनारोहणं सत्यं सर्वात्मना महोत्सव एवाभूदिति । महाराजोऽयं वयसा तरुणोऽपि विचारप्रगल्भः ' प्रजा मम सुहृदः । ता अपि मामाकलयंतु प्रियवयस्यमित्यावेद्य प्रजावात्सल्यमनितरसाधारणमाविश्चकार न केवलं वाचा किंतु कर्मणा च । वार्षिककरात्मना प्रजाभिर्दीयमानं षष्टिलक्षात्मकं धनं नैव जग्राह दीनदयालुरयम् । प्रत्युत प्रादाच्च दुर्गतानां साहाय्याय पंचविंशलक्षामितं द्रविणमुदारकुलचूडामणिरसौ । इयताऽप्यतृप्तमना महामना एष निजराज्यमंदिरस्याधारस्तंभायमानस्य ग्रामग्रामस्य समुच्चरणायेतरजनकल्पनातीतं

कोटिपरिमितं वित्तं वितीर्य परां कोटिमौदार्यस्य प्रकटयन्नाटीकेत शिबिरंतिदेवकर्णादिमहात्मकोटिम् । गणनासरणिमतीतगुणमणिगणविभूषणस्य सुधीजनकल्पतरोः साधुजनकुमुदसुधाकरमाधवरावलब्धजनुषो महाभागस्यास्यानश्वरमैश्वर्यं शांतामयं सुखमयमायुरप्याशास्महे वयम् । पूर्वक्रमानुसारं महाराजोऽयं धर्मस्य प्राचीनविद्यानामभिवृध्धये च प्रयतेतैवेति बाढंविश्वसिमः । धर्मप्रसाराधारभूतसुधाशनसरस्वतीसेवानिरतैषा मधुरवाण्यपि करुणाकटाक्षस्य गोचरीकरणीया महोदरांतःकरणेन महाराजेनेति सविनयमभ्यर्थयामः ।

श्रीशः शरणम्

लक्ष्मीचारुविलासलास्यलहरीरंगस्थलाभास्पदे ।
ग्वाल्हेराभिधपत्तने सुकृतिनां भाग्यात्प्रजानां चिरात् ॥
आरूढो बहुरत्नराजिखचितं सिंहासनं पावनं ।
श्रीजीवाजिनृपालमौलितिलको नित्यं विजेजीयताम् ॥ १ ॥
आरूढे ह्रि नृपासनोदयगिरिं जीवाजिजैवातृके ।
कामं रौप्यमयान्करान्विकिरति क्ष्मामंडले सर्वतः ॥
लीनः क्काऽपि दिगंतरालविततो दैन्यांधकारो द्रुतं ।
सर्वे लोकचकोरका अतितरां तृप्यंति तुष्यंति च ॥ २ ॥



श्रीमत्तां सिन्देकुलदिवाकराणां श्रीजार्जजीवाजीराव महाराजानां
पूर्णाधिकारमहोत्सवे–'शुभाशंसनम् ।



श्रीमहादजीमहाराजः

आसीन्नृपो विजितवैरिगणः प्रतापी
भक्तो हरेर्भजनपद्यविधानदक्षः ।
सिन्देकुलप्रभव ' माधवरावसूरिः
कीर्तिश्चिरं सुविदितैकपदापि येन ॥ १ ॥

श्रीदौलतरावमहाराजः

तस्यात्मजो जनकतुल्यपराक्रमाढ्यो
दान्तः प्रशान्त इह दौलतराव ' भूपः ।
योगिद्वयांघ्रिसमवाप्तमतिप्रकर्षो
राजन्वती क्षितिरभूत् सुखदा च येन ॥ २ ॥

श्रीजनकोजीरावमहाराजः

तस्मात्पुनः प्रथितशौर्यमलंकरिष्णु–
' रावाभिधो जनकपूर्व नृपाग्रगण्यः ।
जातः कुले विमलकीर्तिजुषि जगत्यां
दानार्चनादिनिरता जननी च यस्य ॥ ३ ॥

श्रीजयाजीरावमहाराजः

पुरे यस्याजस्रं वितुलगुणिनो गानचतुराः
श्रुतिव्याकृत्यादेरनुपमबुधा यत्र बहवः ।
द्विजा दानार्चाभिर्मुदितमनसः पंणुरनिशं
' जयाजीरावाख्यो नृपमणिरभूत् कर्णसदृशः ॥ ४ ॥

श्रीमाधवरावमहाराजः

शास्त्रं नयस्य विपुलं विदधे हिताय
विद्याकलासमुदयाय कृतप्रयत्नः ।
तोयप्रबन्धचपलादिसुखप्रदाता
' श्रीमाधवप्रभु ' रसौ जनिमाप वीरः ॥ ५ ॥

श्रीजार्जजीवाजीरावमहाराजः

सिन्देकुलप्रसितकीर्तियुतां नृपाणा
मेकीभवत्सुकृतमुद्गतमत्र मूर्त्या ।
तेनैष तन्नृपगुणान् सकलान् दधानो
' जीवाजिराव ' नृपतिर्विजयी सदा स्यात् ॥ ६ ॥
पूर्णाधिकारसुमहोत्सवमङ्गलार्ह
वीराग्रणीमुकुटरत्नसमर्चिताङ्घ्रेः ।
मातृप्रमोदवसतेः कृषक प्रियस्य
' जीवाजिराव ' नृपतेः कुशलं समीहे ॥ ७ ॥
या धर्मनीतिनिपुणैः परिपालिताऽभूद्
रामादिभिस्सकललोकहितावतीर्णैः ।
पाल्या मही गुरुनिदर्शितया दिशेयं
साम्बाकुटुम्ब ! नृप ! ते शिवमस्तु नित्यम् ॥ ८ ॥
श्रीमज्जीवाजिनृपतेरधिकारमहोत्सवे ।
विदुषाऽनन्तरामेण दत्ताह्याशीर्मुदे प्रभोः ॥

---

अनवकाशतया उर्वरिताः समस्यापूर्तय आगामिन्यंके प्रकाश्येरन् । क्षाम्यंतु पाठकमहोदयाः । अग्रिमेंके पूरणीया समस्या

**" सुधाकरश्शतं बाभाति वातायने । "**

पूर्त्यवधिः कार्तिकपौर्णिमांतः ।

# समस्यापूर्तयः ।

प्रकामं जल्पंतु व्यवहृतिविदूरेति कुधियः ।
मृतेत्याक्रोशंतु स्वयमहह जीवन्मृतिमिताः ॥
परं श्रुत्याश्लिष्टा सकलमुनिमान्या च विमला ।
सदा गैर्वाणीयं भुवि मधुरवाणी विजयते ॥ १ ॥

संपादकस्य

महामोदं दत्वा हरति नियतं दुःखमखिलं ।
विपाश्चिद्वर्याणां जनयति सुखं चाप्यविकलं ॥
खलान् सर्वानत्रानयति वशतां या निजगुणैः ।
जनानंदा सेयं भुवि मधुरवाणी विजयते ॥१॥

कोल्हापुरस्थ श्रीकृष्ण सदाशिव आराध्ये महाभागानाम् ।

'सुभद्रे त्वन्नेत्रे स्मरति मम चेतो नरहरे, ।
पृथापुत्रस्येदं कितवयतिवेषस्य वचनम् ॥
निशम्य प्रावोचत्परमचतुरा कृष्णभगिनी ।
निरूढा मच्चेतोभुवि मधुरवाणी विजय ते ॥ ३ ॥

स. संपादकस्य

विधात्री धर्माणां बहुमतसुधासारवचनै ।
मंदाधारानव्यानतिशयनिराधारवचनान् ॥
मुधा प्राज्ञंम्मन्यानपि च निजवश्यान्विदधती ।
सुधाहारैर्मान्या भुवि मधुरवाणी विजयते ॥ १ ॥

तोलूरराघवेंद्राचार्याणां तर्कप्रधानाध्यापकानां
महाराजसंस्कृतकालेज (त्रिवेंद्रम् ।)

सदा सर्वैः सेव्या सुकविरचितैः पद्यमणिभिः ।
स्वलंकाराढ्येयं सरसतरगद्यामृतझरी ॥
मुदा द्वैतीयीके शरदि पदमेषा निदधती ।
गुणैर्वृद्धा बाला भुवि मधुरवाणी विजयते ॥ १॥

उदयगिरिनिवासिनां घनपाठि शेषाचार्याणाम्

सुवर्णा सुश्लोका सरसपदविन्यासललिता ।
मनोज्ञालंकारैः कविजनमनोमोदजननिः ॥
निवासाह्लेभेसौ निजजनिमथो रामसुधियो !
यथार्थाख्या सेयं भुवि मधुरवाणी विजयते ॥

श्रीगवालियरमहाराजसंस्कृतमहाविद्यालये व्याकरणाचार्याणां
अनंत रामशास्त्रिणां घाणेकराणाम्.

विशेषश्लेषाढ्या मृदुपदयुता रीतिललिता ।
सुवर्णालंकारा श्रवणरमणीया ध्वनिहिता ॥
रसस्याधिष्ठानं रुचिरगुणसल्लक्षणगता ।
सुशय्यायोग्येयं भुवि मधुरवाणी विजयते ॥

पुष्पसरोवरनिवासिनां ( हुक्केरी )
श्रीसदाशिवशास्त्रिणाम्.

पुराणे या गीता श्रवणसुभगा व्यासमुनिना ।
सदैव श्रीदामोदरगुणगणौघप्रणयिनी ॥
विधात्री धर्माणां श्रुतिपथगता तापशमनी ।
मुरारेर्नामांका भुवि मधुरवाणी विजयते ॥ १ ॥

शहपुरनिवासिनां साधले शास्त्रिणाम्.

## सादरं स्वीकारः



पुण्यपुरात् विजयादशम्यां प्रकाशितो मीमांसाप्रकाशो नामसुंदरो मास-पत्रिकाविशेषोऽस्मत्करतलमलंचकार अग्रिमेऽङ्के तं विमृशिष्यामः ।

---

## वृत्तांतसारः

बेळगावनगरे नवंबरमासे २८।२९ दिवसयोः। कर्णाटकैकीकरणपरिषत् भविता। मद्रपुरीयो भूतपूर्वशासनसभासदस्यो डॉ. यू. रामरावमहोदयोऽध्यक्षपद-मलंकरिष्यति ।

त्रिचनापल्लीनगरे संस्कृतभाषाप्रसाराय संस्कृतसाहित्यपरिषन्नाम्नी संस्था प्रतिष्ठापिता । सर् सी पी रामस्वामि अय्यर महोदयः अस्या अध्यक्षा इति शृणुमः । संस्थेयं स्वोद्देश्यमचिरात् सफलीकुरुतादित्याशास्महे ।

गीर्वाणवाग्वर्धिनीसभा बेळगावनगरे आश्विनशुक्ल द्वादश्यां प्रावर्तत । विदुमाधवशास्त्रिणामाध्यक्ष्येण श्रीकरंबेळशास्त्रिणः उत्तिष्ठत जाग्रत प्राप्य वरान्नि-बोधत इति विषये व्याख्याय प्रहर्षयामासुः । आश्विनकृष्णद्वादश्यां श्री. गलगलीरामाचार्याणामाध्यक्ष्येण पं. धर्मदेवसिद्धांतालंकारविद्यावाचस्पतयः प्राचीना शिक्षणपद्धतिः इति विषयं प्रतिपाद्य प्रीणयामासुः सभ्यान् ।

पुण्यपुरे नवरात्रेषु वेदमहोत्सवो बहुविजृंभणमाचरितः। तदानीं वेदशास्त्रा-दीनुद्दिश्य बहव उपन्यासाश्च समभूवन् ।



# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रतिमासं शुक्लप्रतिपदि प्रकाश्यते ।

(२) अस्यां प्रत्यंकमेका लघुकथा सनातनधर्मविषयकः प्रबंधः धारावाहिनी कथा प्राचीनसाहित्ये चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटी-भविष्यन्ति । सनातनधर्मद्रोहिणो मतविद्वेषिणश्च लेखा नात्रकाशं विन्दन्तु ।

(३) पत्रिकाया अस्या अग्रिमप्रदेय मूल्यं वार्षिकं डाकव्ययसहितं रूप्यकद्वयम् । प्रत्येकस्याणकचतुष्टयं मूल्यम् । द्वीपान्तरवासिनां तु वार्षिकं मूल्यं पंचरूप्यात्मकम् । विना मूल्यमादर्शपत्रिका न प्रदीयते । तद्दिदृक्षुभिश्च चतुराणकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये पंचरूप्यकदातारः सहायकाः, दशरूप्यकदायिनः पोषकाः पंचविंशद्रूप्यकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्तः संरक्षका इति व्यपदिश्यन्ते ।

(५) मधुरवाण्यां नीरसा अशुद्धाक्षरा एकपार्श्वएवालिखिता लेखा नावकाशमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु संपादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रदास्यन्ते ।

(६) लेखा विज्ञापनानि समालोचनापेक्षिणो ग्रंथाः पत्रिकाविषयादि सकलं मधुरवाणी कार्यालय बेळगांव नं. १६९८ इति संकेतेन प्रेष्यम् ।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजवृत्तान्तादिकं देवनागरीलिप्यैव सुस्पष्टं-लिखनीयम् भूतपूर्वग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव विस्मरणीयम् । उत्तरमभीप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

प्राप्तिस्थानम्—

मधुरवाणी कार्यालय

१६९८ बेळगांव.

